





# ॥ ब्रह्मसूत्रभाष्यरत्नम् ॥

श्रीमत्स्वामिनारायणशिष्यश्रीमुक्तानन्दस्वामिविरचितम्



॥ वृत्तालये स भगवान् जयतीह साक्षात् ॥

संस्कृत-संशोधन-संसत् ग्रन्थमाला - १२४
श्री भगवद्रामानुजाचार्य-जन्मसहस्रमानोत्सवः- २०१७

# ॥ ब्रह्मसूत्रभाष्यरत्नम् ॥

## श्रीमत्स्वामिनारायणशिष्यश्रीमुक्तानन्दस्वामिविरचितम्

'श्रीस्वामिनारायणगुरुकुल कण्डारी' द्वारा
प्रदत्तेन साहाय्येन प्रकाशितमिदं पुस्तकम् ।

**संस्कृत - संशोधन - संसत्**
[केन्द्रम् : कर्नाटक-संस्कृत-विश्वविद्यालयः]
यादवाद्रिः (मेलुकोटे) - ५७१ ४३१

ब्रह्मसूत्रभाष्यरत्नम्

संस्कृत-संशोधन-संसत्

[केन्द्रम् : कर्नाटक-संस्कृत-विश्वविद्यालयः]

यादवाद्रिः (मेलुकोटे) - ५७१ ४३१

प्रधानसम्पादकः

डॉ. पद्मा शेखरः

कुलपतिः

कर्नाटक-संस्कृत-विश्वविद्यालयः



ISBN No. - 978-93-80900-59-9

प्रकाशनम्

संस्कृत-संशोधन-संसत्

(केन्द्रम् : कर्नाटक-संस्कृत-विश्वविद्यालयः)

(मेलुकोटे) - ५७१ ४३१

प्रथमसंस्करणम् – २०१६

पृष्ठसंख्या – ४००

प्रतयः - ५००

मूल्यम् - ५०/-

प्राप्तिस्थानम्

संस्कृत-संशोधन-संसत्, मेलुकोटे दू.सं. 08236-299841/299981

श्री स्वामिनारायण मन्दिर - वडताल दू.सं. 9925207502

श्री स्वामिनारायण गुरुकुलम् - कण्डारी दू.सं. 9879738212

दर्शनम् संस्कृत संस्थान, S.G.V.P. - छारोडी, अमदावाद. दू.सं. 02717-242141/42

अक्षरसंयोजनम्

श्री स्वामिनारायण-गुरुकुलम् - कण्डारी, वटपत्तनम् (गुजरात)

मुद्रणम्

संस्कृत-संशोधन-संसत्, मेलुकोटे.

गुणै [illegible] यदवतारा हि सकला, भवन्त्यस्यां क्षोण्यां शुभगुणगणालङ्कृततनोः ।
नियन्त [illegible] साक्षादसि तदवतारी सुखनिधे, मम स्वामिन्नारायण वसतु चेतस्त्वयि सदा ।।



## श्रीहरिकृष्णः परमात्मा

**श्रीस्वामिनारायणमन्दिरम्-वृत्तालयः**

सर्वेषामवताराणां कारणं च परात्परः । सोऽप्राकृतगुणैश्वर्यो विद्यते पुरुषोत्तमः ।।
ब्रह्मरूपैरप्युपास्यो मुक्तैरक्षरसज्जनैः । कारणं सर्वहेतुनां सर्वसाक्षी सनातनः ।।

॥ श्रीमते रामानुजाय नमः ॥



तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणां अन्तर्ज्वरमशीशमत् ॥

व्याचख्यौ व्याससूत्रं व्यतनुत भगवत्स्वामिनारायणस्य
स्तोत्रं छन्दोमयं यो ह्यकुरुत भगवद्वाक्सुधासङ्ग्रहं च ।



## ग्रन्थकर्ता महामुनिः श्रीमुक्तानन्दस्वामी

आत्मज्ञानादिपूर्णं गुरुरिति भगवान् मन्यते यं मुनीन्द्रं
तं मुक्तानन्दमीडे शमदमनिलयं साधुगोष्ठीगरिष्ठम् ।।

|| Vritalaye Sa Bhagwan Jayateeh Sakshat ||

*Academy of Sanskrit Research Series - 124*
*Sri Bhagavad Ramanuja-Janmasahasramanotsava - 2017*

# *BRAHMASOOTRABHASYARATNAM*

Shreemat Swaminarayanshishya Shree Muktanandswamivirachitam

**Academy of Sanskrit Research**
**[Centre : Karnataka Sanskrit University]**
**MELKOTE - 571431**
**Mandya Dist., Karnataka**

**BRAHMASOOTRABHASYARATNAM**
**Academy of Sanskrit Research**
[**Centre :** Karnataka Sanskrit University]
MELKOTE - 571 431

Chief Editor :
**Dr. Padma Shekhar**
Vice-Chancellor,
Karnataka Sanskrit University

**ISBN No. - 978-93-80900-59-9**

**Publisher :**
**Academy of Sanskrit Research**
[**Centre :** Karnataka Sanskrit University]
**MELKOTE - 571 431**
**Mandya Dist., Karnataka**

**Pages :** 400

First Edition : 2016
Copies : 500
Price : 50/-

**Available at :**
Academy of Sanskrit Research - Melkote, Mandya Dist., Ph.No. 08236-299841/299981
Sree Swaminarayan Mandir - Vadtal Ph.No. 9925207502
Sree Swaminarayan Gurukul - Kandari, Ph.No. 9879738212
Darshanam Sanskrit Sansthan, S.G.V.P. - Chharodi, Ahmedabad. Ph.No. 02717-242141/42
**Type set :**
Shree Swaminarayan Gurukulam - Kandari, Vadodara (Gujarat)
**Printed :**
Academy of Sanskrit Research, Melkote, Mandya Dist.

## कार्तज्ञ्यम्

**संस्कृत-संशोधन-संसत्, मेलुकोटे**

**डा. प्रो. वै. एस्. सिद्धेगौडः, निदेशकः**

**विद्वान एस. कुमार एम्.ए. (संस्कृतं), एम्.काम्., कुलसचिवः (आडळितं)**

**विद्वान् एस्. कृष्णन्, एम्.ए. (संस्कृतं), वि.वे.वेदान्ताचार्यः, संशोधनाधिकारी (प्रभारः),**

**विद्वान् आर्. नारायणैय्यङ्गार्यः, एम्.ए. (संस्कृतं), संशोधनसहायकः**

**श्रीस्वामिनारायण-गुरुकुलम् - कण्डारी, वटपत्तनम् (गुजरात)**

**विद्वान् एस्. नारायणः, एम्.ए. (संस्कृतं, कन्नड), अलङ्कारविद्वान्,**

**विशिष्टाद्वैतवेदान्ताचार्यः, रा.भा.वि.,**

**निवृत्त-संशोधनाधिकारी, सं.सं.सं. मेलुकोटे.**

---

## THANKS

***Academy of Sanskrit Research, Melkote***

**Dr. Pro. Y.S. Siddhegowda, Director**

**Vid S. Kumara**, M.A. (San.), M.Com., **Registrar (Admn.)**

**Vid S. Krishnan,** M.A. (San.), Vi. V.e. Vedanthacharya, **Research Officer** (Inch.)

**Vid R. narayana Iyengar,** M.A. (San.),

**Shree Swaminarayan Gurukulam - Gujarat**

**Vid S. Narayan, M.A.,** (San. & Kan.)

Alankara Vidwan, Visistadvaitavedantacharya, R.B.V.

Rtd. Research Officer, A.S.R., Melkote

# MESSAGE

It is a matter of great satisfaction to be a part of any worthy endeavor. The propagation of knowledge through research and publication of ancient texts is truly invaluable. Not only the scholarly world but any keen reader would be benefited with such a gift of knowledge on eternity.

The Academy of Sanskrit Research at Melukote has been involved in the worthwhile activity of research and publication individually as well as jointly to bring out publications of eternal value. The primary objective of this institute being research and publication concerning philosophy of Sri Ramanuja, by virtue of which it has to its credit a good number of publications. Now that the academy has come under the aegis of Karnataka Samskrit University, Bengaluru, new impetus is lent to strengthen its cause. It is a matter of pride and joy that the University is seriously involved in chalking out programs for the overall development of this academy.

Sri Ramanuja, born in the eleventh century AD, was a great apostle of a participative society and social equality. His concern for social cause had no boundaries and the impact of his teaching on the society; his temple administrative skills, his philosophical treatises and his compassion for the downtrodden are all but a few mile stones in his pursuit of the Supreme truth. His genuine effort in eradicating discrimination of caste and creed would be cherished. According to Sri Ramanuja, God is attainable by anyone irrespective of privilege of one's birth but only by unconditional love and devotion for Him. This great **Acharya's millennium is fast approaching in 2017 (May 1st 2017)** as part of which many programs of utility have been planned to be organized not only at Melkote but in and around our state.

**The sect of Sri Swaminarayana** in Gujarat, very much inspired by philosophical position of Sri Ramanuja. Many preceptors of this school have written commentaries on Upanishads in the light of **Vishistadvaita** of Sri

Ramanuja. Their philosophical explanations conform to the thoughts of Sri Ramanuja. The Upanishad series brought out by Academy have the commentaries of **Sri Muktanand swamy** and **Sri Gopalanada Swamy** of the Sri Swaminarayana Sect.

The present edition authored by Sri Muktananda Muni titled **"Brahmsootrabhashyaratnam"** conforms mostly in its treatment to the purport of **"Sribhashyam"** of Sri Ramanuja. This work has been brought forth from an old unpublished paper manuscript preserved by **Sri Swaminarayana Temple Vartal**, Gujarat. Not one but many pearls are to be found in this work of gloss to the original. I deem it truly an honor to be involved in publishing this work of great value in association with Sri Swaminarayana Gurukul kandari, Gujarat as part of **Millennium celebration of Sri Ramanuja-2017.**

I deem it a pleasure to express my heartfelt gratitude to the editors Sadhu Purnavallabha Das, Vid. B.V.Ramapriya and Dr. Santvallabha Das and Vid.S.Narayana for their dedicated efforts in editing the book. My special thanks are due to Dr. Sidde Gowda Director, ASR and Sri. S. Kumara Registsrar, ASR for their administrative support. I also thank all the supporting staff in helping us to bring out this book. I wish the reader world to be enlightened by this work as well as inculcate eternal values of our **Acharyas** which would be the true reading of the text and a real tribute to them.

Dr. Padma Shekhar

Vice Chancellor

Karnataka Samskrit University - Bengaluru




**Shree Somnath Sanskrit University**

(Estd. by Government of Gujarat)

Rajendra Bhuvan Road, VERAVAL-362 266
District : Gir Somnath, Gujarat, INDIA
Phone : 02876 - 244531 • Fax : 02876 - 244417

**Prof. Ark Nath Chaudhary**
Vice - Chancellor


Ref. : SSSU/VC/316/2016 Date : 23-09-2016

## शुभाशंसनम्

ब्रह्मसूत्रस्योपरि प्रसिद्धं शारीरकभाष्यमेकमात्रं प्रामाणिकमिति विदन्ति विद्वान्सः । किन्तु महदाश्चर्यं जातं यदा तादृशमेव मौलिकं ब्रह्मसूत्राणां भाष्यं 'भाष्यरत्नम्' श्रीमुक्तानन्दस्वामिकृतं दृष्टपथमागतम् । ब्रह्मसूत्रभाष्यरत्नस्य सम्पादनं स्वामिपूर्णवल्लभदासेन क्रियमाणं मया ग्रन्थस्वरूपग्राह्यतापूर्वं व्यलोकि ।

ब्रह्ममीमांसायाः प्रारम्भः "अथातो ब्रह्मजिज्ञासा" इति प्रथमसूत्रात्मकाधिकरणरूपेण भवति । तत्र 'अथ' शब्दार्थः कः? इति बहुधा विचारितं भाष्यकारेण । नायं समारम्भार्थकोऽथ शब्दः, अपितु आनन्तर्यार्थः इति विज्ञायतेऽस्माभिः । आनन्तर्यं कस्मात् इति जिज्ञासायां भाष्यकारेणाभाणि बहुप् पक्षेष्वेकः सयुक्तिकः पक्षः । यथा लिखितं तेन- धर्मस्य ब्रह्मज्ञानकारणत्वात् तद् विचारोपयोग्यानां श्रुतिवाक्यानां वेदार्थप्रतिपादकस्मृतिपुराणादिषु तत्प्रमाणत्वप्रतिपादकवाक्यानां च ब्रह्मविचारोपयोग्यत्वाच्च धर्मविचारानन्तरं ब्रह्ममीमांसा । एतावता मीमांसायां कथितम्-'अथातो धर्मजिज्ञासा' इत्यपि सुसङ्गतं भवति । धर्मजिज्ञासादिशास्त्राणि अधीत्य रागद्वेषादिरहितैः शुद्धान्तःकरणैरेव जिज्ञासुभिः ब्रह्ममीमांसा कर्तुं शक्या नान्यथा ।

एवमेव उद्दिष्टस्य ब्रह्मणो निर्दुष्टं निर्णायकं च लक्षणं 'जन्माद्यस्य यतः' इति द्वितीयसूत्रात्मकाधिकरणेन सूत्रकारः बादरायणिः प्रास्तौत् ।

इदं भाष्यरत्नम् आद्यन्तं पठित्वा मोमुदीति चेतः । सकलपाठकबोधगम्यायां भाषायां रचितं भाष्यमिदं वेदान्तसिद्धान्तजिघृक्षूणां कृते महदुपकारकं स्यादित्यत्र नास्ति संशयलेशोऽपि ।

एतादृशं भाष्यरत्नं प्रकाशनाय सम्पाद्य कृतार्थाः कृतभूरिपरिश्रमाः स्वामिश्रीपूर्णवल्लभदासमहोदयाः अभिनन्द्यन्ते भूरि च वर्धापनानि तेभ्यः इति शम् ।

भवदीयः

(प्रो. अर्कनाथचौधरी)
कुलपतिः

प्रति,
स्वामीश्रीपूर्णवल्लभदासः


Phone : (R) 02876-244530, (M) 094266 87450, - 08462830055
Email : vc.sssuni@gmail.com, choudharyarknath@gmail.com

॥ श्री हरिः॥

## प्रासङ्गिकम्

अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥
यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ।
तेनाऽनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद् भजतां शं तनोति ॥
(भागः-५/२०/२१,२२)

पुण्येऽस्मिन् भारते वर्षे सुदुर्लभं मानुषं जन्म देवैरपि वाञ्छितं वर्तते । तच्च नैकयोनिषु बम्भ्रम्यमाणैरस्माभिर्भगवत्कृपयाऽधिगतम् । तस्य साफल्यं भगवत्स्वरूपेऽनन्ययैकान्तिकया च भक्त्याऽधिगम्यते । माहात्म्यज्ञानपूर्विका सुदृढा सर्वातिशायिस्नेहरूपा च सा भक्तिः सत्सङ्गाल्लभ्यते ।

सच्छब्देन परं ब्रह्म साधवश्च तदाश्रिताः ।
प्रोक्तास्तदीयो धर्मश्च शास्त्रं चैतत्त्रिकाश्रयम् ॥ (स.जी.३/२२/४)

इति सच्छब्दवाच्यानां चतुर्णां यथोक्तरीत्या सङ्ग एव सत्सङ्ग इत्यभिधीयते । तत्र चतुष्टये निर्दिष्टं सच्छास्त्रं किं कीदृक् च तत् ? सुमेधया विचार्यमाणे सति प्रथमं वैदिकवाङ्मयं परिस्फुरति । तत्र वाङ्मये प्राणा वेदाः ॥ एतद्देशप्रसूतानां सज्जनानां कृते वेदा एव सनातनाः सदाश्रयणीयाः सत्यरूपाश्च विराजन्ते । भारतीयसंस्कृतौ सदैकान्तिकधर्मो निखिलदर्शनशास्त्रनिचयश्च नित्यनिगमनिधानस्यैव महार्घ्ये रत्ने स्तः । सकलेऽस्मिन् संसारे सुसिद्धसभ्यसाहित्येतिहासे वेदेभ्यः पुरातनं किमपि लिपिबद्धं साहित्यं कुत्रापि न दृश्यते ।

तदेषां संहिताब्राह्मणारण्यकादिरूपैरुपलभ्यमानानां प्रसृतानां प्रथितानां च वेदानां चरमांशरूपा जगत्कारणतत्स्वरूपादिविमर्शका उपनिषद उल्लसन्तीति प्रसिद्धं सुविदां समाजे । उपनिपूर्वकात् षद्लृविशरणगत्यवसादनार्थकाद् धातोः क्विपि प्रत्यये कृते सति उपनिषच्छब्दनिष्पत्तिः ।

तत्र विशरणम्- विनाशः, गतिः - प्राप्तिः, अवसादनम्- शिथिलीकरणम्, इति धातोरर्थत्रयम् तत्र विशरणार्थद्योतका उपनिषदोऽध्यात्मविद्यया जीवे स्थितामविद्यां भवाटवीभ्रमणकारणरूपां वासनामनादिकालप्राप्तसञ्चितक्रियमाणप्रारब्धरूपकर्माणि च विनाशयन्ति । तास्तत्त्वहितपुरुषार्थरूपस्य शरण्यस्य परब्रह्मणः पुरुषोत्तमस्य दर्शनसमानाकारां भक्तिं निष्पाद्य नित्ये ब्रह्मधाम्नि ब्रह्मात्मना पुरुषोत्तमस्य सेवारूपां मुक्तिं च प्रापयन्ति । तथैवोपनिषन्निहितानां विविधविद्यानां परिशीलनाच्चतुरशीतिलक्षकल्पितागणितयोनिषु भूयोभूयोऽवतरणरूपदुःखानां याम्यानामकानां च बन्धनानि श्लथयन्ति हि ।

ता उपनिषदः स्वाधीनसमस्तत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदस्य क्लेशकर्माद्यशेषदोषास्पृष्टस्य स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः-प्रभृत्यसंख्येयकल्याणगुणगणौघमहार्णवस्य परमपुरुषस्य परस्य ब्रह्मणः स्वरूपस्वभावादीनां वेदनरूपत्वात् 'वेदान्त' इति, श्रूयत एव न केनापि क्रियत इत्यनादिनिधनस्वरूपत्वात् श्रुतिशब्देनाऽपि संव्यवह्रियन्ते ।

उपनिषत्सु प्रतिपादितं तत्त्वम् अद्वैतं, द्वैतं, विशिष्टाद्वैतं, शुद्धाद्वैतं, द्वैताद्वैतं च वाऽस्ति, इति बहव आचार्याः कृतप्रयत्ना दृश्यन्ते । कालक्रमेण विभिन्नमतैराचार्यैः स्वसिद्धान्तानुसारेण कासांचिच्छ्रुतीनामर्थं स्वाभीष्टं मुख्यं कांसाचिदर्थं मुख्यानुसारं गौणं च विरोधपरिहारपूर्वकं दर्शयित्वा महता प्रयत्नेन सुसंगतैकार्थता प्रत्यपादि ।

श्रीशङ्कराचार्यैः प्रमुखदशोपनिषदां भाष्यमद्वैततत्त्वपरं व्यरचि, भगद्रामानुजाचार्यैरुपनिषदां भाष्यं प्रतिवाक्यं नाकारि, किन्तु वेदार्थसङ्ग्रहनामकमहाप्रबन्धे श्रुतितात्पर्यनिर्णयात्मकं स्वारस्यं प्रतिपक्षप्रतिक्षेपपूर्वकमुपपादितम्, तत्पश्चात् तदनुयायिभी रङ्गरामानुजाद्यैराचार्यैर्भाष्येणोपनिषदः स्वलङ्कृता अकारि ।

पाराशर्यो बादरायणिः कृष्णद्वैपायनो व्यास उपनिषदामभिधेयं तत्त्वं स्वबुद्ध्या सम्यगाकलय्य सूत्ररूपेण जग्रन्थ । औपनिषदतत्त्वसङ्ग्रहरूपाणि तानि सूत्राणि व्यासप्रणीतत्वात् व्याससूत्राणि, ब्रह्मनिरूपकत्वाद् ब्रह्मसूत्राणि, वेदान्तविषयकत्वाद् वेदान्तसूत्राणि, सर्वशरीरिणः परतत्त्वस्य व्याख्यानकरत्वाच्छारीरकसूत्राणीति प्रथितिं लेभिरे ।

तदेवं जगत्कारणवादिन्य उपनिषदो ब्रह्मसूत्राणि भारतीयभीष्मपर्वान्तर्गताष्टादशाध्यात्मिका भगवद्गीता च वेदान्तशास्त्रस्य प्रस्थानत्रयं प्रसिद्धं वर्तते । तत्र भगवान् श्रीस्वामिनारायणः शिक्षापत्र्याम्

शारीरकाणां भगवद्गीतायाश्चावगम्यताम् ।
रामानुजाचार्यकृतं भाष्यमाध्यात्मिकं मम ॥ १०० ॥
मतं विष्टिाद्वैतं मे गोलोको धाम चेप्सितम् ।
तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम् ॥ १२१ ॥

इति वेदान्तप्रतिपन्नतत्त्वहितपुरुषार्थविषये श्रीरामानुजाचार्यकृतं व्याससूत्रभगवद्गीताभाष्यं तन्मतं चाऽङ्गीचकार । पुनश्च स भगवान् विद्वद्वर्येण योगिराजश्रीगोपालानन्दमुनिना दशोपनिषदां गीतायाश्च भाष्यं परमविदुषा साधुशिरोमणिना श्रीमुक्तानन्दमुनिना ब्रह्मसूत्रभाष्यरत्नं च कारयामास ।

श्रीरामानुजीयो विशिष्टाद्वैतरूपः सगुणब्रह्मनिरूपकसिद्धान्तो यो भगवता श्रीस्वामिनारायणेन स्वीकृतः सः 'मतं विशिष्टाद्वैतं मे' ( शि. प. १२१ ) इत्यस्य भाष्ये

प्रथमेनाऽऽचार्यप्रवरेण रघुवीरार्येण सुस्पष्टं सयुक्तिकं सप्रमाणं च न्यरूपि। यथा-

"तत्र तत्र त्रय्यन्ते प्रतीयमानं ब्रह्मणोऽद्वैतं विशिष्टस्य तस्येति मे मतम्"।

विशिष्टमेव हि ब्रह्मेत्यर्थः। अयमाशयः -

वियद्वायुस्तेजःसलिलमवनिश्चेति यदिदं
विकाराणां या च प्रकृतिरपि यश्चेतनगणः ॥
न चैषामेकं वा यदगुणतया स्यात्तनुतया
प्रकारीभूयास्ते निखिलमपि यद् ब्रह्मण इदम् ॥ १ ॥
तथा च स्वैकान्तैरखिलचिदचिद्धर्मनिचयैः,
विशिष्टं ब्रह्मैकं भवति न च तत्त्वं तदधिकम् ॥
अतो नाना नेति श्रुतिशिरसि जोघुष्यत इदम्,
विशिष्टाद्वैतं तन्नहि गुणविभागं न सहते ॥ २ ॥
रसादिषु विशेषेषु सत्स्वपि श्रूयते न किम् ।
आप एव पुराऽभूवन् नान्यत् किञ्चदिति श्रुतौ ॥ ३ ॥
निषेधोऽयं न सहते स्वगुणानां भिदां किमु ?
समानधर्मिसत्तां तु न सहेतेदृशं वचः ॥ ४ ॥
लोकेऽपि देवदत्तोऽस्मिन् सद्मन्येकस्तु दृश्यते ।
इति व्यवहृतिर्मुख्या दृश्यमानेऽपि तद्गुणे ॥ ५ ॥
अभिज्ञो देवदत्तोऽयमेक एवात्र वर्तते ।
इति व्यवहृतिर्मुख्या देहे सत्यपि देहिनः ॥ ६ ॥
यद्येकमपि विद्येत ब्रह्मणस्त्वगुणात्मकम् ।
ब्रह्मैकं नास्ति नानेति व्याहन्येत वचस्तदा ॥ ७ ॥
शब्दादिभिर्विशेषैस्तु विशिष्टं वियदादिकम् ।
तथाविधैस्तु तत्त्वैस्तैर्विशिष्टमखिलात्मकम् ॥ ८ ॥
तत्त्वमेकं परंब्रह्म श्रूयते श्रुतिमूर्धसु ।
विशिष्टस्यास्य तत्त्वस्य सजातीयान्यशून्यता ॥ ९ ॥
विशिष्टाद्वैतमेतत्तु विशेषणबहुत्वतः ॥
न भज्यते न युज्यते च भेदाभेदवचोऽधुना ॥ १० ॥

विशिष्टैक्यमेव त्वद्वैतावबोधकश्रुतीनां भेदश्रुत्यनुगुणं हार्दम्। ब्रह्म ह्यखिलचिदचिद्विशिष्टमेकं तत्त्वम्। सत्ता च तेषां तद्विशेषणतयैव शब्दादीनामिव वियदादिविशेषणतया आम्नायते चान्तर्यामिब्राह्मणेऽखिलात्मता ।

गवादितत्तत्पिण्डविशेषमनुप्रविश्य चैतन्यशक्त्याऽवष्टभ्य तिष्ठतश्चेतनविशेषस्य तत्तत्तनुतया विशेषणतां यथाऽप्नोति, तथा चिदचिज्जातमशेषमाविश्य सर्वात्मना धारयतः परमचेतनस्य परस्य ब्रह्मणः सर्वमेव द्रव्यं तनुतया विशेषणं भवतीत्यनेकरूपमनेकप्रकारं परं ब्रह्मैकमेव सृष्टिस्थितिलयैर्विहरतीति न किञ्चिदिह ततो द्वितीयम् । न हि विशेषणसत्तामात्रेण सद्वितीयता । समानधर्म्यन्तरं हि द्वितीयम् । तच्च नास्त्येवेति द्वैतनिषेधः स्वरस एव । समानधर्म्यन्तराभावमभिप्रेत्यैव लोकवेदयोरपि तथा तथा प्रयोगाः शतशो लक्ष्यन्ते । ईदृशस्यैव ब्रह्मणः सर्गप्रतिसर्गयोर्विशेषणद्वारा नामरूपविभागतदभावयोः सम्भवादुपादानोपादेयभावो घटते । तथा च ब्रह्मैवोपादानमुपादेयं चेति स्थितम् । सूक्ष्मचिदचिद्विशिष्टवेषेणोपादानता स्थूलचिदचिद्विशिष्टवेषेण तूपादेयता । विशेषणानां विकारेऽपि ब्रह्मणो धर्मिस्वरूपस्याविकृतत्त्वाच्च न निर्विकारत्वश्रुत्युपमर्दः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा चोपपन्नतरेति ।

उद्धवावतारेण श्रीमद्रामानन्दस्वामिना प्रवर्तितत्वाद् औद्धवाऽऽख्यया प्रथितोऽयं सगुणब्रह्मोपासकः सम्प्रदायो भगवता स्वामिनारायणेन प्रपोषितः परिवर्द्धितस्तदनु 'स्वामिनारायणसम्प्रदायः' इत्यभिख्यां प्राप्तश्च सन् विराजतेतराम् ।

विद्वत्परिवृढैर्मुक्तानन्दादिमुनिभिरवतारित्वेन साक्षादनुभूतः पुरुषोत्तमो भक्तिधर्मात्मजो हरि-कृष्ण-हरिकृष्ण-श्रीमहाराज-सहजानन्दादिनामधेयः श्रीस्वामिनारायण एव तत्त्वहितपुरुषार्थत्वेन संमतः समुपास्यतेऽधुना साम्प्रदायिकैस्त्यागिगृहिभिरखिलैः । साधुतासीमातीतस्य श्रीमुक्तानन्दमुनेर्वैदुष्यं भाष्यरत्नस्याऽस्याऽध्ययनेन तत्प्रभावातिशयादिकं तच्चरित्रादिलेखपठनेन च विज्ञास्यते बुधैः ।

चिरकालापेक्षितमस्य भाष्यरत्नस्य प्रकाशनं श्रीवृत्तालयस्थलक्ष्मीनारायणमन्दिरमहामात्यः साधुतासम्पन्नो विद्वद्विद्यानुरागी नैकविपश्चिच्छिष्यवृन्दजुष्टः स्वामिश्रीघनश्यामप्रकाशदासशास्त्रिमहाशयो विदधातीति विज्ञाय नितरामाह्लादितोऽहम् । इति शम् ।

सत्सङ्गसेवकः
ज्ञानप्रकाशदासः
श्रीस्वामिनारायण गुरुकुल
से.२३, गांधीनगर ( गुजरात )

॥ श्री हरिः॥



# ब्रह्मसूत्रभाष्यरत्नम्-प्रास्ताविकम्



भारतीयदर्शनशास्त्रेषु प्रमुखरूपेण प्रमाणं, प्रेमयं साधनञ्चेति विषयत्रिकं परिदृश्यते। तत्र प्रमेयसिद्धिहेतुभूतं प्रमाणं, शास्त्रेषु प्रतिपादितं प्रमाणसिद्धं तत्त्वमेव प्रमेयं, परात्परतत्त्वस्य परमात्मनः प्राप्तिहेतुभूतानि धर्मज्ञानवैराग्यभक्तिसत्सङ्गादीनि साधनानि । प्रमेयसन्दर्भे भगवान् श्रीस्वामिनारायणः भगवत्पादश्रीशङ्कराचार्य इव् एकस्यैव अद्वैतब्रह्मणः अङ्गीकारापेक्षया जीवेश्वरमायाब्रह्मपरब्रह्मेतिप्रकारेण पञ्चानाम् अनादिभेदानां विशिष्टं सिद्धान्तम् अङ्गीचकार । तच्च भगवत्पादैः रामानुजाचार्यैः प्रतिपादितस्य चिदचिदीश्वराख्यस्य तत्त्वत्रयस्य विस्तारस्वरूपमेवेति निश्चिनुमहे । तदेतद् भगवता श्रीस्वामिनारायणेन शिक्षापत्र्यां *'मतं विशिष्टाद्वैतं मे'* इत्युल्लेखनादेव हेतोः तदनुबन्धित्वमेव तत्त्वपञ्चकसिद्धान्ते विनिश्चित्यानुमीयते ।

भारतीयदर्शनधारासु प्रमाणसंख्याविषये विभिन्नानि मतानि, तथापि वेदप्रमाणविषये नास्ति केषाञ्चिदपि विप्रतिपत्तिः । अतीन्द्रियाणाम् अतिसूक्ष्मतमानाञ्च विषयाणामवबोधाय खलु शास्त्रं प्रमाणम् । तच्छब्दप्रमाणं वेदमूलकम् । वैदिककर्मानुरागिणां कृते कर्मकाण्डदर्शिका पूर्वमीमांसा तथा च मुमुक्षूणां ज्ञानोपासनादर्शिकोत्तरमीमांसेति वेदविभागं व्यरीरचत् महर्षिः वेदव्यासः । तदयं जैमिनिकृतद्वादशलक्षणीरूपनिबन्धः कर्ममीमांसा बादरायणकृतश्च सूत्रप्रबन्धो ब्रह्ममीमांसा ब्रह्मसूत्रं वा वेदान्तदर्शनमित्यभिधीयते ।

*सूत्रं बह्वर्थसूचनाद् भवति* इति वचनानुसारेण बादरायणेन वेदादिशास्त्रेषु विस्तृतरूपेण प्रतिपादितं प्रेमयतत्त्वं श्रुतेः विरोधाभासपरिहारपुरस्सरं सूत्ररूपेण ग्रथितम् । प्रस्थानत्रये उपनिषद्गीतयोः सारभूतमिदं ब्रह्मसूत्रम् । क्षेत्रक्षेत्रज्ञयोः स्वरूपनिर्णयवेलायां ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ( १३-४ ) इति गीतायां भगवता श्रीकृष्णेन ब्रह्मसूत्रपदानां निर्देशः कृतः प्रमाणितश्चेति दृश्यते ।

वेदादिसर्वशास्त्राणां साररूपेण भगवता श्रीस्वामिनारायणेन प्रबोधितानि वचोऽमृतानि। तत्र हरिवाक्यसुधासिन्धौ दुर्गपुरप्रथमप्रकरणस्य पञ्चषष्टितमे तरङ्गे भगवतः ज्ञानशक्तेः रहस्यमुद्घाटितम् । स एव विषयः ब्रह्मसूत्रप्रबन्धे *अतः प्रबोधोऽस्मात्* ( ३- २-८ ) इति

सूत्रभाष्ये प्रतिपादितो यत् सत आगत्य न विदुः सत आगच्छामहे ( ६-१०-२ ) इति छान्दोग्यश्रुत्यनुसारं सुषुप्त्यवस्थायां लयं प्राप्नुतः जीवस्य जाग्रद्रूपः प्रबोधः न स्वत, अपितु कारणशरीरव्याप्तपरब्रह्मणः ज्ञानशक्त्यैवागमनं शक्यमिति ।

मोक्षाभिलाषिणां कृते उपासनाशुद्धिरनिवार्या । स्वामिनारायणसम्प्रदाये परात्परस्य जगत्कारणरूपस्य परब्रह्मण एवोपासना मान्या प्रवर्तिता च । साम्प्रदायिकग्रन्थेषु अक्षरधाम्नि प्रतिष्ठितस्य चरणद्वयोपेतस्य परब्रह्मण उपासना प्रसिद्धा । वेदादिशास्त्रविरुद्धा अक्षरब्रह्मोपासना सर्वदा अमान्या तथा च वैदिकसम्प्रदायप्रवर्तकैः व्यासादिभिरप्यप्रमाणिता । तदेतत् भाष्यकर्त्रा मुक्तानन्दमुनिना अदृश्यत्वादिगुणको धर्मोक्तेः ( १-२-२२ ) इत्यादि सूत्रभाष्ये *यः सर्वज्ञः सर्ववित्* इति सर्वज्ञत्वादिधर्माणामुक्तेरदृश्यत्वादिगुणकः परब्रह्मसंज्ञकः परमात्मैव नाक्षरं ब्रह्मेत्यादिरीत्या अक्षरब्रह्मोपासकानां कनीयस्त्वं परब्रह्मोपासकानां श्रेष्ठत्वञ्च प्रतिपादितम्।

भगवत्स्वरूपनिर्णेतृप्रमाणविषये विप्रतिपत्तिरनेकेषाम् । केचनानुमानेन ग्राह्यः, प्रत्यक्षेण चान्ये । भगवता श्रीस्वामिनारायणेन सारङ्गपुरस्य त्रयोदशे वचनामृतप्रकरणे परमात्मनः शास्त्रैकसिद्धिरुक्ता, शास्त्रेणैव कृतो निश्चयो निश्चलः । स एव विषयः *शास्त्रयोनित्वात्*। ( १-१-३ ) इति सूत्रभाष्ये मुक्तानन्दमुनिना बादरायणाभिमतं जगत्कारणं ब्रह्म शास्त्रैकगम्यमित्यादिरीत्या प्रोक्तः ।

जीवजगदीशयोर्मध्ये शरीरशरीरिभावः व्याप्यव्यापकभावः नियाम्यनियामकभावः स्वामिसेवकभावश्च नित्य इति विशिष्टाद्वैतमताभिमतं मतं भाष्यरत्ने प्रतिपादितं मुक्तमुनिना । *एकमेवाद्वितीयं ब्रह्म* ( छान्दोग्योपनिषत् - ६-२-१ ) तथा च *न तत्समश्चाभ्यधिकश्च दृश्यते* ( श्वेताश्वतरोपनिषत्-६-८ ) इति श्रुत्यनुसारेण मुक्त्यवस्थायामपि जीवेश्वरौ तत्तद्भावान्वितौ । मुक्तमुनिविरचितमिदं भाष्यरत्नं व्यासमतस्य पोषकं सर्वसम्प्रदायोपकारकं भगवता स्वामिनारायणेन स्वकृतविशिष्टाद्वैतमतविस्फोरकं च ।

मुक्तानन्दस्वामिप्रणीतस्य भाष्यस्य *रत्नेन* सह तौल्यम् अन्वयर्थमेव प्रतीयते । तदुक्तञ्च अभियुक्तैः- *जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयत* इति ।

तैरव महामुनिभिर्विरचितायाः ब्रह्ममीमांसायाः विस्तृतस्वरूपमिदं भाष्यरत्नं सत्सम्प्रदायसम्बद्धान् निखिलान् अर्थान् वचनामृतानुगुणं विशिनष्टीति विशेषः । तद्यथा

भगवत्पादैः रामानुजाचार्यैर्विरचितस्य वेदान्तसारस्य विस्तृतस्वरूपत्वमेव वेदान्तदीपस्य, तद्वितितस्वरूपत्वञ्च श्रीभाष्यस्येति विज्ञायते ।

स्वामिनारायणसमकालीनैः साधुभिरनेकानि संस्कृतप्राकृतशास्त्राणि विरचितानि । तेष्वन्यतमं भाष्यरत्नमिदं सम्प्रति सर्वजनसुलभं वेदान्तानुरागिणां सरलतया विशिष्टाद्वैतसिद्धान्तावबोधाय व्याससूत्रार्थस्फोटाय च मुक्तानन्दमुनिमण्डलपरम्परायाः साधुभिः प्रकाश्यत इति मोदविषयोऽयम् ।

प्रार्थये भगवन्तं यदिदं भाष्यरत्नं सर्वेषां वेदान्तशास्त्राध्येतृणां मुमुक्षूणामुपकारकं मोक्षपथप्रदर्शकं च भवतादिति ।

–स्नेहाधीनः स्वामी माधवप्रियदासः

**(SGVP)**

॥ श्री हरिः॥

## शुभाशिषः

वेदान्ततत्त्वार्थनिर्णायकानि श्रुत्युक्तिसमन्वयसाधकानि ब्रह्मसूत्राणि विरच्य भगवान् वेदव्यासः वेदविज्ञानमुज्जहार । सूत्राणीमानि ब्रह्ममीमांसा व्याससूत्रादिभिरपि पदैर्व्यपदिश्यते ।

''अल्पाक्षरमसन्दिग्धं, सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च, सूत्रं सूत्रविदो विदुः ।। ''

इति वचनेन सारवतामेतेषां सूत्राणां व्याख्यानं परमावश्यकमासीत् । ''व्याससूत्रमिदं पूर्वाचार्यैर्व्याख्यातमप्यथ । दुर्बोधं तस्य व्याख्यानं मया स्पष्टं विरच्यते ।'' इति प्रतिज्ञावचनेन भाष्यरत्नमिदमस्माकम् आदिगुरुचरणैः प्रकटपुरुषोत्तमसन्निधिसेविभिः श्रीमुक्तानन्दस्वामिभिः प्रणीतम् व्याससूत्रार्थप्रकाशकेषु बहुषु भाष्येषु स्पष्टतरमिति बोबुध्यते ।

भाष्यरत्नकारैः परब्रह्मस्वरूपयाथात्म्यज्ञानपूर्वकं स्वधर्मवैराग्याद्यङ्गकोपासनया प्राकृतिकबन्धविनिर्मोक्षाख्यकं परब्रह्मप्रत्यक्षसेवास्वरूपं निःश्रेयसमिति स्वामिनारायणीय सिद्धान्तमुपपादितम् अत्र भाष्यरत्ने श्रुतिस्मृतिप्रमाणपुरःसरेण ।

सुदुर्लभमिदं भाष्यं सर्वसुलभायते प्रकाशनेनानेन इति सर्वेषां सम्प्रदायानुरागिणां विपश्चितां विशेषामोदविषयः। प्रकाशनकार्ये प्रयतमानाः अस्माकमन्तेवासिनः पूर्णस्वामिप्रभृतयः सर्वेपि साधवः प्रभुपरमप्रीतिपात्राः भवेयुरिति प्रार्थयामि भगवच्चरणारविन्दयोः ।

भाष्यरत्नमिदं तत्त्वं जिज्ञासमानानां समेषां सुधियां कृते ज्ञानानन्दप्रदायकं भवेदित्यलम् ।

– शास्त्री श्रीघनश्यामप्रकाशदासजी
( मुख्यकोठारी ) श्री स्वामिनारायण मन्दिर वडताल संस्थान
( संस्थापकः ) श्री स्वामिनारायण गुरुकुल
कण्डारी, वडोदरा, नावली, लोयाधाम – अमेरिका )

॥ श्री हरिः॥

अस्ति चाऽस्माकं वैदिकसिद्धान्तानुसारिणां सुदृढाऽऽस्था - भगवान् द्वैपायनव्यासमुनिः पुरुषोत्तमनारायणस्य ज्ञानावतारभूत आचार्यश्च सर्वेषामाचार्याणामपीति । तेन यानि ब्रह्मसूत्राणि वेदान्ततत्त्वार्थनिर्णायकानि व्यरचि, तेषां व्याख्याकराणि सन्ति बहूनि भाष्याणि ।

तेषु सर्वेषु भाष्येषु मध्ये प्रत्यक्षपुरुषोत्तमस्य श्रीस्वामिनारायणभगवतः प्रत्यक्षसान्निध्यसेविभिः शब्दब्रह्मपरब्रह्मनिष्ठैः सद्गुरुवर्यश्रीमुक्तानन्दस्वामिचरणैः विरचित विशिष्टाद्वैतमतपोषकं ब्रह्मसूत्रभाष्यरत्नमन्वर्थसंज्ञं सर्वातिशायि वरीवर्तते ।

यतो हि द्विशतवर्षात्प्राग् प्रकटीभूतेन वेदवेदान्तगेयपरब्रह्मणा प्रकटपुरुषोत्तमश्रीस्वामिनारायणेन भगवता वेदवेदान्तब्रह्मसूत्राणां सर्वाणि रहस्यानि समुद्घाटितानि । तानि सर्वाणि त्रिंशद्वर्षपर्यंतं तत्साकं स्थितैरेभिर्ब्रह्मसूत्रभाष्यरत्नकारैः साक्षात् श्रुतानि यथार्थं विज्ञातानि च । तानि सर्वाणि परब्रह्मप्राप्तानि निगूढरहस्यान्यस्मिन् भाष्ये सम्यक्तयोद्धाटितानि प्रकाशन्ते ।

किञ्च तत्रानेकेषु स्थलेष्वभूतपूर्वमर्थनावीन्यमर्थगाम्भीर्यं तथापि भाषासारल्यं माधुर्यं च दरीदृश्यते । तस्य भाष्यरत्नस्य यन्मूलरूपं तदधुना सद्गुरुवर्यशास्त्रिश्रीघनश्यामप्रकाशदासस्वामिचरणैः प्राकाश्यं नीयते । तदस्ति शतशो धन्यवादार्हं कार्यम् । अनेन प्रकाशनेन न केवलं स्वामिनारायणसम्प्रदायानुयायिनां किन्तु सर्वेषां वेदान्तरसिकानां भविष्यति महानुपकारः ।

अनेन सर्वमुमुक्षुजनपोषकेन कार्येण वयं प्रसन्नाः स्मः । आशंसन्ते चानेन तत्कार्यसहायकानां सर्वजनानामुपरि परब्रह्मपुरुषोत्तमस्य श्रीस्वामिनारायणभगवतः प्रसन्नता भवत्विति ।

स्वामी ज्ञानजीवनदासः

कुण्डलधाम - गुर्जरराज्यम्

# प्राक् कथनम्

वयं सर्वे उद्धवसंप्रदायं समाश्रिता: स्म: । अत: भगवता श्रीस्वामिनारायणेन प्रवर्तितस्य वैदिकमार्गस्य संरक्षणम् अस्माकं कर्तव्यमिति । उद्धवावतार: श्रीरामानन्दस्वामी श्रीरङ्गक्षेत्रे श्रीरामानुजाचार्यसंनिधौ दीक्षां स्वीकृत्य तदाज्ञया भारतवर्षस्योत्तरेषु राज्येषु नूतनसंप्रदायम् प्रवर्तितवान् । अत्र श्रीरामानन्दस्वामी मुमुक्षुभ्यो भागवतीं दीक्षां प्रदाय धर्मोपदेश: कृतवान् । तत: श्रीरामानन्दस्वामी श्रीसहजानन्दस्वामिनं भागवतीं महादीक्षां धर्मधूरां दत्वा स्वयं श्रीरामानन्दस्वामिन्यक्षरधाम गते सति तत: भगवान् स्वामिनारायणस्त्रिंशत्वर्षपर्यन्तं स्वभक्तै: साधुब्रह्मचारिपार्षदगृहस्थसत्सङ्गिभिश्च सह गुजरातप्रदेशेषु धार्मिकप्रभावं वितन्वन् धर्मज्ञानवैराग्यसहितां शुद्धां भगवद्भक्तिं प्रवर्तयन्नधर्ममुच्छेदयन् गुरुमन्यमान् पाखण्डिनश्च पराभवन् व्यचारीत् । भगवत्स्वामिनारायणस्य पञ्चशताधिका: नैष्ठिकव्रतधारिण: परमहंसा: ग्रामं ग्रामं परिभ्रम्य जनेभ्य: सदाचारानशिक्षयन्नैकान्तिकधर्मं चोपदिदिशु: । भगवत्स्वामिनारायणोऽहर्निशं भक्तजनानानन्दयन् सद्धर्मं च संस्थापयन् गुजरातदेशे विचरन्नपि दुर्गपुर ( गढडा ) ग्रामे विशेषतोऽवात्सीत् । तदानीं लक्षाधिका: जना: भगवत्स्वामिनारायणाश्रिता: भक्ता: अभूवन्। अधुना असंख्यका: हरिभक्ता: जगति भगवत्स्वामिनारायणं भजन्त्याराधयन्ति च ।

यथापूर्वे अस्माकमिदं वैदिकधर्मस्य संरक्षार्थं आचार्यवर्या: श्रीभगवद्पादा: श्रीशंकराचार्य: श्रीरामानुजाचार्य: श्रीमध्वाचार्य: श्रीवल्लभाचार्यादय: सर्वे स्वस्वसिद्धान्तानुसारेण वेद-उपनिषद्ब्रह्मसूत्रगीतादि ग्रन्थोपरि भाष्यम् रचयित्वा अति महदुपकारं कृतवन्त:। तथैव श्रीस्वामिनारायण संप्रदाये भगवत: श्रीस्वामिनारायणस्य साक्षात् शिष्या: श्रीमुक्तानन्दगोपालानन्दादय: प्रभृतय: प्रस्थानयत्रीग्रन्थोपरि भाष्यं व्यरचयन् । तत्र श्रीमुक्तानन्दस्वामिविरचितम् ब्रह्मसूत्रभाष्यरत्नम् अत्युत्तमं विराजते ।

भगवता श्रीव्यासेन विरचितमिदं सूत्रात्मकम् ग्रन्थम् 'व्याससूत्राणि, ब्रह्मसूत्राणि वा वेदान्तदर्शनं वा ब्रह्ममीमांसा वोत्तरमीमांसेति नाम्ना जगति प्रसिद्धमस्ति । अस्य व्याससूत्रस्योपरि बहूनामाचार्याणामनेकानि स्वस्वमतानुकूलानि भाष्यव्याख्याटीकाद्युपलभ्यन्ते । तत्र वैष्णवसंप्रदाये श्रीरामानुजाचार्य-मध्वाचार्य-निम्बार्काचार्य-वल्लभाचार्यप्रभृतीनां भाष्यम् ब्रह्मसूत्रोपरि वर्तन्ते । एवमेव श्रीस्वामिनारायणसंप्रदाये ब्रह्मसूत्रोपरि श्रीमुक्तानन्दस्वामिना ब्रह्मसूत्रभाष्यरत्नम् इति नाम्ना भाष्यम् ग्रन्थः निरमायि ।

भगवान् श्रीस्वामिनारायणः स्वसिद्धान्तं दर्शयन् स्वपरमाचार्यश्रीरामानुजाचार्यस्य विशिष्टाद्वैतमतम् स्वमतत्वेन स्वीचकार - उक्तञ्च यद् शिक्षापत्र्यां "मतं विशिष्टाद्वैतं मे" वचनामृते च "श्रीमद्रामानुजाचार्यस्य यद् विशिष्टाद्वैतमतं तदेव अस्माकं मतमि" ति । अयं विषयमधिकृत्य भाष्येस्मिन् श्रीमुक्तानन्दस्वामिना परमतखण्डनपुरःसरं विशिष्टाद्वैतमिति नाम्ना स्वसिद्धान्तप्रतिपादनपुरःसरं प्रतिपादितम् । इदं च श्रीरामानुजाचार्यस्वीकृतविशिष्टाद्वैतमतमेव स्वमतत्वेन प्रतिपादितम् । अतः यथा श्रीरामानुजीयैः स्वीक्रियते तथैव श्रीस्वामिनारायणीयैरप्युपक्रियते; यथा अस्मिन् भाष्ये द्वितीयाध्यायप्रथमपादस्य द्वाविंशे "अधिकं तु भेदनिर्देशात्" इत्यस्मिन् सूत्रे जीवब्रह्मणोः भेदः प्रतिपादितम् । भेदनिर्देशात् इत्यादिना जीवात् परमात्मा भिन्नः इति प्रतिपादयति । तत्र अनेकानि श्रुतिप्रमाणानि दर्शयति भाष्यकारः। यथा करणाधिपाधिपः प्रधानक्षेत्रज्ञपतिर्गुणेशः, पृथगात्मानं प्रेरितारं च मत्वा । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति। इत्यादिना विशिष्टाद्वैतमतं प्रतिपादयित्वा विशेषज्ञानार्थम् उक्तम् च श्रीरामानुजाचार्यकृतश्रीभाष्यवेदार्थसंग्रहादिग्रन्थेभ्योऽवगन्तव्यः। इति श्रीरामानुजीयग्रन्थानाम् पठनार्थं निर्देशोऽस्ति ।

इत्यादि स्पष्टमत्र विशिष्टाद्वैतसिद्धान्तविषये उभयोः एककण्ठ्यं अभिधीयते।

भाष्यान्तरापेक्षया इदं ब्रह्मसूत्रभाष्यरत्नम् सर्वातिशायि सर्वोत्कृष्टं सुस्पष्टमनतिविस्तृतं श्रीबादरायणमतस्य सुस्पष्टतया प्रतिपादनपुरःसरम् स्वकीय स्वामिनारायणसंप्रदायमतं

प्रतिपादयति स्म । एवं च नातिविस्तरेण तथापि ब्रह्मसूत्रस्य रहस्यार्थं सुलभबोधाय बहुनां श्रुतिनां प्रमाणानि स्वीकृत्य भाष्ये अस्मिन् सूत्रार्थं प्रकटी कृतवान् । इत्येवं वैशिष्ट्यमस्य भाष्यरत्नस्येति ।

श्रीमुक्तानन्दस्वामिविरचितम् ब्रह्मसूत्रभाष्यरत्नम् अद्य ग्रन्थरूपेण प्रकाश्यते इति सर्वेषाम् मनसि महानानन्दो भविष्यत्येवेति ।

स्वामी सत्यप्रसाददासः - वेदान्ताचार्यः
श्रीस्वामिनारायण मन्दिर भुज-कच्छ

॥ भगवान् श्रीस्वामिनारायणो विजयतेतराम् ॥

# प्राक्कथनम्

नास्ति तिरोहितमिदं विपश्चिदपश्चिमेभ्यो यत् प्रस्थानत्रयी शब्देन त्रीण्येव ग्रन्थरत्नान्यभिहितानि भवन्ति ब्रह्मसूत्रम् ईशादिदशोपनिषदः श्रीमद्भगवद्गीता च । प्राचीना प्रथेदं वर्तते यत् यः कश्चनापि विद्वानेतेषां त्रयाणामपि ग्रन्थानाम् स्वमतमनुरुध्यैव व्याख्यां करोति स्म स एव स्वमतस्य भाष्यकार पदेनाभिधीयते स्म । एतस्मादेव कारणात् तत्तन्मतानुयायिनः आचार्य एतेषां त्रयाणामपि ग्रन्थानां भाष्यमकार्षुः । तानि-तानि भाष्याण्येवाश्रित्य तेषां तेषां सम्प्रदायानामभूवन् प्रचुरः प्रचारः ।

नूनं सम्प्रतं समुपलभ्यभाष्येषु शाङ्करभाष्याणामेव साम्प्रतिके जगति सर्वाधिकः प्रचारः समुपलभ्यते । तेषां भाष्याणां कर्तारः श्रीस्वामिशङ्कराचार्याः निर्विशेषाद्वैतमेव प्रत्यपीपदन्। तेषां मतानुसारेण सर्वविशेषविरहितं ज्ञानमात्रवपुः ब्रह्मैव पारमार्थिकं तत्वं विद्यते तदव्यतिरिक्तं यत् किमीपि जगति प्रतीयते तत्सर्वमेवाविद्यकम् । ते प्रतिपादयामासुः यत् सर्वाणि वेदान्तवाक्यानि तथाविधस्यैव ब्रह्मणः प्रतिपादनं कुर्वन्ति । अत एव सर्वाणि सगुणब्रह्मप्रतिपादकानि वाक्यानि निर्गुणब्रह्मप्रतिपादकैः वाक्यैर्बाधितानि भवन्ति । ते एकमेव जीवतत्त्वं स्वीचक्रुः तथा चानुवादयामास शाङ्करमतसमालोचनावसरे वेदार्थसंग्रहाभिधे ग्रन्थे श्रीमद्रामानुचार्याः "एकमेव शरीरं जीववत् । निर्जीवानीतराणि शरीराणि । तच्च शरीरं किमिति न व्यवस्थितम् । " इत्यादिना वाक्येन । ते सजातीयविसजीतयस्वगतभेदशून्यस्यैव ब्रह्मणः समर्थसमर्थनं कृतवन्तः ।

श्रीस्वामी शङ्कराचार्यस्यानन्तरं भगवत्पादाः श्रीमद्रामानुजार्याः प्रस्थानतत्रय्याः अतीवमनोज्ञरीत्या भाष्यं न्यभान्त्सुः। ते स्वकीये भाष्ये विशिष्टाद्वैतस्य प्रतिपादनं कृतवन्तः । चेतनाचेतनशरीरो हि भगवान् नारायणोऽस्याखिलस्य चेतनाचेतनात्मकस्य जगतोऽभिन्ननिमित्तोपादानकारणं वर्तते । जगदिदमखिलं भगवतः शरीरम् इत्यस्यैवार्थस्य प्रतिपादनं 'जगत् सर्वं शरीरं ते', 'तानि सर्वाणि तद्वपुः'' तत् सर्वं वै हरेः तनु' इत्यादीनि

परश्शतानि स्मार्तवाक्यानि, सामस्त्येनान्तर्यामी ब्राह्मणग्रन्थः, मैत्रेयीब्राह्मणम्, सुबालोपनिषदः सप्तमः खण्डश्च ब्रह्मणः जगच्छरीरत्वमुद्घोषयन्ति । जगदिदं ब्रह्मणः परिणामभूतो वर्तते । परञ्च ब्रह्म अखिलहेयप्रत्यनीकमखिलकल्याणगुणगणाकरञ्च विद्यते । परंब्रह्म परमेश्वर प्रभृतयः समे शब्दाः पर्यायभूताः । सर्वाणि च वेदान्तवाक्यानि सगुणस्यैव ब्रह्मणः प्रतिपादकानि सन्ति । निर्गुणं निर्विकारमित्यादिकानि पदानि ब्रह्मणः प्राकृतिकत्याज्यगुणरहितत्वमेव प्रतिपादयन्ति ।

श्रीमद्रामानुजचार्यस्यानन्तरं श्रीमद्वल्लभमध्वादिका अपि आचार्याः प्रस्थानत्रय्याः भाष्याणां स्वमतानुसारेण विरचनं चक्रुः । इमे श्रीमुक्तानन्दस्वामिपादाः श्रीभाष्यरत्ननामकस्य ब्रह्मसूत्रभाष्यस्य प्रणयनमकार्षुः । सर्वस्यान्ते अर्वाचीनतमः सम्प्रदायो वर्तते श्रीस्वामिनारायणसम्प्रदायः । एतस्य सम्प्रदायस्य प्रवर्तकः श्रीस्वामिनारायणो भगवान् वर्तते । अयं भगवान् उत्तरप्रदेशस्य छपैयानाम्निग्रामे जनिमलभत । स्वकीये ग्रामे भगवान् काश्चनैव समाः निवसितवान् । एकादशवर्षदेशीयो नैजं पैत्रिकं ग्रामं विहाय तेषां पुण्यतमानां स्थानानां पर्यटने परायणोऽभूत । तेषां तेषां तीर्थस्थलानां पर्यटनानन्तरम् इमे गुर्जरप्रदेशे अगुः । तत्र वडतालनाम्नि ग्रामे भगवतो मन्दिरस्य निर्माणं कारयाम्बभुवुः । सम्पूर्णो हि गुर्जरप्रदेशः भगवतः स्वामिनारायणस्यातिमानुषीं चमत्क्रियां दर्शं-दर्शं पूर्णतया प्रभावितः सन् अस्य स्वामिन एवानुगन्ताऽभूत् । जनाश्च तत्रत्याः समे एनं भगवत्स्वरूपं मेनिरे । भगवान् स्वामिनारायणः भगवतः श्रीमद्रामानुजाचार्यस्यैव मतं स्वमतं स्वीचकार । उद्घोषयामास च जनेषु; 'मतं विशिष्टाद्वैतं मे' इति ।

वर्तमानगर्जुरप्रदेशे स्वामिनारायणसम्प्रदायस्य सर्वाधिकः प्रचारो वर्तते । अतीवसमृद्धोऽयं सम्प्रदायः सम्पत्त्या वर्तते इति सर्वैः साम्प्रदायिकैः हृदा स्वीक्रियते । भगवतः स्वामिनारायणस्य अनेके शिष्याः वैदुष्या विभूत्या सम्पन्ना समभूवन् । तेष्वन्यतमा इमे श्रीस्वामिमुक्तानन्दस्वामिपादाः । इमे ब्रह्मसूत्राणां सरसं सरलं ब्रह्मसूत्रं भाष्यरत्नाभिधं भाष्यं चक्रुः तदिदं भाष्यरत्नं भाष्यकर्तुर्व्याकरणवेदान्तमीमांसाऽलङ्कारशास्त्राणाम् समं वैदुष्याभिव्यनक्ति । भाष्यकारोऽयं सर्वत्र श्रीमद्विशिष्टाद्वैतराद्धन्तम् अनुकुर्वन् नैज्याः लेखनशैल्या अपि वैशिष्ट्यं प्रकाशयति । समस्तव्यस्तोभयप्रकारकाणां वाक्यानां समावेशं

स्वकीये भाष्यरत्ने करोत्ययं भाष्यकारः । एतदेव नहि तेषां तेषां विषयाणां विवेचनमपि नवीनेन प्रकारेणोपस्थापयति तत्र-तत्र ।

यद्यप्ययं भाष्यरत्नकारः श्रीस्वामिनारायणभगवतः भगवत्वं स्वीकरोति तथापि स्वविषयसम्पादनचातुर्येण कुत्रापि श्रीमद्रामानुजप्रतिपादितविशिष्टाद्वैतराद्धान्तेन साकं विसंवादं नहि विभर्ति । मन्ये इदानीं यावदस्य भाष्यस्य कुत्रापि प्रचारो नास्ति । एतस्मादेव कारणादस्य भाष्यरत्नस्य कुतोऽपि प्रकाशनं नहि संजातम् । वडतालस्थस्वामिनारायणमन्दिरस्य प्रधान-कोठार-कार्यालयकर्मणि व्यापृताः मुख्यामात्याः श्रीस्वामिघनश्यामप्रकाशदासाः तेषां कृपापात्रतां गताः स्वामी पूर्णवल्लभाचार्याः भाष्यस्यै तस्य कम्प्यूटरयन्त्रेऽस्खलितस्वरवर्णतयातिसावधानेन मनसा टङ्कणं कृत्वाऽतिप्रयासेन रत्नस्यास्य प्रकाशनकर्मणि विशेषरूपेण व्यापृताः वर्तन्ते । यत्किमपि भवेत् भाष्यस्यास्य प्रकाशनेन नूनं स्वामिनारायणसम्प्रदायस्य वैदुष्यपरम्परायां नवीनं ज्योतिस्समुदेष्यति । अस्य ग्रन्थस्य प्रकाशने श्रीस्वामिघनश्यामप्रकाशदासमहाभागानाम् साधुशिष्यतां गताः श्रीसन्तवल्लभस्वामिनः महतीं भूमिकां निर्वहन्तीति कर्णाकर्णिपरम्परातो मया ज्ञातम् । इमावुभावपि विद्वद्वरेण्यौ प्राक्तनकाले ममाध्याप्यपरम्परायां समधिगतस्थानावभूतामिति स्मारं-स्मारं मोमोदते ममाप्यन्तरङ्गम् । भगवतः श्रीमज्जानाकिजानेः पद-पद्म-पार्श्वतः अनयोः मङ्गलं कामयमानः विराममेत्ययं जनः ।

भगवतानां विधेयः

शिवप्रसादद्विवेदी ( श्रीधराचार्यः )

आयोध्यकः

श्रीः

श्रीमद्रामानुजसंप्रदायिनां श्रीस्वामिनारायणशाखिनां महदिदं प्रमोदस्थानं यत् तत्त्वत्रये जीव-ईश्वर-माया-ब्रह्म-परब्रह्म इति पञ्चभेदवादिनां वेदान्तशास्त्रे प्रविविक्षूणां तत्सारभूतं ब्रह्मसूत्रभाष्यरत्नं ग्रन्थकर्त्रा व्यरचि । अक्षराधिकरणे एतेषां सिद्धान्तानां सारभूतः अंशः सम्यक् प्रतिपादितः ।

शारीरकशास्त्रस्य सारभूतोऽर्थः संक्षेपेण किञ्चित् कथ्यते । तत्र प्रथमपादे प्रधानपुरुषावेव जगत्कारणतया वेदान्ताः प्रतिपादयन्ति इत्याशङ्क्य सर्वज्ञं सत्यसङ्कल्पं निरवद्यं समस्तकल्याणगुणाकरं ब्रह्मैव जगत्कारणतया प्रतिपादयन्तीत्युक्तम् । द्वितीय, तृतीय, चतुर्थपादेषु कानिचिद्वेदान्तवाक्यानि अस्पष्टजीवादिलिङ्गकानि, स्पष्टलिङ्गकानि, तच्छायानुसारीणीति सर्वाक्षेपमाशङ्क्य तान्यपि ब्रह्मपराणीति निरूपितानि । एवं प्रथमाध्याये सर्वं वेदान्तवाक्यजातं ब्रह्मैव जगत्कारणतया प्रतिपादयतीति स्थापयित्वा द्वितीयाध्याये तस्यार्थस्य दुर्धर्षणत्वं विशदयति । तत्रापि प्रथमे पादे सांख्यादिस्मृतिविरोधन्यायविरोधाभ्यां प्रसक्तो दोषः परिहृतः, द्वितीये पादे सांख्यादिवेदबाह्यस्मृतीनां श्रुतिविरोधन्यायविरोधाभ्यामनादरणीयता च परिहृता । तृतीयचतुर्थयोः वेदान्तवाक्यानामन्योन्यविप्रतिषेधादिदोषगन्धाभावख्यापनाय वियदादीनां ब्रह्मकार्यताप्रकारो विशोध्यते । तत्रापि तृतीये अचिदंशस्य स्वरूपान्यथाभावरूपकार्यत्वं, चिदंशस्य स्वभावान्यथाभावरूपकार्यत्वं च सुष्ठुप्रतिपादितम् । चतुर्थे च जीवोपकरणभूतानामिन्द्रियाणामुत्पत्तिप्रकारश्चिन्तितः । एवं चाध्यायद्वयेन निखिलजगदेककारणं परं ब्रह्मैवोपास्यमिति प्रतिपादितम् ।

उत्तरेण द्वयेन ब्रह्मोपासनप्रकारः तत्फलमोक्षस्वरूपं च चिन्त्यते । तत्र तृतीये जीवस्य वैराग्योत्यपादनाय जीवगतदोषान् उपन्यस्य, ब्रह्मणि उपासिसिषोत्पत्त्यर्थं तस्योभयलिङ्गतां निरूप्य, ब्रह्मोपासनानामेकत्वानेकत्वविचारपूर्वकं उपासनेषु उपसंहार्यानुपसंहार्यगुणविशेषान् प्रपञ्चयित्वा, उपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वं व्यवस्थापितम् ।

चतुर्थाध्याये तु आदौ ब्रह्मोपासनानामुपासनप्रकारः, उपासनामाहात्म्यं च उक्तम् । द्वितीये ब्रह्मप्राप्तिप्रकारश्चिन्तितः, तृतीये अर्चिरादिगतिस्वरूपं तस्यैव ब्रह्मप्रापकत्वं च निरूपयित्वा अन्तिमे मुक्तस्य ब्रह्मानुभवप्रकारं प्रतिपाद्योपसंहारः कृतः ।

अस्य ग्रन्थस्य प्रणेतुः अभीष्टम् आचन्द्रार्कं विलसतु इत्याशास्महे। इतोपि पुनः पुनः ग्रन्थग्रथने ब्रद्धचित्ता भूयासुः इति श्रीलक्ष्मीनृसिंहं प्रार्थये ॥

डॉ. श्री. पद्मानाभाचार्यः

प्राचार्यः एवं अध्यक्षः

संस्कृतविभागः, चैन्नैविश्वविद्यालयः

मद्रपुरी- ६००००५

॥ श्री हरिः॥

# भाष्यरत्नाभिनन्दनम्

'आत्मा वा अरे द्रष्टवयः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतिवचनानुसारं परमात्मदर्शनं तत्साक्षात्कारः जीवनस्य परमपुरुषार्थो भवति ।

"जीवस्य तत्त्वजिज्ञासा नाऽर्थो यश्चेह कर्मभिः" श्रीमद्भागवतपुराणवचनानुसारं जीवनस्य अर्थः परमं प्रयोजनं तत्त्वजिज्ञासा विद्यते ।

'तत्त्वं ब्रह्मणि धर्मे चे'ति कोशवचनात् तत्त्वजिज्ञासा ब्रह्मजिज्ञासा चेति नार्थान्तरमस्ति । महर्षि वेदव्यासेन भगवज्ज्ञानकलावतारेण कृष्णद्वैपायनेन ब्रह्मसूत्राणि विरचय्य श्रुतिवचस्सु समन्वयोऽविरोधः फलादिकं चेति निरूपितम् । सूत्राणामल्पाक्षरत्वात् संक्षिप्तत्वाच्च तद्भाष्यवृत्त्यादीनां परमा आवश्यकता भवति । काले काले धराधामालंकृतवद्भिः आचार्यैः ब्रह्मसूत्रोपरि भाष्याणि विरचितानि दृश्यन्ते, तत्र शारीरकभाष्यं, श्रीभाष्यं, अणुभाष्यं, पूर्णप्रज्ञभाष्यम् इत्यादीनि सुप्रसिद्धानि भाष्याणि विराजन्ते । तेषामपि भाष्याणामुपरि विविधैराचार्यैः टीका रचिताः सन्ति । भाष्याणां सारसंक्षेपरूपेणापि एतद् विषयकाः ग्रन्थाः समुपलभ्यन्ते । श्रीमत्स्वामिनारायणशिष्यश्रीमुक्तानन्दस्वामिविरचितं ब्रह्मसूत्रभाष्यरत्नं महनीयं सारस्वतं कार्यं विद्यते । एतस्य भाष्यरत्नस्य रचनायां रचयितुः प्रवृत्तिप्रयोजनं किम्भवतीति स्वयं भाष्यरत्नकारः ग्रन्थोपक्रमे निरूपयन्नाह,

'नमो व्यासाय कृष्णाय ब्रह्मसूत्रविधायिने । येन श्रुतिविरोधस्य विनाशाय श्रमः कृतः ॥
व्यासूत्रमिदं पूर्वाचार्यैर्व्याख्यातमप्यथ । दुर्बोधं तस्य व्याख्यानं मया स्पष्टं विरच्यते ॥'

इत्थमस्य ग्रन्थस्य रचनायां प्रयोजनमभिहितम् । हरिनिष्ठानां साधूनां कृते सर्ववेदान्तसत्पद्मसुगन्धामोदोपलब्धये एतत् भाष्यरत्नं महानिधिः अस्ति। यथोक्तम्

'सर्ववेदान्तसत्पद्मसुगन्धस्वादमोदिनाम् । साधूनां हरिनिष्ठानां भाष्यमेतन्महानिधिः ॥'

अस्य भाष्यरत्नस्य व्याख्यानशैली सरला सुगमा संक्षिप्ता सारमयी च विद्यते । जिज्ञासूनां संशोधकानां च कृते ग्रन्थोऽयं महते उपकाराय भविष्यति । तत्सूत्राणामधिकराणानां च अर्थावबोधवैशद्यायाऽपि एष ग्रन्थः उपयोगी भविष्यति। एतद्भाष्यरत्नं व्यासाभिप्रायबोधकमस्तीति ग्रन्थोपसंहारे एतद्ग्रन्थरचयित्रा निरूपितम् । यथा–

'व्यासाभिप्रायबोधं शुभमिदमखिलं श्रीहरेः सम्प्रसादात्

संपूर्णं जातमित्थं सुमतिरुचिकरं भाष्यरत्नं सुबोधम् ।'

एतच्च भाष्यरत्नं वृत्तालयस्थश्रीलक्ष्मीनारायणसंस्थानस्थैः सच्छास्त्रसमुपासकैः हरिनिष्ठैः विविधैः सद्भिः भूरिश्रमं विधाय सन्निष्ठतया प्राकाश्यमुपनीयते इति सर्वथा सभाजनस्यायं विषयः । श्रद्दधे सन्तो विद्वांसो जिज्ञासवश्च अनेन प्रकाशनेन लाभान्विताः सन्तः भृशं प्रसादं प्राप्स्यन्त इति । ग्रन्थकृद्भ्यस्तत्प्रकाशकेभ्यश्च भूयो भूयः सभाजनानि ।

डो. नरेन्द्रकुमार एल. पण्ड्या

आचार्यः, श्री सोमनाथसंस्कृत युनिवर्सिटी कोलेज,

वेरावल, गुजरात

॥ परब्रह्मणे नमः ॥

# वक्तव्यं किञ्चित्

धर्मार्थकाममोक्षाख्याः चतुर्विधाः पुरुषार्थाः प्रसिद्धाः इति सर्वेषां विदितमेव। तेषु चतुर्विधेषु पुरुषार्थेषु चरमभूतः मोक्ष एव परमपुरुषार्थः अपुनरावृत्तिरूप शाश्वतलोकभूमिरूपः। तादृशो मोक्षः सर्वैः सुदुर्लभ एव। शमदमादयः उपासनानि च आवश्यकानि। सन्ति अनेकानि दर्शनानि चार्वाकजैनबोद्धदर्शनानि अवैदिकानि, सांख्ययोगपातञ्जलतार्किकमीमांसासांख्यमतानि वैदिकदर्शनानि इति प्रसिद्धानि। तेषां तेषां मतप्रवर्तकाः स्वंस्वं मतमेव स्वप्रतिपादिततत्त्वमेव श्लाध्यं इति मन्वानाः विवदन्ते। तेषां मतानां निरासाय अनादिनिधनानवच्छिन्नपाठसम्प्रदायः अनाघ्रातप्रमादादिदोषगन्धवेदाख्याक्षरराशिः, तथा मातापितृसहस्त्रेभ्योऽपि वत्सलतरं शास्त्रं इति यत् प्रतिपादितं भगवद्रामानुजाचार्यैः तच्छास्त्रमेव वेदः तिलेषु तैलवद्वेदे वेदान्तः सुप्रतिष्ठित इति नीत्या वेदे एव वेदान्तः अन्तर्हितः। तादृशवेदान्ते उपनिषत्प्रस्थानं ब्रह्मसूत्रप्रस्थानं भगवद्गीताप्रस्थानं चेति प्रस्थाननत्रयं प्रसिद्धं वर्तते। तत्र उपनिषत्प्रस्थानं श्रुतिप्रस्थानं ब्रह्मसूत्रप्रस्थानं यावदूप्रस्थानं गीताप्रस्थानं स्मृतिप्रस्थानं इति व्यपदिष्टं वर्तते। प्रकृष्टं स्थानं मार्गः विद्यते परब्रह्मप्राप्तिः अस्मिन् इति प्रस्थानम्।

*१. उपनिषत्प्रस्थानम् -*

अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो, यजुर्वेदः सामवेदः अथर्वणः.....इति श्रुत्युक्तप्रकारेण भगवतः निश्वासरूपेण आगताः अपौरुषेयाः वाणीरूपाः तत्वहितपुरुषार्थावबोधिकाः उपनिषदः। न च पुनरावर्तते न च पुनरावर्तते इत्युक्तश्रुत्यनुसारेण शाश्वतलोक अपुनरावृत्तिरूपं परं धामलब्धुं उपनिषत्प्रमाणभूतवेदान्तेषु नैके साधनोपायाः प्रतिपादिताः। जिज्ञास्यं ब्रह्म, तस्य लक्षणं उपासनाप्रकाराः चरमप्रयोजनं चेत्यादि उपनिषत्सु सम्यक् उपपादिताः। कासुचिदुनिषत्सु तद्विजिज्ञासस्व तद्ब्रह्म इति जिज्ञास्यं ब्रह्म, तथा च यतो वा इमानि भूतानि जायन्ते इति जन्मादिकारणं, कासुचित् मोक्षप्राप्त्यर्थं उपायभूताः ब्रह्मविद्याः तासां उपासनाप्रकाराः कासुचित् जगत्सृष्टिविचाराः प्रतिपादिताः। उपनिषदः अनेकाः सन्ति तथापि दशोपनिषदः प्रसिद्धाः वर्तन्ते।

"ईशकेन-कठ-प्रश्न-मुण्डमाण्डूक्य तित्तिरिः।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश॥" इति

आसां उपनिषदां अनेकैः आचार्यैः स्वस्वसिद्धान्तानुसारेण भाष्यरचना कृता चकास्ति।

*२. ब्रह्मसूत्रप्रस्थानम् -*

उपनिषत्सु प्रतिपादिताः विषयाः एकत्रसमुपलभ्यन्ते एतत् सर्वं विज्ञाय भगवान् बादरायणः

कृष्णद्वैपायन इति प्रसिद्धः व्यासः तानिसर्वाणि वेदान्तवाक्यानि साध्यसाधनरूपतया सूत्ररूपेण ग्रथनं कृत्वा ब्रह्मसूत्रं प्रणिनाय । तदुक्तं शङ्कराचार्यैः स्वकीये ब्रह्मसूत्रभाष्ये वेदान्तवाक्यकुसुमग्रथनात् सूत्राणां वेदान्तवाक्यानि हि सूत्रैरुदाहृत्यविचार्यन्ते इति । वेदान्तवाक्यार्थनिर्णये हि भगवता बादरायणेन उपायद्वयं प्रवर्तितं ब्रह्मसूत्राणि उपबृंह्मणानि च। तत्र उपबृंह्मणरूपतया महाभारतं रचितम् । तत्र मध्ये अलङ्काररभूता कर्मज्ञानभक्तियोगप्रतिपादिका भगवद्गीता प्रसिद्धा वर्तते । भगवद्गीता एव स्मृतिप्रस्थानं गीताप्रस्थानं इति प्रसिद्धं वर्तते ।

***३. स्मृतिप्रस्थानं -***

गीताप्रस्थानम्-भगवतः मुखपद्मात् विनिसृता वाणीगीता अपौरुषेया एव यतो हि प्रत्यध्यायं भगवद्गीतासु उपनिषत्सु प्रथमोऽध्यायः द्वितीयोऽध्यायः इत्येव निर्देशः वर्तते । कौरवपाण्डवयोः युद्धं व्याजीकृत्य श्रीकृष्णः अर्जुनं प्रति ज्ञानभक्तियोगात्मिकां अष्टादशाध्यायात्मिकां अध्यात्मसारभूतां गीतां उपदिदेश । श्रीस्वामिनारायणशिष्यैः श्रीमुक्तानन्दस्वामिभिः विरचितम् ब्रह्मसूत्रभाष्यरत्नं नामकः ग्रन्थः प्रकाश्यमानः वर्तते । ब्रह्मसूत्र प्रस्थानं न्यायप्रस्थानं इति प्रसिद्धं। तत्र क्रमबद्धतया साध्यसाधनोपायभूते ब्रह्मउपासने प्रतिपादिते । अथातो ब्रह्मजिज्ञासा इत्यादिना सूत्रकारः व्यासः वेदान्तोदिततत्वहितपुरुषार्थः स्वरूपं सम्यगुपपादितवान् । साध्यं अथवा प्राप्यं ब्रह्म तत्प्राप्त्युपायं विरोध्यनिष्टं, तन्निवृत्तिं, फलप्राप्तिं च अस्मिन् प्रस्थाने शारीरके सूत्ररूपेण सुन्दरं उपन्यास्थत् । अस्मिन् प्रस्थानभूते ब्रह्मसूत्रे चत्वारोऽध्यायाः प्रत्यध्यायं चत्वारः पादाः प्रतिपादं अनेकान्यधिकरणानि सन्ति । अस्य ब्रह्मसूत्रस्य द्वैताद्वैतविशिष्टाद्वैतादिसिद्धान्तरीत्या अनैकैः आचार्यैः भाष्यं विरचितम् । तत्र अभेदश्रुतीनां प्रामाण्यम् अङ्गीकृत्य अद्वैतमेवश्रुतिभिः प्रतिपाद्यते इति भगवत्पादशङ्कराचार्यैः स्वीयभाष्यादिग्रन्थैः निरूपितम् । तथा भेदश्रुतीनां प्रामाण्यमङ्गीकृत्य द्वैतमेव सिद्धान्तः इति मध्वाचार्यैः प्रतिपादितम् । भेदश्रुतीनां प्रामाण्ये अभेदश्रुत्यः कुप्येयुः अभेदश्रुतीनां प्रामाण्ये भेदश्रुतयः कुप्येयुः इति, तयोः भेदाभेदश्रुत्योः समन्वयः घटकश्रुतिनिर्वहणेन कृतः भगवद्रामानुजाचार्यैः अत एवैते समन्वयकाराः इति प्रसिद्धाः। अस्य मतस्य सविशेषाद्वैतं इत्येव नाम्ना प्रसिद्धम् । अनन्तकालिकैः आचार्यैः स्वकीयव्याख्याग्रन्थेषु विशिष्टाद्वैतं इति नाम्ना कथितम् ।

प्रस्तुतं श्रीमुक्तानन्दमुनिभिः विरचित ब्रह्मसूत्रभाष्यरत्नं विशिष्टाद्वैतमतानुसारि । आभाष्यं श्रीभाष्ये यत्प्रतिपादितम् तदेवानुसृतम् । तदुक्तं-इतरव्यापदेशाधिकरणे अधिकं तु भेदनिर्देशात् (२-१-२२) इति सूत्रव्याख्यानावसरे किञ्च केवलभेदवादभेदाभेदवाद-निर्विशेषवस्त्वैक्यवादरूपाणि त्रीणिमतानि सन्ति, तत्र कतमं मतमुभयथा श्रुतिगणेन युष्माभिः साधितमिति चेत् न वयमुभयथा श्रुतिगणेन भवदभिप्रेतं प्रपञ्चब्रह्मणो अनन्यत्वे पृथक्त्वे च स्वाभाविकत्वं औपाधिकत्वं चाश्रित्य त्वदुक्तमतत्रयान्यतममतं साधयामः, किन्त्वनेन श्रुतिगणेन

प्रतिपाद्यं विशिष्टाद्वैताख्यंमतमेव साधयामः इति उदघोषि । तथात्रेव- ''एवं दोषबाहुल्याद्विरोघबाहुल्याच्चेतानि त्रीणि मतानि परिहाय सर्वथा निर्दोषं सकलमतराजराजं विशिष्टाद्वैतमतमेव आश्रितानामस्माकं न कापि विरोधापत्तिः इति ।'' किञ्च एतस्मिन् मतत्रिके दूषणोक्तिविशेषप्रपञ्चः तन्निरासविशेषप्रपञ्च श्रीरामानुजकृतश्रीभाष्यवेदार्थ-सङ्ग्रहादिग्रन्थेभ्योऽवगन्तव्यः इति च । तथा व्याख्यानान्ते तथाहि तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्याम् व्याक्रियते सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं बहु स्यां प्रजायेय इत्यादि चिदचिद्विशिष्टस्य ब्रह्मणः नामरूपविभागानार्हसूक्ष्मदशापत्तिविवक्षया नानात्वं च वदन्तीति सकलवेदान्तवेद्यतया निर्विवादत्वात् निरवद्यं विशिष्टाद्वैताख्यमतमेव न्यायविद्भिः स्वीकर्तव्यम् इति । आन्तं अस्मिन् भाष्ये विशिष्टाद्वैतमतमेव प्रतिपादितं तन्मतमेव श्रुतिसमुपादिष्टं इति सम्यगुपपादितम् । अयं ग्रन्थः श्रीभाष्यरत्नाख्यः मुनिभिः प्रकाश्यमानो वर्तते । शोधनकार्ये अस्मिन् मां योजितवान् नैकशास्त्रनिष्णातः उभयवेदान्तविद्वान् विद्वत्तल्लजः मम मित्रं भा. वं. रामप्रियः । शोधनकार्यव्याजेन भाष्याध्ययनरूपं महत्प्रयोजनं अभूत् । तदर्थं तस्मै नामोवाकं प्रशास्महे । सर्वेभ्यः हार्दा-धन्यवादाः । स्वामिनारायणभगवत्पादारविन्दयोः प्रणामं समर्प्य विरमामि।

इति शम्

इति विदुषामनुचरः

एस. नारायणः

( भूतपूर्वसंशोधनाधिकारी )

संस्कृतसंशोधनसंसत्, मेलुकोटे-५७१४३१, कर्नाटकम्।

## ॥ किञ्चनवचोद्वयम् ॥

वेदाः स्तोतुं प्रवृत्ता यदनवधिमहानन्दमालक्ष्य दूरात्
प्रत्यावर्तन्त सर्गस्थितिलयमखिलस्यास्य येनामनन्ति ।
स्थाने दिव्येऽक्षरे यो निवसति सततं नित्यमुक्तानुषक्तः
सोऽयं कृष्णः स्वयमवति निजान्स्वामिनारायणो नः ॥
(ईशावास्योपनिषद्—सुबोधिनीटीका)

तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणाम् अन्तर्ज्वरमशीशमत् । (वे.स.)

अखिलहेयप्रत्यनीकस्य समस्तकल्याणगुणाकरस्य दिव्यमङ्गलविग्रहस्य भगवतो नारायणस्य परमकृपाकटाक्षपरीवाहेन सर्वत्र नित्यश्रीर्नित्यमङ्गलम् ।

मोक्षपदप्रेप्सूनां कृते भगवता बादरायणेन ब्रह्मसूत्राणि प्राणायिषत इति नास्ति कस्यचिदपि तिरोहितम् । तान्येव ब्रह्मसूत्राणि समवलम्ब्य स्वामिनारायणसम्प्रदायस्य मातृवात्सल्यपरिपूर्णेन श्रीमुक्तानन्दमुनिना भाष्यरत्नमिदं प्राणायि ।

स्वामिनारायणीयतत्त्वमीमांसाधिजिगमिषूणां कृते शारीरकशास्त्रस्य सम्पिण्डितोऽर्थः कृत्स्नोऽपि अत्र भाष्यरत्ने श्रीमुक्तमुनिना न्यवेश्यत इत्यत्र नास्ति लेशतोऽपि सन्देहगन्धः ।

विशिष्य स्वामिनारायणसम्प्रदाये उपासनाशुद्धिः अतितरां प्रामुख्यं भजते । तामुपासनाशुद्धिं विशेषेण दृढयितुं श्रीमुक्तमुनेः भाष्यरत्नमिदं समेषामपि मोक्षपथिकानां कृते दीपिकायते ।

तथा हि स्वयमेव भाष्यकृत् बहुत्र सङ्ग्रहविस्तारमुखेन प्रतिपाद्यविषयान् निवेशयतीति सम्प्रदायः । यथा ह्युक्तिः प्रसिद्धिं भजते-इष्टं हि विदुषां लोके समासं व्यासधारणम्- यथा वा भगवत्पादैः रामानुजाचार्यैः वेदान्तदीपसारयोः ब्रह्मसूत्राणामेव विषयप्रत्यपादि । अनन्तरं तमेव विषयं श्रीभाष्ये कार्त्स्न्येन प्रत्यपीपदन् ।

तद्रीत्यैव सविशेषाद्वैतवेदान्तमतं समवलम्ब्य उपपादितं ब्रह्मसूत्रं ब्रह्मसूत्रभाष्यरत्नद्वारा अन्तरङ्गगोष्ठीनिष्ठानां कृतेऽपि वचनामृतानुबन्धित्वेन च श्रीमुक्तमुनिः प्रबन्धरत्नमिदं व्यरीरचत् ।

किञ्च जीवेश्वरमायाब्रह्मपरब्रह्मणां विशिष्टा स्वामिनारायणीयतत्त्वमीमांसाऽपि अत्र भाष्यकृता मुक्तमुनिना प्राबोध्यत ।

किञ्चामुष्य दुर्लभस्य अत एव ब्रह्मसूत्रभाष्यरत्नम् इत्यन्वर्थतां भजमानस्य भाष्यस्य संशोध्य प्रकाशनार्थं यदुगिरिस्थायाः संस्कृतसंशोधन-संसदः अध्यक्षपदमलङ् कुर्वाणाभ्यः कणाटकसंस्कृतविश्वविद्यालयस्य कुलपतिवर्याभ्यः श्रीपद्माशेखरमहोदयाभ्यः स्वीयं कार्तज्ञ्यम् आविष्करोमि । तथैव तद्विश्वविद्यालयस्य कुलसचिवेभ्यः किञ्च संस्कृतसंशोधनसंसदः अपि निदेशकेभ्यः श्रीसिद्धेगौडमहोदयेभ्यः कृतज्ञतां प्रकटीकरोमि । तथैव संस्कृतसंशोधनसंसदः उपनिदेशकेभ्यः अनूचानपरम्परां रक्षितुकामेभ्यः कैङ् कर्यश्रीसम्पन्नेभ्यः डॉ. एस. कुमार महोदयेभ्यः धन्यवादराशिं प्रकटीकरोमि । अपि च अस्य भाष्यस्य सम्पादनकर्मणि नियुक्ताभ्यां श्रीसन्तवल्लभपूर्णवल्लभस्वामिभ्याम् अपि मदीयं हार्दं कृतज्ञताञ्जलिं निवेदयामि ।

ये च नारायणसुब्बुरायप्रभृतयः विद्वांसः साधुभिस्साकं मिलित्वा अस्य भाष्यरत्नस्य पुनर्निर्माणकार्ये सभक्तिश्रद्धम् उपाकार्षुः तेभ्योऽपि मदीयं सनति कार्तज्ञ्यभावम् अभिव्यनज्मि ।

किञ्च श्रीस्वामिनारायणगुरुकुलविश्वविद्याप्रतिष्ठानम्, छारोडी इत्याख्यगुरुकुलपरिवारस्य पक्षतोऽपि अत्र कर्मणि व्यापृतेभ्यः समेभ्योऽपि सद्भ्यः स्वीयां कृतज्ञतां प्रकटीकृत्य भाष्यरत्नमिदं समेऽपि स्वामिनारायणीयाः आश्रिताः समधीयताम् । तेन च ब्रह्मसूत्रभाष्यरत्नस्य कीर्तिः दिगदिगन्तव्यापिनी च भूयादिति भद्रम् अशासानः ।

भगवद्भागवतोत्तमविधेयः<br>भा. वं. रामप्रियः

# सम्पादकीयम्

स्वतः प्रामाण्यं वेदानामिति वेदविदामाचार्याणाम् मतम्। "तस्य ह वैतस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदोयुजुर्वेदः। (बृ. २-४-१०) इति। सूर्यस्य सद्भावे भानुरेव प्रमाणम्। प्रज्वलितस्य दीपस्य प्रकाशने प्रकाशान्तरमनावश्यकं तथैव वेदानां प्रामाण्ये प्रमाणान्तरं सर्वथा अनावश्यकम्। वेदमूलिकेयं सृष्टिः। सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्। (तै.आर.१०-१-१४, तै.ना.-१-४४) तथा च मनुराह

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ (मनु.स्मृ.१-२१)

आगमस्मृतिपुराणेतिहासादीनां शास्त्राणामपि निगमः एवोद्भवस्रोतः। ते वेदाः ऋग्यजुस्सामाथर्वेति चतुष्प्रकारेण विभक्ता भगवाता व्यासेन। अनेनैव हेतुना "वेदव्यासः" इत्यपरनामा ख्यातः सः। व्यासोच्छिष्टं जगत्सर्वमित्यपि सूक्तिः ख्याता लोके। वेदाः अपि संहिताब्राह्मणारण्यकोपनिषद इति चतुर्धा विभक्ता वर्तन्ते।

पूर्वकाण्डोत्तरकाण्डात्मकोऽयं वेदः शाखा-प्रशाखासु बहु विस्तरितः। मननात् त्रायत इति मन्त्रः, इति व्युत्पत्या सम्बन्धमात्रेण सहजत्राणशीलानां वेदानां मन्त्राः, मन्त्रार्थाः, मन्त्रवर्णमात्रं वा ज्ञानप्रदातृत्वात् आनन्त्याय परिगण्यते यथा 'अनन्ता वै वेदाः' इति। किन्त्वत्र संहिताब्राह्मणारण्यकान्तर्गतोऽन्तिमो भागः उपनिषदित्युच्यते, तेषां सारभूतत्वाच्च। प्रतिवेदं संहिता-ब्राह्मण-आरण्यकानीति त्रयो भागाः वर्तन्ते। तेष्वाधिक्येन ब्राह्मणभागगताः उपनिषदः प्राप्यन्ते। अन्तिमे उच्चरितत्वात् सारभूतत्वाच्चेयं उपनिषत् 'वेदान्त' इति नाम्ना श्रूयते। तथा चाऽन्तोक्तत्वाच्च रहस्यमयत्वाच्च प्रस्थानत्रयीष्वपीयमुपनिषदग्रगण्या वर्तते। श्रौतबीजमूलत्वात् ब्रह्मसूत्राण्यपि स्वतः प्रमाणभूतानि। 'औपनिषदं ब्रह्मसूत्र'मिति प्रयोगः प्रयुज्यते विद्वद्भिः।

प्रमाणायत्ता हि प्रमेयसिद्धिः। प्रमाता प्रमाणमनुसृत्य प्रमेयस्य निश्चयं करोतीति सार्वत्रिकी रीतिः। यथार्थप्रमाणेन सत्तर्केण वा परिशुद्धा प्रमितिः सर्वग्राह्या। सत्साधनैः सद्हेतुना साध्यस्य सिद्धिः परिभाव्या। तस्मात् प्रमाणस्य शोधनं परमावश्यकम्। प्रायशः अष्टप्रमाणानि विभिन्नैः मतवादिभिः परिगण्यन्ते दार्शनिकजगति। तत्प्रत्यक्षानुमानोपमानशब्दार्थापत्यनुपलब्धि-सम्भवैतिह्योतिभेदात्। तेषु त्रीण्येव विशिष्टाद्वैतमते स्वीक्रियन्ते। अन्येषां प्रमाणानां तेष्वन्तर्भावात्। त्रिषु प्रमाणेष्वपि वेदमूलकं शब्दप्रमाणं प्रमाणतमम्। किञ्च वेदशब्दैः एवोत्पन्नेयं सृष्टिः। तत्र श्रुतिः "धाता यथापूर्वमकल्पयत्" तथा च "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे"। अनुमानस्य परतः प्रामाण्यात्। प्रत्यक्षेणाऽग्राह्याणां पदार्थानामनुमानेन प्रतीतिस्तु विवशतां द्योतयति, सा च सन्देहात्मिका। प्रत्यक्षस्याप्यक्षिदोषग्रस्तत्वात् वर्तमानसम्बन्धमात्रत्वाद्वा न

कात्स्न्र्येन परिगृह्यते । आचार्येषूत्तमो व्यासः दर्शयति एतद्विषये । ''शास्त्रयोनित्वात् ''( ब्र.सू.१-१-३ )''शब्दमूलत्वात्''( ब्र.सू.२-१-२७ ) तथा च''न चाऽगमादृते धर्मस्तर्केण व्यवतिष्ठते'' ( वाक्यप. १-३० )''अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत्''( महा.भीष्म. ५-१२ ) स्मृतिकारा अपि ''वेदः धर्ममूल'' मित्यादिना प्राथम्येन निरूपयन्ति । ग्रन्थेऽस्मिन्महामुनिः ज्ञापयति ''वयं हि श्रुतिप्रामाण्यशरणा न युक्तिं बहु मन्महे इति'' । तथा च वृद्धोक्तिः,

प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुद्ध्यते ।
तमर्थं वेदयन् वेदः तस्मात् वेदस्य वेदता ॥

तत्परिज्ञातमस्माभिः प्रेमयसिद्धौ श्रौतबीजमूलं शब्दप्रमाणं प्रबलतमम् । भीषणतर्कप्रचुराः बौद्धाः जैनाः अपि वेदबाह्यत्वात् न स्वीकृताः आचार्यैः वैदिक्यां संस्कृतौ । आनुमानेऽप्रतिद्वन्द्वाः नैयायिकाः वैशेषिकाश्च निराकृताः वेदस्य कात्स्न्र्येन स्वीकारऽभावात् । पाशुपतशैवलिङ्गायतरसेश्वरशाक्तादयः श्रुत्यर्थवैपर्यत्वात् चार्वाकानाम् दर्शनं तु श्रूतिमूलरहितत्वाच्च अस्पृश्यम् । इति प्रमाण विचारः ।

उभयोः कर्मब्रह्मणोः प्रतिपादनपरोऽयं वेदः एकशास्त्रवत्वेऽपि कर्मकाण्डज्ञानकाण्डत्वेन द्विधा विभक्तः वेदव्यासेन । पूर्वकाण्डोत्तरकाण्डौ, पूर्वमीमांसोत्तरमीमांसे, कर्ममीमांसाब्रह्ममीमांसे इत्यादि बहुनामधेयोऽयं वेदः श्रुतीनां सामञ्जस्याऽभावात् भेदपरोऽभेदपरो वा, भेदाभेदपरो, विशिष्टं चाऽभेदपरः, केवलभेदपरो, शुद्धाऽद्वैतपरो, भेदावभासपरो, अचिद्ब्रह्मणोः स्वाभाविकौ भेदाभेदौ, चिद्ब्रह्मणोरौपाधिकभेदः, चिद्ब्रह्मणोः भेदाभेदौ स्वाभाविकावित्यादिनैकमतपरो नीतः भिन्नैः मतावलम्बिभिराचार्यैः । तैः तैराचार्यैः स्वस्वदृष्ट्या, स्वस्वशक्त्या, स्वस्वरुच्यनुसारेण व्याख्यातानि बादरायणसूत्राणि । वेदान् कात्स्न्र्येन स्वीकृतवत्सु आचार्येष्वपि अंशेनांशाधिक्येन मात्राधिक्येन वा विभिन्नता दरिदृश्यते, कुत्रचित् विषये तु वैरूप्यम् वर्तते । कुत्रचित् दुराग्रहात् हठाद्वा स्वमते आकृष्टाः श्रुतयः, तासां तात्पर्यञ्च ।

कश्चन सगुणब्रह्मवादी, केचन निर्गुणब्रह्मवादिनः, केचन निर्गुणसगुणोभयब्रह्मवादिनः, कुत्रचित् परिणामवादः, विवर्तवादः, ब्रह्मणः मायायोगः, ब्रह्माऽज्ञत्वम्, ब्रह्मणः सर्वज्ञत्वम् , परस्य ब्रह्मणः उपाध्यालीढत्वम् - कर्मपरवश्यत्वम् वा, ज्ञानयोगेन मुक्तावस्था ब्रह्मणः, ज्ञानाऽभावे बद्धत्वम्, सृष्ट्युत्पत्तौ ब्रह्मैवाऽज्ञं भूत्वा विवर्तते । कुत्रचित् स्वयमेवोपादीयते, कुत्रचित् ब्रह्मणः निमित्तोपादानत्वम्, अभिन्ननिमित्तोपादानत्वम्, जगतः पारमार्थिकसत्यत्वम्, व्यावहारिकसत्यत्वम् जगन्मिथ्यात्वम्, ब्रह्मणः अज्ञत्वावच्छेदेन जीवत्वम्, तत्रैव 'नेह नानास्ति किञ्चन', 'अयमात्मा ब्रह्म', 'तत्त्वमसि', 'एकमेवाऽद्वितीयं ब्रह्म', 'ब्रह्म वेद ब्रह्मैव भवति',

'ईशावास्यमिदं सर्वम्' इत्यादिश्रुतिभिः सन्मात्रं ब्रह्म ज्ञप्तिमात्रं ब्रह्म, निर्विशेषं ब्रह्म इति परैः सिद्धान्तितम् । तेन हेतुना महत् विघटकत्वम् वैरूप्यकत्वञ्चोत्पादितम् । ब्रह्मव्यतिरिक्तद्वितीयराहित्यत्वात् तैरपि मायया योगः, कर्मालीढत्वम्, अज्ञत्वेन संसरणत्वम् इत्यादि सोत्साहेन स्वीकृतम् । एष वदतो व्याघातः स्वपक्षं दूषयति ।

'पृथगात्मानं प्रेरितारं च मत्वा', 'अनश्नन्नन्योऽभिचाकशी'ति, 'भोक्ता भोग्यं प्रेरितारं च मत्वा', 'मत्तः परतरं नान्यदि'त्यादिना स्थूलसूक्ष्मचिदचिदवैशिष्ट्यं ब्रह्मणः निरूपितम् भगवत्पादरामानुजार्यैः । विशेषणांशे विकारित्वम् स्वीकृतं किन्तु विशेष्यभूते परब्रह्मणि विकारांशस्य गन्धाऽसहत्वमिति विशिष्टाद्वैतिनां दृढता । विशेषणांशे विकारित्वं तु स्वसङ्कल्पायत्तम् । सङ्कल्पात्मकं निमित्तकारणम् । विशिष्याऽभावे विशेषणस्य सर्वथा पृथक् स्थित्यभावः इति तेषां परमहार्दं, रहस्यं च । परब्रह्मैव चिदचिदोराधारः, नियामकं, शेषि च । विशिष्टीभूतं परंब्रह्म विना तयोः स्थित्यभावात् सत्ताऽभावादवश्यमेव विशिष्टाद्वैतं नयः स्वीकर्तव्यः। तत्र श्रुतिस्मृतीनां महती शृंखला 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितोजगत्', 'यस्य पृथ्वी शरीरमित्यारभ्य यस्यात्मा शरीरम्, यस्याऽक्षरं शरीरम् योऽक्षरं यमयति', 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा', 'आत्मधारोऽखिलाश्रयः', 'ज्ञाज्ञौ द्वावजावीशानीशौ', 'नित्यो नित्यानां चेतनश्चेतनानाम्', 'सोऽकामयत बहु स्यां प्रजायेय', 'सर्वस्य वशी सर्वस्येशानः', 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशी'ति, 'तस्य भासा सर्वमिदं विभाति', प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'विद्याविद्ये ईशते यस्तु सोऽन्यः' एताभिः श्रुतिभिः मायातत्त्वतः चेतनजीववर्गतः च परमात्मा भिद्यते विशिष्यते च । यत्र कुत्राऽप्यभेदवाचिकाः श्रूतयः श्रुयन्ते तत्र तत्र तदायत्तत्वम्, तदन्तर्यामित्वं तदाधारभूतत्वम् तदात्मकत्वञ्च ज्ञाप्यन्ते न तु तत्त्वेनैक्यमिति । न च स्वरूपेणैक्यम् इति सुस्पष्टम् ।

येन परब्रह्मणा स्वविशेषणभूतौ स्थूलसूक्ष्मचिदतौ सर्वप्रकारेण ध्रियेते, नियम्येते, स्वस्मिन्, लीयेते तस्मादपृथक्सिद्धविशेषणभूताविमौ स्वातन्त्र्येण स्वसत्ताऽभाववन्तौ । अनेनैव हेतुना विशिष्टाद्वैतं तत्त्वमनन्यन्यगतिकतया स्वीकर्तव्यम् । उक्तं च भगवता स्वामिनारायणेन "मतं विशिष्टाद्वैतं मे" ( शिक्षापत्री- १२१ ) एतद्विषयं मुक्तानन्दस्वामिभिर्द्योतितमस्मिन्नेव भाष्यरत्ने,

"एवं दोषबाहुल्याद्विरोधबाहुल्याच्चैतानि त्रीणि मतानि परिहाय सर्वथा निर्दोषं *सकलमतराजराजं विशिष्टाद्वैतमत*मेवाश्रितानामस्माकं न कापि विरोधाद्यापत्तिः" ।

प्रस्थानत्रयीषु श्रुतितात्पर्यार्थगर्भितानां ब्रह्मसूत्राणामनन्यतमत्वं सुविदितमस्ति । भगवता श्रीस्वामिनारायणेन स्वग्रन्थे सच्छास्त्रपरिगणनाऽवसरे 'वेदाश्च व्याससूत्राणि' ( शिक्षापत्री-

९३ ) इत्यारभ्य 'एतान्यष्ट ममेष्टानि सच्छास्त्राणि भवन्ति हि '।( शिक्षापत्री ९५ ) स्वेष्टसच्छास्त्रेषु पर्यपाठि ।

पुराकालात् आर्षपरंपरायामेका परिपाटी प्रचलिता वर्तते यत् सम्प्रदायप्रस्थाने औत्सुक्यानामाचार्याणाङ्कृते प्रस्थानत्रय्युपरि भाष्यं आलेखनीयं येन प्रस्थापितसम्प्रदायस्य वैदिकता सिद्ध्येत् । किमपि नूतनप्रवर्तनाय केनाऽऽधारेण प्रस्थानं कर्तव्यम् इति प्रश्ने सञ्जाते सति नैकानामाचार्याणामस्य ब्रह्मसूत्रस्योपरि कृतभूरिप्रयासेन सर्वशास्त्रसमालोचनात्मको विवरणात्मको वा महाप्रबन्धः, वार्तिकानि, वृत्तयः, भाष्याणि, टीकाश्च निर्मिताः वर्तन्ते, तत्त्वजिज्ञासुभिश्चास्वाद्यन्ते । "एकं सत् विप्रा बहुधा वदन्ति" ( ऋ.सं.२-३-२२-४६ ) एषा श्रुतिः एतां प्रणालीं परिपुष्णाति । स्वमतप्रस्थापनाय परिरक्षणाय स्वमतपुष्ट्यै च स्वसम्प्रदायानुकुलं शास्त्रं गुम्फितवन्तः श्रीमच्छङ्करमध्वनिम्बार्कवल्लभरामानुजप्रभृतयः आचार्याः। एतां वैदिकीमर्यादामनुसृत्य भगवतः श्रीस्वामिनारायणस्य परमोपासकाः, तेषामेवाऽन्तेवासिनः पट्टशिष्याश्च सद्गुरुवर्याः सकलशास्त्रपारङ्गताः, सर्वासु विद्यासु कलासु च निपुणाः ब्रह्मविदां वरिष्ठाः सत्स्वग्रगण्याः श्रीमुक्तानन्दस्वामिवर्याः द्विशतवर्षपूर्वं व्यरचयन्नेतत् परं निःश्रेयस्करं नातिविस्तृतं नातिक्लिष्टकरञ्च परमास्वादभूतं तत्त्वरहस्योद्घाटनपरमिदं "ब्रह्मसूत्रभाष्यरत्ना"ख्यम् सच्छास्त्रम् ।

भगवत्पादरामानुजाऽऽश्रिताः यया निष्ठया विशिष्टाद्वैतसरणीं स्वात्मनि दृढीकुर्वन्ति तेनैव प्रकारेण सर्वावतारिश्रीस्वामिनारायणोपासकाः तदाज्ञाधीनत्वेन विशिष्टाद्वैतरहस्यं परमभावेन दत्तहृदा च स्वश्रेयस आमनन्ति इति परं सत्यम् । किञ्चौद्धवीयाः लक्ष्मणाचार्यनिर्मितानि शास्त्राण्येव सोत्साहेन पठन्ति नान्यदिति । एकस्यैव पितुः जातयोः द्वयोः पुत्रयोः समानगृहनिषेवणसंस्कारभोजनाच्छादनवस्त्राध्ययनादिलाभे सति वैशिष्ट्यमवलोक्यते तथैव इह सम्प्रदाययोः द्वयोर्मध्ये बहुमात्रायां साम्यं वैशेष्यञ्चानुभूयते प्राज्ञैः ।

अत्र श्रीस्वामिनारायणसम्प्रदाये रीतिनीतिव्यवस्थितयः काश्चित् ज्ञाप्यन्ते ।

परब्रह्मणः सारूप्योपासना - ब्रह्मभावमवाप्य सेवाभक्तिः मुक्तिः । परब्रह्मब्रह्माऽनादिसादिमुक्तानां तेजस्सु सजातीयत्वे सति महद्वैलक्षण्यम् । तत् दिव्यलोकस्थैरेवाभिज्ञायते न तु सामान्यकर्मवश्यैः जीवैः । परमात्मनः नित्यचिद्घनसाकारविग्रहवत्त्वम् । लोकान्तरे धृतमानववपुस्त्वेऽपि दिव्यलोके ब्रह्मपुरे महातेजसि चिदाकाशेऽक्षरधाम्नि सदावर्तमानत्वम् । सम्प्रदायेऽस्मिन् तत्तद् ग्रन्थेषु साक्षात्साकारशब्दस्य प्रचुरप्रयोगः दरीदृश्यते । साकारविग्रहस्य दृढता मुक्तिसाधनेऽनन्यतमत्वमविनाभूतञ्च । श्रीभाष्ये वाऽन्यमतवादिनां भाष्ये साकारशब्दस्य प्रयोगाऽभावः विज्ञायते । श्रीभाष्ये "निराकारं

नाङ्गीकुर्महे'' इति परमतखण्डने प्रयोगः प्रयुक्तः भाष्यकारैः। सगुणनिर्गुणशब्दाभ्याम् निर्वाहः कृतः इतः पूर्वभाष्यकारैः।

अवतारावतारिणाविति सुस्पष्टो भेदः स्वीक्रियतेऽस्मिन् सम्प्रदाये। तत्तूपनिषद्भिः सिद्धः। परब्रह्मणः अवतारिणः श्रीस्वामिनारायणस्य नैकावताराः, अवतारी तु स्वयं अक्षरधामाधिपतिः। नानावताराणाम् नाना धामानि। विभिन्नेषु धामसु सुखाऽवाप्तौ न्यूनाधिक्यं तारतम्यता च। स्वनिवासभूतस्याक्षरब्रह्मणः तेजोद्वारा कर्मफलप्रदातृत्वम्। अक्षरब्रह्मणः स्वरूपद्वयम्, एकेन परब्रह्म मुक्तात्मनः च ध्रियन्तेऽपरेण परब्रह्मणः परिचर्या। तत्त्वत्रये पञ्च भेदाः, ते चानादिभूताः, ते च जीवः ईश्वरो माया ब्रह्म परब्रह्म चेति। परब्रह्मणः सदैकस्वरूपवत्वम्, सगुणनिर्गुणौ परब्रह्मणः दिव्यमङ्गलविग्रहस्य केचित् विलक्षणभूतेऽलौकिक ऐश्वर्ये। न तु स्वरूपे परिणामः विकारत्वं वा। परब्रह्मणः पराभक्तौ जीवस्य ब्रह्मभावापन्नत्वं तुं प्राथम्यम्। आदिष्टञ्च भगवता, 'निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम्। विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वदा''। (शिक्षापत्री-११६) ब्रह्मदशाऽऽपन्नेऽपि ''धर्मेण सहिता कृष्णभक्तिः कार्येति तद्रहः ''(शिक्षा. १०२) एतत् परमं रहस्यमिति भगवता ज्ञापितम्। धर्मत्यागे सर्वशून्यत्वम्। उपासनया एव सर्वसाधनसिद्धयः। एकान्तिकानां हरिनिष्ठानां साधूनां समागमेन तत्कृपया च सद्यो मुक्तिः, अन्यथा साधनैः क्रममुक्तिः जन्मान्तरीयलभ्या वा। जीवस्याऽणुत्वं तूभयसाम्यम्। चतुर्विशंतितत्त्वान्यपि उभयसम्मतम्। धाम्नि परमात्मेच्छया जीवस्य दिव्यसाकारविग्रहवत्त्वम्, तत् चिद्घनचैतन्यमयम्। चैतन्यैकतत्त्वेन श्रीहरीच्छयाऽविर्भूतदिव्यशरीरम्। परब्रह्मणः प्रत्यक्षपरोक्षवादयोः महती चर्चाऽस्मिन्नौद्धवीये सम्प्रदाये, विस्तारभयेन नोद्घाट्यतेऽत्र। परमात्मनः साकारमूर्तिमत्त्वे सति जीवात्मनि प्रवेशः, सर्वकालिकास्थितिर्वा, न तु केवलयाऽन्तर्यामिशक्त्या स्वेतेजोद्वारा वा। परब्रह्मणि तत्सम्बन्धिसत्सु वा निश्चयसंशयौ लाभाऽलाभौ भवतः। निश्चये त्रुटिः मुक्तेरवाप्तये महती प्रतिबन्धकारी। एकस्य परब्रह्मणः एव कर्तृत्वे परिज्ञाते सति मायया मुक्तिः। ''फलाऽभिसन्धिराहित्येन कर्माण्यनुष्ठेयानीति शास्त्रेषु दृश्यते तत्तु समीचीनम्, न तत्र कोऽपि विशेषः'' इति भगवता उक्तम् सुधासिन्धौ, किन्तु साम्प्रदायिकशास्त्रेऽस्मिन् भाष्यरत्ने च कर्मानुष्ठाने 'श्रीहरेः प्रसन्नता' 'मम मोक्षश्च भवेत्' वेति हेतोरनुभानं परमावश्यकम् इति बहुवारं भणितम्। शरणागतिः भगवदाश्रयो वा मोक्षाऽवाप्तयेऽनन्यतमत्वम्। इतरसाधनानि भगवत्प्रसन्नतापराणि। ब्रह्माण्डानां प्रवाहाऽनादित्वम्। ज्ञानात्मकोऽऽत्यन्तिकः प्रलयः। परगुणग्राहकत्वं सदा स्वदोषाऽवलोकनं शोधनञ्च, एषा प्रक्रियैवाऽभिवृद्धिः। चित्तावरोधेन प्राणनिरोधेन वा समाधिः। साङ्ख्ययोगशास्त्रयोः परिशुद्धिः भगवता विधापिता सुधासिन्धौ। परमात्मनः मूर्तिमत्त्वे सति व्यापकत्वम्। वाक्कायमनसां तपः

भगवद्प्रीत्यै । अक्षरमुक्तानां परमात्मनः सर्वभोगसाम्येऽपि सर्वनियामकत्वस्य स्वामिन्याधिक्यात्, स्वामिसेवकभावना ।

भक्तानां दासदासत्वम् । परब्रह्मोपासकानामपि कैङ्कर्यम् । आज्ञानुवर्तित्वम् प्रीतेः लक्षणम् । भगवदाज्ञानुपालनं क्लेशाऽभावत्वम् । स्वरूपनिष्ठायां धर्मनिष्ठा समाहिता । सर्वभावेन परमात्मा समाश्रयणीयः । प्रेमपराकाष्ठा भक्तिः । भक्तौ पातिव्रत्यं अनिवार्यम् । अव्यभिचारिणी भक्तिः परमप्रेमास्पदा आनन्दप्रदा च । भूरिस्नेहाधिक्येन परमात्मनः श्रीविग्रहे एकीभूयप्रलीनत्वम् मुक्तात्मनः स्थितिः । एकान्तिकधर्मच्युतिः मरणम् । सतां द्रोहः स्वात्मनाशायैव । सत्स्वात्मबुद्धिः मोक्षद्वारोद्घाटिका । सद्भिः सह निश्छद्मत्वेन वर्तितव्यम् । 'वेदैकसमधिगम्यः' इतिवत् शास्त्रशब्देन श्रीहरेरविचलो निश्चयः । अक्षरमुक्ततात्मस्वाखद्योतान्महासूर्यपर्यन्तभेदाः ।

केषां सङ्गः कस्मै योग्याऽयोग्यः, केचन गुणाः दोषायन्ते केचन दोषाश्च गुणायन्ते इत्यादि नैकप्रकारकं श्रेयस्करं विज्ञानं सम्प्रदाये सर्वत्र समवलोक्यते । अत्र भाष्यरत्नेऽपि श्रीहर्युपदिष्टश्रीहरिवाक्यसुधासिन्धोः साक्षात्प्रभावः सुधिभिः अनुभूयते । न भाष्यरत्नमात्रेऽपि तु सकलस्वामिनारायणीयशास्त्रेषु गद्यपद्यात्मकेषु संस्कृतप्राकृतोभयग्रन्थेषु वा साक्षात् श्रीस्वामिनारायणमुखसरोजनिःसृतं सुधावाक्यात्मकमेतत् परमविशुद्धं ज्ञानं शब्दशरीरात्मकेनावतारितं तत्कालीनैः सद्भिः तत्परमप्रसादं वयं लभामहे ।

साक्षात् परब्रह्मकृपाप्रसादलब्धः शब्दब्रह्मपरब्रह्मोभयनिष्णातः श्रीमुक्तानन्दस्वामी जुगुम्फेदं शास्त्रं श्रीस्वामिनारायणसम्प्रदायानुसारेण विशिष्टाद्वैतमतप्रद्योतकं प्रपोषकं च परमरहस्यमयम् वेदव्याससूत्रतात्पर्यसम्मतं वैदिकीं प्रणालीमत्यजन् मण्डनमात्रेण दुर्मतखण्डनात्मकं साधकसंशयवृत्तिं निर्मूलीकुर्वन्नल्पविद्योपार्जनेन जनेनाऽपि समधिगम्यं, बहुशास्त्राऽऽकरोद्धृतप्रमाणनिर्देशपरं सरलया गीर्वाणवाण्या निबद्धम् श्रीभाष्यादि बहुशास्त्राऽध्ययनाऽसमर्थं प्रत्येतद्भाष्यरत्नं सुबोधगम्यं न त्वाधिक्येन परमतखण्डनाऽऽक्षेपमन्तरेण स्वाभिमतसिद्धान्ततत्त्वपुष्टिपरं सर्वविषयन्यायपरं प्रायः श्रीभाष्यान्तर्गताऽधिकरण-व्यवस्थानुसार्येतदौपनिषदं शास्त्रम् ।

किं बहुना विवरणेनैतस्य ग्रन्थस्य अध्येतार एव प्रमाणमस्य । प्रकटश्रीहरितत्साधुप्रसन्नतापरमिदं भाष्यरत्नं कस्मिन्नब्दे व्यरचत महामुनीत्यपरनामा मुक्तमुनिः तत्तु न निश्चीयतेऽपितु स्वयं उल्लेखितवान् ''दुर्गपुरमधिवसता'' इत्यनेन पश्चिमपाञ्चाले गुर्जरप्रान्ते सौराष्ट्रप्रदेशे भाषायां 'गढडा' इत्याख्ये 'दुर्गपुरे' तीर्थस्थले सम्प्रदायधुरंधराः सर्वसाधुशिरोमणयः योगिराजाः श्रीगोपालानन्दस्वामिनः तथा च तत्कृपाप्रसादाकांक्षिणा साधुमाधवदासेन साहाय्यसेवा कृता । ग्रन्थकारः एतद्विषयं प्रकाशयति ।

ध्यात्वा भक्त्याऽङ्घ्रिपद्मं निजहृदि ललितं स्वामिनारायणस्य ।
मुक्तानन्देन दुर्गं पुरमधिवसता भाष्यरत्नं मयेदम् ॥
सूत्राणामुत्तमानां रचितमविततं यर्हि शारीरकाणाम् ।
गोपालानन्दनामालिखदतिनिपुणो मत्कृतौ मत्सहायी ॥ २॥
तत्प्रसादसमवाप्तसुबुद्धिः साधुसेवनहरीक्षणचित्तः ।
तर्हि साधुरपि माधवदासस्तावुभावुरुमुदाधिसिषेवे ॥ ३॥
व्यासाभिप्रायबोधं शुभमिदमखिलं श्रीहरेः संप्रसादात् ।
संपूर्णं जातमित्थं सुमतिरुचिकरं भाष्यरत्नं सुबोधम् ॥
युक्ताः सल्लक्ष्मभिर्ये भगवदुरुसुखाः लेशमात्रं मुरारेः ।
दूरे स्थातुं न शक्ताः प्रकटहिरमुदो वीक्ष्य सन्तु प्रसन्नाः ॥ ४॥।

बहुकालव्यतिते सति ग्रन्थोऽयं सम्प्रदाये दुर्लभतां गतः । अस्माकमादिगुरुवर्याणां समस्तसम्प्रदायमातृतुल्यानां एषा रचना विद्वत्सु समास्वादनीया भवेत् साम्प्रदायिकं शास्त्रीयं भगवद्ज्ञानं सर्वदिक्षु, सम्प्रदाये जातेषु नूतनविद्वत्सु, सम्प्रदायेतरभगवद्ज्ञानपिपासुषु विद्वत्सु च सम्प्रसरेदिति विभावनयैतत्प्रकाशनकार्येऽस्माकं गुरुवर्याणां लब्धाज्ञेन मम गुरुबन्धुना श्रीसन्तवल्लभस्वामिना एतस्मिन् श्रेयस्करे पुण्यकार्ये साग्रहं प्रेरितोऽस्मि नियुक्तोऽस्मि च । वाराणस्यां पञ्चवर्षपर्यन्तं निवसिते मयि अध्ययनाध्यापने संलग्नमनोदशायामेतत् प्रकाशनपरं संशोधनकार्यं कर्तुं नाऽशकन्वम् । मध्ये देशान्तरीया यात्रा, संस्थानस्य महोत्सवादीनां च कश्चित् भार वोढः । तदनन्तरं परमशान्तिप्रदायके वृतालयधामनिवासकाले सावकाशत्वेनेदं सेवाकार्यं समाजवम् । समये समयेऽस्माकं सर्वेषां संस्थानानाममात्यपदारू ढेन श्रीशुकवल्लभदासेन स्वामिनोत्साहप्रपूरणेनानुग्राहितोऽहम्। सम्प्रदायाग्रेसराणां भगवत्प्रीतिपराणां भगवत्कथाद्वारेण बहुजनाध्यात्मसंपोषकानां सद्गुरुवर्याणां श्रीज्ञानजीवनस्वामिनां महदनुग्रहेणैतस्य भाष्यरत्नस्य हस्तलिपिनिबद्धप्रतद्वयं प्राप्तं तेनातिसौकर्यमभूत् ग्रन्थसंशोधने । ग्रन्थप्रकाशने तेषामप्यनुकम्पाऽविस्मरणीया ।

महामुनेः श्रीमुक्तानन्दस्वामिनः परमपवित्रीभूतायां सद्गुणशालिन्यां परमौज्वल्यशिष्यपरंपरायां प्राप्तशिष्यत्वानाम् साम्प्रतं वृत्तालयमन्दिरमुख्यामात्यपदारुढा-नामस्मद्गुरुवर्याणां श्रीघनश्यामप्रकाशदासजीस्वामिमहाभागानामाशीर्वादा एतस्मिन्कार्येऽस्त्सु च सम्मिलिताः सन्ति, किं वा तदीयमेतत् कार्यं तेषामाज्ञयाऽस्माभिः सम्पादितम् । अनेन परमां

तुष्टिमवाप्नुवन् ते च । अवतारिणः श्रीस्वामिनारायणप्रभोः मुक्तमुनेश्च श्रीचरणेष्वेष अर्घ्यः अस्मत्परितोषणाय च ।

भाष्यरत्नान्तर्गतं अशीत्यधिकसंख्यकग्रन्थोद्धृतप्रमाणाकरान्वेषणमतीव दुर्गमकार्यं श्रीहरिमुक्तमुन्योः कृपया सम्पन्नं जातं तदप्यानन्दकरमस्मत्कृते, विपुलवैदिकसाहित्यसमुद्रमथितेन चितैः रत्नैराभूषितोऽयं ग्रन्थः महामुनिना, तन्मथनपरिश्रम आनन्दप्रदोऽभूत् । मदात्मीयचिन्तनजोषीमहोदयः रत्नान्वेषणार्थं प्रायतत तदर्थं भूयः साधुवादः।

मुक्तमुनेः कृपाप्रसादमात्रैकप्रयोजनाय जामनगरनिवासिधवलजोषी-महोदयेनाऽशुद्धिपरिहाणाय श्रमः कृतः, सोऽप्येतत्पुण्यकर्मभाग्भूयात् ।

मदात्मीयेनाऽम्बरीषकुमारमिश्रमहोदयेन विद्वद्वर्येणैतस्य ग्रन्थस्य विहङ्गावलोकनद्रष्ट्या क्षतयः समुच्छेदनाय व्यस्तदशायामप्यवकाशप्रदानेन भगवतः मुक्तमुनेश्च प्रसन्नताप्राप्त्यै भूरिश्रमः कृतः तेन सोऽपि भगवत्कृपाभाग्भवत्विति सादरं प्रार्थये ।

अनवधानवशादुद्भूतस्खलनानि सम्परिष्कृत्य संस्कृत्याऽस्वादनीयेयं स्वामिवर्याणां कृतिः। तन्मोमुद्यतां समास्वाद्येमां मोदनीयां कमनीयां महामुनिविरचितां श्रेयस्करीं कृतिम् ।

सज्जनकृपाकांक्षी
सा. पूर्णवल्लभदासः
श्रीस्वामिनारायण-गुरुकुलम्
कण्डारी, वटपत्तनम् ( गुजरात )
श्रीघनश्याममूर्तिप्रतिष्ठामहोत्सवः
कार्तिकशुक्लतृतीया - २०७३

॥ श्री हरिः॥

# हार्दिकाभिनन्दनानि

'ऋते ज्ञानान्न मुक्तिः' इति वेदविदां निष्कर्षः ।

'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' (गी.४-३८), 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाऽधिगच्छति' । (गीता. ४-३९) 'ज्ञानीत्वात्मैव मे मतम्' (गीता ७-१८), 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' (गी. ७-१७) इति हि भगवता गीतायां ज्ञानस्य ज्ञानिनश्च महिमानं गीतम् । तत् किं नाम ज्ञानम् ? "ज्ञानं च जीवमायेश रूपाणां सुष्ठु वेदनम्" शिक्षापत्र्यां ज्ञानलक्षणं ज्ञापितवन्तः भगवन्तः श्रीस्वामिनारायणाः । भगवत्पादश्रीमद्रामानुजाचार्यैः वेदान्तज्ञानेनैव व्युत्पत्तिः पूर्यते' इति वेदार्थ सद्ग्रहे वेद-वेदाङ्गज्ञानस्य अनिवार्यता सूचिता । उक्तं च भगवता श्रीहरिणा सुधासिन्धौ सांख्य-योग-वेदान्त-पञ्चरात्राणां ज्ञानेनाध्ययनेन च परिपूर्णज्ञानं सञ्जायते । तथा च 'वेदाश्च व्याससूत्राणी 'ति स्वग्रन्थे स्वाभीष्टसच्छास्त्रपरिगणने ब्रह्मसूत्रगणं समाविष्टम् । तथा चोक्तं सुधासिन्धौ, ।

एवं वेदादिभिः शास्त्रैरेकवाक्यतयैव ये ।
कृष्णं विदुः परं तत्त्वं त एव ज्ञानिसत्तमाः ॥ (वृ. २-३६)
एवं भगवतो ज्ञानं विना द्रोहो भवेत्खलु ।
तस्मात्तदेव यत्नेन संसाध्यं सन्निषेवया ॥ (वृ.२-४१)

ज्ञानोत्पादकं ज्ञानपरिशोधकमिदं 'ब्रह्मसूत्रभाष्यरत्नं' शास्वतसुखाय आत्यन्तिकनिःश्रेयसे व्यरचयन् सम्प्रदायसकलहार्दाभिज्ञाः, सर्वविद्यानिधानाः, हरिवाक्यसुधासिन्धुमर्मज्ञाः, सर्वसाधुगुणविभूषिताः, सत्सङ्गमातृतुल्याः, महामुनयः श्रीमुक्तानन्दस्वामिनः ।

ग्रन्थेऽस्मिन् आत्यन्तिकनिःश्रेयसे वर्णितानि गुम्फितानि तत्त्वरत्नानि जिज्ञासवे मुमुक्षवे विदुषे ज्ञानपिपासवे च सुधानिधिरेवेति मे निश्चयः । किं विशेषालेखनेन ? चेतसि भाष्यस्यास्य रत्नधारणमेव वैदुष्यम् ।

बहुकालात् दुर्लभतां गतिमिदं 'ब्रह्मसूत्रभाष्यरत्ना 'ख्यं सच्छास्त्रं' श्रीहरिकृष्णपरमात्मन इच्छया एव अस्माकं गुरुवर्याणां प्रेरणया च प्रकाश्यतां जायते । तद्ग्रन्थसम्पादने मम गुरुबन्धुना विदुषा श्रीपूर्णवल्लभस्वामिना श्रीहरिमुक्तमुन्योः प्रसन्नतालाभैकलोभेन कृतभूरिप्रयासेनेदं सम्पादितम् । मेलुकोटे निवासिनः विद्वांसः भक्त्याद्रहृदः साधुसज्जनविद्वज्जनप्रियाः सन्तः श्रीरामप्रियाः महोदयाः रामानुजोद्धवसम्प्रदायतत्त्वज्ञाः अस्माकं सुहृदाः प्रभुसन्तजनप्रीत्यर्थं

ग्रन्थप्रकाशने चित्ताकर्षं प्रयत्नं कृतवन्तः आसन् । तेषां सहयोगः अविस्मरणीयः । अत्र समाविष्टानां आशीर्वादपत्रानां गुरुजनानां मार्गदर्शनेनेदं सञ्जातग्रन्थाकारस्वरूपं फलमिति महतां कृपया निष्पन्नमिदं कार्यम् । ते सर्वेऽस्मत्सु प्रसन्नाः भवेयुरिति सादरं विनतं प्रार्थये ।

ग्रन्थप्रकाशनेऽनुमतिं दत्तवन्तः मेलुकोटेस्थ 'संस्कृत संशोधन संसत्' संस्थानस्य मुख्यदिशानिर्देशकाः विद्वांसः श्रीसिद्धेगौडमहोदयाः तथा च अन्तिमावस्थायामक्षराशुद्धिनिवारणाय प्रदत्तचितेन बहुमूल्यमवकाशप्रदत्तवन्तः श्रीमन्तः विद्वांसः एस. नारायणमहोदयवर्याः, तेषां कृते वयं ऋणानुबन्धिनः ।

एतत् ग्रन्थप्रकाशने आर्थिकसेवां कृतवन्तः श्रीहरिमुक्तानन्दस्वामिनोः सेवया प्रीतिभाजनाः शैक्षणिकप्रचारप्रसारकार्ये संल्लग्नाः सुरतनगरस्थाः मूलतः 'आटकोट' निवासिनः भगवतः श्रीस्वामिनारायणस्य परमाश्रिताः सत्सु प्रीतिमन्तः भक्तवर्याः श्रीगोवर्धनभाइ पोपटभाइ पटेल-महोदयाः तेषां धर्मपत्निः श्रीमति कुंवरबाइ गोवर्धनभाइ पटेलः, सुपुत्रः श्रीदीपकः, पुत्रवधू च श्रीमति प्रियङ्का दीपक पटेलः, सर्वे सत्सङ्गे विवर्धमानाः भवेयुरिति श्रीहरिशरणौ प्रार्थये याचे च ।

शा. सन्तवल्लभदासः
( पि.एच.डी., वेदान्ताचार्यः )
श्री स्वामिनारायण मन्दिर वृत्तालयः,
( सह अमात्यः )

## "श्रीहरिवाक्यसुधासिन्धोः प्रचुरप्रभावः"

साक्षात्परब्रह्मणः सर्वावतारिणः भगवतः श्रीस्वामिनारायणस्य तथा च तत्साधर्म्यमापन्नानामनाद्यक्षरमहामुक्तानां प्रत्यक्षपरमश्रेयस्करसंवादात्मको भाषायां 'वचनामृते' त्याख्यः 'श्रीहरिवाक्यसुधासिन्धुः' नामकः ग्रन्थः परमनिःश्रेयसाय सर्वोत्कर्षेण सर्वाधिक्येन निपीयतेऽऽश्रितजनैः । सुधासिन्धोरमृताऽऽचमनं नैकजनूषां दुःखसंशयशल्यसमुद्धारकं सुबोधगम्यं सुधापानेनऽमृताख्यमोक्षप्रदायकञ्च ।

वेदानां यथा स्वतःप्रमाण्यं तथैव साक्षात् श्रीहरिकृष्णपरंब्रह्ममुखसरोजनिःसृतं सुधावचनं प्रकर्षेण प्रमाणतमं वैदिक्यां परिपाट्यां सम्प्रदाये भारते वर्षे च । संस्कृतप्राकृतसर्वसम्प्रदायग्रन्थेषु चरित्रग्रन्थेष्वाचारग्रन्थेषु च श्रीहरिमुखनिःसृतस्य सुधोपमस्य ज्ञानस्य प्रभावः परिपूर्णरूपेण दरिदृश्यते सर्वत्र । किं पुनरेतस्मिन् भाष्यरत्ने तत्सुधाज्ञानस्य सन्निवेशः न भवेत् । विशिष्टाद्वैतमतप्रस्फोटकं श्रीभाष्यमासीत् पूर्वं तर्हि श्रीस्वामिनारायणमहाप्रभोः हार्दाभिप्रायप्रद्योतनमन्तरा किं फलं को वा विशेषः एतद् ग्रन्थग्रथितेन । एतदपि वक्तुं परमौचित्यं यत् कारयिता स्वयं श्रीहरिः तथा च कर्ता मुक्तमुनिरेतत् भाष्यरत्नस्य ।

भाष्यरत्नेऽस्मिन्नवतारितं ज्ञानमपि सम्प्रदायप्रयुक्तशब्दावल्यनुसारेण प्रथमदृष्ट्या विज्ञायते । सम्प्रदायप्रचलिताः शब्दावलयः तत्तत्स्थाने सुचारुरूपेण प्रयुञ्जिताः श्रीस्वामिभिः । यथा

"साधूनां हरिनिष्ठानाम्",

"परब्रह्मपरमात्मपरमेश्वरपुरुषोत्तमहरिकृष्णाविष्णुवासुदेवनारायणमुनिप्रभृति पर्यायवाचकैः",

"वराहाद्यवतारधारिणः परब्रह्मणः",

"परमात्मवासुदेवनारायणमुनिप्रभृत्यनेकाभिधस्य परब्रह्मणः",

"ब्रह्मशब्देन परमात्मसंज्ञं परब्रह्म तत्स्थानभूतं ब्रह्मपुराख्यमक्षरब्रह्म चोक्तम्",

"समस्तचेतनाऽचेतनशरीरकस्य जीवेश्वरप्रकृतिपुरुषकालाऽक्षरब्रह्मभ्यः",

"सच्छास्त्रप्रोक्तचेतनाऽचेतनपरब्रह्मस्वरूपाऽभिज्ञः हर्येकान्तिकभक्तं गुरुं प्राप्य सर्वथा समारम्भणीयं शास्त्रम्", ( अत्र भाष्यरत्ने 'सच्छास्त्र' शब्दप्रयोगः विशिष्यते– इतरग्रन्थेषु बाहुल्येन केवल शास्त्रशब्देन निर्वाहः कृत इत्यवलोक्यते )

"धर्मज्ञानविरतियुतभक्तिलभ्यस्य परमदयानिधेः",

"हरिनिवासभूते ब्रह्मपुरेऽक्षरात्मभावं प्राप्तेन तदुपासकवृन्देन प्राप्ता तत्सेवारूपा मुक्तिः प्रयोजनं चाऽस्ति",

श्रुतिस्मृत्युक्ते ब्रह्मपुरे स्थितस्याऽनन्तकोटिमुक्तसेवितचरणकमलमुक्तचेतन-स्वपरिचर्यानुरूपभागवतीतन्वादि प्रदानचतुरं च ब्रह्म जगन्निमित्तमस्ति", ( अत्र भागवतीतनु तथा च तस्याः प्रदाता परमात्मेति विशेषः, भाष्यान्तरेऽऽविर्भूतगुणाष्टकस्य महिमा प्राधान्यञ्च प्रतिपादितम् ।)

"साकारत्वप्रतिपादनपरमेव बोध्यम्, नहि निराकारत्वप्रतिपादनपरम्",

"परब्रह्मसंज्ञो हरिः",

" तं परब्रह्मसंज्ञं हरिमाहुर्मुनयः",

"हर्यवतारव्यासेन समुद्भावितमिदं सूत्रम्",

"हरिकृष्णेत्येकशब्दावाच्यं ब्रह्मविज्ञायते" ( भगवतः श्रीस्वामिनारायणमहाप्रभोः नवनामानि मुख्यतः प्रथितानि वर्तन्ते तेषु हरिः, हरिकृष्णश्च श्रीस्वामिनारायणपरं रुढ्यर्थे प्रयुज्यते साम्प्रदायिकग्रन्थेऽऽश्रितजनैश्च ।

"दिव्याऽप्राकृतमूर्तिमत्तया",

"दिव्यविग्रहेण ब्रह्मपुरे स्वयं द्योतमानं तत्राऽवस्थिताऽसंख्यस्वभक्तमुक्तकोटिभिः साकं कीडत् मोदमानं च वर्तते" इत्यादि बहुशब्दशृंखलाभिः शब्दचित्रकेण सम्प्रदायप्रणालीमक्षगोचरां कारयतीदं ब्रह्मसूत्रभाष्यरत्नं सच्छास्त्रम् । किं वाऽधिकेन वक्तव्येन ? सुधासिन्धौ पृष्टप्रश्नेष्वनेन महामुनिना सर्वाधिक्येन पृष्टाः प्रश्नाः सन्ति । तेन भगवतः श्रीस्वामिनारायणस्य रहःप्रभावितमिदं भाष्यरत्नम् । सुधासिन्धुग्रन्थगुम्फनसाधुमण्डलीष्वयं मुनिवर्यः अग्रगण्यः प्रमुखसम्पादक आसीत् । तेन श्रीहरिवाक्यसुधासिन्धुमयमिदं ब्रह्मसूत्रभाष्यरत्नम् ।

## कर्मानुष्ठानविचारः

भक्तिः श्रद्धा च धर्मादि यद्यत्कृष्णसम्बन्धिसत्कर्म क्रियते नरैरिह मुमुक्षुभिः तत्सर्वं विधातव्यं फलाऽभिसन्धिरहितं सदेत्युक्तमस्ति सच्छास्त्रे सत्यमेवोक्तमस्ति तत् । 'किन्तु स्वस्मिन् भगवतः प्रसादस्त्वर्थ्य एव तैः', मोक्षसाधनान्यपि भगवतः प्रसन्नतैकहेतुकानि कर्तव्यानि,

अन्यथा तामसं कर्म तत्स्यादित्यवधार्यतामित्युक्तं भगवता सुधासिन्धावन्त्यप्रकरणस्य पञ्चविंशतितमे तरङ्गे।

वस्तुतः क्रियमाणं केवलं कर्म न शुभाऽशुभफलाय कल्प्यतेऽपि तु तदनुवर्तिनी भावना तदनुवर्तमानो हेतुः वा फलजनने मुख्यत्वेन परिगण्यते। कुत्रचित् हिंसा महादोषाय मन्यते, रणाङ्गणे सुराज्याय स्वरक्षायै गोब्राह्मणधर्मरक्षणाय क्रियमाणा सा हिंसा क्षत्रियाणाङ् कृते स्वर्गप्रदात्री भाव्येत। शुभाऽशुभफलजनने हेतोरत्र प्राबल्यं न तु कर्मणः।

हिंसारूपकर्म त्वत्रोभयसामान्यम्। तद्वदत्राऽध्यात्मप्रकरणे क्रियमाणे कर्मणि परिशुद्धहेतोरत्यधिकप्राधान्यं न तु विहितकर्मणाम्।

वैष्णवेऽपि दर्शनशास्त्रे भाष्यादिषु वा 'फलाऽभिसन्धिरहितत्वमि'ति विभावनया कर्माण्यनुष्ठेयानीत्येका शास्त्रसम्मताप्रणाली महाचार्यैः प्रवर्तिता वर्तते। तां प्रणालीं परिशोधयता भगवता श्रीस्वामिनारायणेन स्वग्रन्थे (सुधासिन्धौ) 'भगवतः प्रसाद (प्रसन्नता) स्तु अर्थ्य एवे'ति साग्रहमादिष्टम्। अत्र सम्प्रदाये भक्तिधर्मादिकर्मानुष्ठाने भगवत्प्रसन्नतात्मको हेतुः सर्वाधिक्येन प्रतिपाद्यत आचर्यते च। दर्शनान्तरे कर्मानुष्ठाने फलाऽभिसन्धिराहितस्य या प्रधानताऽनिवार्यता वा वर्तते तस्याऽत्र विशोधनं कृतम्। किञ्च फलाऽभिसन्धिराहित्येनाऽऽचर्यमाणे कर्मणि कस्याऽपि हेतोरभावात् शुष्कत्वाऽऽपत्तिः तथा च तामसत्वमापद्येत। फलाऽभिसन्धिसाहित्येनाऽऽनुष्ठेये कर्मणि सकामत्वाऽऽपत्तिः तेन भवबन्धनं संसृतिश्च। एतदुभयदोषनिवारणाय कर्मानुष्ठाने परब्रह्मणः प्रसन्नतात्मको हेतुः सन्निविष्टः श्रीहरिणा सुधासिन्धौ। एतद्रहःप्रतिबिम्बितेऽस्मिन्भाष्यरत्ने सूचितं मुक्तमुनिना।

तद्यथा प्रथमे सूत्रे, "फलानुसन्धानहीनतया *परब्रह्मणः प्रसन्नतार्थं* कृतस्य वर्णाश्रमोचितकर्मणः पापक्षयसम्भूतान्तःकरणशुद्धिद्वारा मुमुक्षोर्ब्रह्मविचारयोग्यत्व सम्पादकत्वेन परब्रह्मज्ञानकारणत्वात्"। तथा च

"अतः कर्मफलानुसन्धानहीनेन पुरुषेण *परब्रह्मतुष्ट्यै*" इत्यादि।

"*परब्रह्मतुष्ट्यैकफलस्य* फलान्तराऽभिसन्धिरहितकर्मणः"

"*हरिप्रसादरूपफलेच्छया* फलान्तराभिसन्धिरहितस्य वर्णाश्रमोचितस्य धर्मस्य"

इत्यादि नैकवचनैः सुधासिन्धोः हार्दं महामुनिना गुम्फितमस्मिन् भाष्यरत्ने।

## प्रत्यक्षपरोक्षविचारः

ग्रन्थान्तरेऽल्पांशेन श्रूयमाणो प्रत्यक्षस्वरूपवादः परोक्षस्वरूपवादश्चात्र महामुनिकृतेऽस्मिन् भाष्यरत्ने श्रीहरिवाक्यसुधासिन्धोः साक्षात् प्रभाववशात् सार्थकत्वेन विलोक्यते । सुधासिन्धौ यत्र कुत्राऽपि 'भगवान्', 'परब्रह्म', 'श्रीकृष्णः', 'परमात्मे' त्यादिशब्दानां प्रयोगाः प्रयुक्ताः तत्र तत्र 'प्रकट', 'प्रत्यक्ष', 'साक्षात्' 'तव नेत्राऽग्रवर्तीति प्राक्प्रयोगः बाहुल्येन विशेषणरूपेण संयोजितः श्रीहरिणा ।

कुत्रचित् 'साक्षात्' शब्दस्त्वपरपर्यायरूपेण, क्वचन वक्ता स्वयं श्रीस्वामिनारायणवाचकोऽयं प्रत्यक्षशब्दः प्रयुक्तः । कुत्रचित् हृद्याऽऽविर्भूतस्थश्रीहरेरनुभवात्मको वा । निकटवर्तित्वम्, साक्षात्कारत्वं, सदासन्निधानम्, सर्वकालेनाऽनुभूयमानत्वम्, सर्वैरिन्द्रियैः सर्वैरन्तःकरणैः परिचर्याऽनुवृत्तिद्वारा वा सदासर्वदा समवलोकनम् प्रत्यक्षत्वम् । धामस्थश्रीहरिरत्यत्रमानववपुःस्थवृत्तालयादिमन्दिरे मूर्तिस्थाऽन्तरात्मनि दिव्यस्थ-श्रीहरेरैक्यनिश्चयात्मकज्ञानम् प्रत्यक्षत्वम् । प्रत्यक्षज्ञानमन्तराऽपूर्णकामत्वमिति सुधासिन्धोः परमहार्दम् ।

मयि, मद्धृदि, मदान्तरात्मन्यर्चास्वरूपे परमेकान्तिकसत्सु वा धामस्थपरमात्मा साक्षात् विराजते, स मां सदा सर्वदा सर्वतः विलोकते, मां शृणोति, मां प्रतिक्षणं रक्षति पुष्णातीत्यादिप्रकटभावेन साक्षात्भावेन क्रियमाणाऽऽराधनाऽर्चास्तुतिप्रार्थना वा लक्षगुणितफलप्रदा, सद्यःफलप्रदात्री च । पारोक्ष्येणाऽऽराधितं चेत् बीजमात्रमेव न तु परिपूर्णफलाय ।

प्रत्यक्षपूजनमानसपूजनयोः स्नेहाधिक्येन विभावनया साम्यम् । प्रत्यक्षत्वमत्र भावना बीजम् । प्रत्यक्षविभावनयाऽर्चास्वरूपेणाऽपि परमनिःश्रेयः । सुधासिन्धोरन्तर्गतमेतद्रहस्यं प्रत्यक्षस्वरूपमाहात्म्यप्रदर्शनपरं विज्ञायते । साक्षात् श्रीहरिं निषेवमाणैः तत्कालीनैः सद्भिः प्रत्यक्षस्वरूपपरं महिमानमतिगीतं स्वग्रन्थेषु काव्येषु कीर्तनपद्येषु च । सुधासिन्धोः काश्चन तरङ्गा अत्र प्रस्तूयन्ते ।

प्रकाशे विमले तस्मिन् साक्षात् कृष्णं स वीक्षते ।
नारदादिरिव स्याच्च ततः सोऽतिसुखी नृप ॥ ( प्र.२०-१८ )
कृष्णस्य निश्चयो यस्य प्रत्यक्षस्य भवेद् हृदि । ( प्र.९-३ )
प्रत्यक्ष एव यस्य स्याद् दृढनिष्ठा नराकृतौ ।
तद्दर्शनादिनात्मानं पूर्णं मन्येत चाऽत्र सः ॥ ( प्र.९-७ )

अतः प्रत्यक्षमासाद्य कृष्णं तदितरत्क्वचित् ।
वाञ्छनीयं न वै वस्तु कार्या निष्ठा दृढाऽत्र च ॥ ( प्र.९-१२ )
हरिजनाः परमामगमन्मुदं भगवति प्रकटेऽत्र दृढाश्रये ॥ ( प्र.९-१३ )
स एवाऽत्र नराकारः साक्षान्मां मिलितोऽस्ति हि ।
यान्याश्चर्याणि प्रागासंस्तान्यनेन कृतानि च ॥ ( प्र.२७-१० )

सुधासिन्धौ बहुस्थले प्रतिपादित एष प्रत्यक्षस्वरूपवादः प्रथमाध्यायस्य द्वितीयपाद एकादशे सूत्रे 'जुष्टं यदे'ति श्रुति व्याख्यानावसरे साम्प्रदायिकाऽर्थावबोधने द्योतितः ।

यथा ''समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोक' इति, अस्याः सांप्रदायिकोऽर्थः-जीवोऽयमनादिना कर्मनिगडेन बद्धस्तत्तत्फलभोगानुगुणमायामयबहुकलेवरप्रविष्टो दुर्वारतापसंघातमनुभवन्ननीशया पारवश्येन तद्व्यपोहितुमकुशल एव मुह्यमानः शोचति-महामोहनिबन्धनशोकजलधिमग्नो वर्तते; जुष्टं महामुक्तैः सेवितमन्यं क्षराक्षरपुरुषभिन्नम् ईशं सर्वनियन्तारं राधालक्ष्मीपतिं यदाऽस्य प्रसादेन पश्यति-*अपरोक्षेण* जानाति तदाऽस्य महिमानं निरतिशयम् अपहतशोकः प्राप्नोति ॥ ''

तथा च तृतीयाऽध्याये तृतीयपादे, ''यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३-३-३१ ॥ इति सूत्रे निर्णितम्

'*प्रत्यक्षश्रीहर्येकान्तिकभक्तानां* तु तदिच्छात एव ब्रह्मपुरप्राप्तिर्नतु प्रारब्धकर्मभोगाधीना । परब्रह्मणः स्वातन्त्र्यादिति पक्षान्तरनिर्णयः' ॥

एतन्निर्णयं सूत्राऽन्तरेण पुनः परिपुष्टं चतुर्थाध्याये प्रथमपादस्याऽन्तिमे सूत्रे, ''*प्रत्यक्षपुरुषोत्तमानन्योपासकानामा*धिकारिकाणां तु पुरुषोत्तमेच्छैव नियामिका न तु प्रारब्धकर्मफलभोगनियामकः पुरुषोत्तमेच्छया नियामकाभावादित्यपि पक्षान्तरनिर्णयः ।''

## साकारनिराकारविचारः

भारते वर्ष आर्षसंस्कृतौ निराकारमतावलम्बिन्येका सुविस्तृता परिपाटी पुराकालतः विद्यमाना वर्तते । वैदिक्यां प्रणाल्यां मूर्तिपूजकेष्वपि 'निराकारब्रह्मे'ति मन्वानः संख्यारहिताः ज्ञानिनः सन्त्यासन् भविष्यन्ति च । 'निराकार एव नराकारो भवति लोक ' इति तेषां ब्रह्मवाक्यम् । वेदबाह्यानां बौद्धजैनाऽनुसरणां तु का वार्ता ? सूक्ष्मदृष्ट्याऽवलोक्यते चेत् तर्हि साकारस्वरूपप्रतिपादनपरैः भगवत्पादरामानुजप्रभृतिभिराचार्यैरपि कुत्रचन साक्षात् साकारनिराकारपदप्रयोगो न प्रयुक्तः भाष्यादिस्वग्रन्थ इत्येकमाश्चर्यम् । सगुणनिर्गुणशब्दाभ्यां

कृतनिर्वाहैः तैः 'स्वाभिमतानुरूपैकरूप', 'अनन्तगुणनिधिः दिव्यरूपः', 'स्वानुरूपाऽसंख्येय', 'अभिष्टुतचरणयुगल' इत्यादि रूपाऽवयववाचिनः पदप्रयोगाः कृताः ।

अत्रैतन्महद्वैशिष्ट्यं यत्सुधासिन्धौ बहुवारं परब्रह्मणः दिव्यसाकारविग्रहस्य दृढता विधापिता । निराकारस्वरूपं मन्वानं प्रति भृशाऽरुचिः प्रदर्शिता च स्थले स्थले । निराकारज्ञातारः सुदृढधर्मधर्तारः चेदप्युपासनाभङ्गेन ब्रह्मसुषुप्तौ निःसीमकालपर्यन्तं निपतिताः भवन्ति । न तत्र दुःखलेशः किंवा न तत्र सुखलेशोऽपि तैरनुभूयते । धर्मफलेन दुःखाऽत्यन्ताऽभावः । उपासनाखण्डनेन सुखाऽत्यन्ताऽभावः । एका वैचित्री स्थितिः सुधासिन्धुसम्मता तैरास्तिकनिराकारवादिभिः प्राप्यते । न ततः तेषां समुद्धारः ।

'सर्वं साकारमि'ति श्रीस्वामिनारायणपरमहार्दाभिप्रायः । कथं सर्वं साकारमिति समुत्पन्ने प्रश्ने सति सर्वेषां पदार्थजातानामन्तगर्भे राजमानो परमात्मा सदा सर्वदा साकाररूपेण तिष्ठति स्वाऽलौकिकयोगकलया । साकाराविग्रहवतः परब्रह्मणः समुत्पन्नेयं सृष्टिः, यतो वा इमानि भूतानि जायन्ते इत्युनसारेण तस्मिंश्च पुनर्लीयन्ते । सुसूक्ष्माः जीवा अपि निरवयवाः साकाराः, तत्र प्रमाणम् - हृत्प्रदेशवर्तितत्वम्, स्वप्नावस्थायां कण्ठप्रदेशे किञ्चित्स्वल्पकालं स्थातव्यत्वम्, धर्मभूतज्ञानस्य संकोचविकासौ, उत्क्रान्तिवेलायां सूर्यरश्मिद्वारा धूमेन वा गतिः, गतिमत्वात्त आकारावन्तः ।

वालाग्रशतभागस्य शतधा कल्पितस्य च ।

भागो जीवः स विज्ञेयः स चाऽनन्त्याय कल्पते । (श्वेता. ५-९) इति श्रुतावस्याऽऽकारपरिमाणं ज्ञापितम् । मन इत्यादीन्द्रियाणामुत्पत्तिमत्वात् आकारवत्वम् । एतानीन्द्रियाण्यणूनि परकायप्रवेशे लोकान्तरगमनादिषु च जीवेन सह गच्छन्ति इति हि यतीन्द्रमतदीपिकाकारः । वायोर्चक्षुरिन्द्रियग्रहाऽभावात् स वायुराकाररहित इति वक्तुमनुचितं सर्वथा । रूपरहितत्वेन वायुना महावेगात् गृहवृक्षादिनि पात्यन्ते । सोऽपि साकारः त्वगिन्द्रियमात्र ग्राह्यः । दुःस्वप्नदशायां मनोवेगात् शुक्रपातः तेन मनोऽपि साकारम् । शब्दोऽपि साकारः महाध्वनिना काचः पाषाण इत्यादीनि वस्तूनि त्रोट्यन्ते । किं वा बहुपरिगणनेन सर्वं साकारमिति सुदृढेन मतत्वात् । वस्त्वस्त्याकारो नास्तीत्यज्ञानां मतम् । कुत्रचित् जीवं प्रति निराकार इति व्यवह्रियते तत्र लक्षणया निरवयवत्वमिति ज्ञातव्यम् ।

कर्तृत्वमात्रं साकाराश्रितत्वमिति सुधासिन्धोः रहस्याऽभिप्रायः । कृष्णाऽलिङ्गबोधने सर्वे महद्गुणा अतिदोषायन्ते तदुक्तं लौहप्रकरणस्य षोडशे तरङ्गे यत्

'पप्रच्छैकोऽस्ति को दोषो दोषायन्ते यतो गुणाः'', तं प्रत्युत्तरितं

''कृष्णाऽलिङ्गत्वबोधोऽपि गुणानां दोषताकरः '' इति ।

तथा च दुर्गपुराऽन्त्यप्रकरणस्य पञ्चत्रिंशत्तमे तरङ्गे

'दिव्यसाकारता नित्यं हरेरस्तीतिवेदनम् ।

मुख्यं लक्ष्मसतां ज्ञेयं तद्वन्तो हि प्रिया हरे :'॥ तथा च

'नस्यादुपासनादाढ्र्यं यत्तेषां शून्यवादिनाम्' ॥ ( ४५ )

कार्यायनप्रकरणस्य चतुर्थे तरङ्गेऽन्तर्यामिस्वरूपस्याऽपि मूर्तिवत्कार्यकारित्वात् सोऽपि मूर्तिमानेव तत्श्रुतिराह 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे'ति । सिद्धदशाऽऽपन्नैः महाऽनाद्यक्षरमुक्तैः यत्र यत्र दृष्टिः प्रसार्यते तत्र तत्र सर्वत्र पदार्थमात्रे प्रत्यणु राजमानोऽन्तर्यामी परमात्मा दृश्यते । भगवन्मूर्तिं विनाऽणुमात्रमपि न भासते इति सिद्धदशाऽऽपन्नानां लक्षणम् । सर्वत्राऽणुषु साकारमूर्ती राजते तस्मात्सर्वं साकारम् ।

एवं सर्वत्राऽक्षरब्रह्मणः प्रकाशे स्वयमक्षराधिपतिः भगवान् मूर्तिमान् विराजते तेन प्रकाशोऽपि अदृश्यदिव्यमूर्त्याधारो मूर्तिमानेव । सर्वत्रेशः आवास्यत्वात् सर्वं साकारम् । सूर्यकिरणेष्वणुषु सूर्यमूर्तिः विद्यते, तेजः किरणानाम् सकारणप्रसारात् । एवं धामकिरणानां सकारणप्रसारात् सर्वत्र मूर्तिमान्, भगवानस्ति । ततो कथितनिराकारमपि सर्वं साकारान्वितं साकारमेव । निराकारसाकारम्, अदृश्यदृश्यमितिवत् । साकारपरमात्मा सर्वत्राऽन्तरगर्भितत्वात् सर्वं साकारमिति सुस्पष्टम् ।

सुधासिन्धोस्तरङ्गा अत्र प्रस्तूयन्ते...

किञ्च सर्वापराधेषु कृष्णस्याऽऽकारखण्डनम् ।

महापराधो विज्ञेयः स कार्यः सर्वथा न वै ॥ ( प्र. ७१-९ )

मत्वा ये तु निराकारं तं ध्यायन्त उपासते ।

लीना ब्रह्मसुषुप्तौ ते नोद्गच्छन्ति पुनः क्वचित् ॥ ( प्र. ६४- २०

ऐश्वर्यं किञ्चिदपि ते लभन्ते नैव कृष्णतः । ( प्र. ६३-२१ )

अत्र भाष्यरत्ने महामुनिना प्रतिपादितो साकारस्वरूपविचारोऽत्र प्रस्तूयते ।

''अचक्षुःक्षोत्रं तदपाणिपादमि'त्युक्तिस्तु प्राकृतावयवनिषेधपरा दिव्यावयवप्रतिपादनपरा च । ननु 'एवं सततयुक्तास्ते भक्तास्त्वां पर्युपासते, ये चाप्यक्षरमव्यक्तमि'त्यादिनाऽक्षरब्रह्मणोऽप्युपासनविधानोक्तेस्तज्ज्ञेयं प्राप्यं चाप्यवगम्यते । अतः कथं तत्प्राप्यत्वाद्यनर्हमिति चेच्छृणु निरवयवाक्षरब्रह्मोपासकास्तु ब्रह्मसुषुप्तिभूते

तस्मिन्निरवयवतया तदैक्येन स्थिताः, अतस्तत्र सदास्थितस्य दिव्यविग्रहस्य परब्रह्माभिधपुरुषोत्तमस्यानवधिकातिशयस्वरूपानन्दं निरतिशयं पार्षदत्वसुखं च ते नानुभवन्ति। अतस्ते कैवल्यार्थिनो मन्दभाग्याः। तथाहि श्रूयते 'ततो इव ते तमो य उ विद्यायां रता' इति; अस्याः सांप्रदायिकोऽर्थः-उ इति; वितर्के ये नराःततोऽन्यस्यां विद्यायां निरवयवाक्षरात्मज्ञाननिष्ठायां रताः आसक्ताः केवलं निरवयाक्षरात्मस्वरूपमुपासते इत्यर्थः, ते परमात्मैकान्तोपासनहीनाः अमानित्वादिसाधनयुक्ताः केवलात्मज्ञानवन्तः भूयो बहुतरं तम इव जीवेश्वरब्रह्मपरब्रह्मणां परस्परात्यन्तोत्कृष्टत्वनिकृष्टत्वविवेकाभावादज्ञानसदृशं निरवयवं घनतेजोमयं ब्रह्म सुषुप्तिभूतमक्षरात्मस्वरूपं प्रविशन्ति निरवयवतया तदैक्येन स्थिता भवन्ति; न तु तत्रस्थपरमेश्वरपार्षदत्वमुपगता इति।

स्मर्यते च 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनमि'त्यादिवचनैः ***अक्षरब्रह्मोपासकानां कनीयस्त्वं परब्रह्मोपासकानां श्रेष्ठत्वं चाभिहितम्;*** अतोऽत्र प्रकृतमक्षरशब्दाभिधेयं परब्रह्मैव विज्ञायते। सूत्रार्थस्तु अदृश्यत्वादिगुणकः परब्रह्मसंज्ञः परमात्मैव, नाक्षरब्रह्म; कुतः धर्मोक्तेः अदृश्यत्वादिगुणवाक्यादुत्तरत्र यस्सर्वज्ञः सर्वविदित्यादिना तस्यैव सर्वज्ञत्वादिधर्माणामुक्तेः। तथान्यत्रापि श्रुतिस्मृतिषु मुमुक्षूणां मुक्तानां चापि ज्ञेयत्वप्राप्यत्वोपास्यत्वदर्शनीयत्वादिपरमात्मधर्माणामुक्तेः'। (१-२-२२)

एवं च

'अतः परब्रह्मणोऽपाणिपादादिविशेषणवृन्दं साकारत्वप्रतिपादनपरमेव बोध्यम्, नहि निराकारत्वप्रतिपादनपरम्'' (१-१-२),

''इत्थं सकलवेदकर्तृत्वं मुखाद्यवयववतो नारायणस्यैव सिद्धम्'' (१-१-३), ईक्षतेर्नाशब्दम् इति सूत्रस्य विलक्षणोऽयमर्थः,

''इदानीं पक्षान्तरस्थमस्पष्टतयोक्तं सूत्रार्थं स्पष्टयति-ईक्षतेः परब्रह्मणि नेत्रोपलक्षकेक्षणधर्मात् आशब्दं आ समन्ताद्भावेन मुखकरपादाद्यवयवसूचकश्रुतिस्मृतिशब्दैः प्रतिपादितम्; अतो ना नृशब्दवाच्यं दिव्याप्राकृतपुरुषाकारतयोक्तं यत्परं ब्रह्म तच्छास्त्रयोनितया विज्ञायते। एवं तस्य मुखादिमन्नराकारत्वाच्छस्त्रकारणत्वम्; शास्त्रकारणत्वाच्च नराकारत्वमिति परस्परहेतुबलेनोभयं सिद्ध्यति ''। (१-१-५)

सुधासिन्धोः प्रथमप्रकरणस्य पञ्चचत्वारिंशत्तमे तरङ्गे तथा च शतोत्तरत्रयःत्रिंशत्तमे तरङ्गे 'स ऐक्षते' ति श्रुतिव्याख्यानमत्र समाविष्टम्। किं वृथा विस्तारितेन? बहुस्थले परमात्मनः साकारविग्रहः प्रसिद्धः।

आधारानन्दमुनिकृते 'श्रीहरिचरित्रामृतसागर' नामके ग्रन्थे 'साकारस्वरूपकेण सन् व्यापकत्वम्' 'साकारव्यापकत्वम्' इति सुघटकत्वेन सिद्धान्तितः। अरूपकत्वेन

निराकारत्वेन व्याकत्वमपि श्रीस्वामिनारायणमतावलम्बिभिः कदापि न सह्यते । तत् सुधासिन्धौ वृत्तपुरप्रकरणस्य त्रयोदशतरङ्गे स्पष्टीचकार,

एकोऽप्यनेकरूपोऽसौ स्वसामर्थ्येन जायते ।

एवं व्यापकता तस्य ज्ञातव्या नत्वरूपतः ॥ २३ ॥

एवं स व्यापको ज्ञेयो नित्यदिव्यतनुः प्रभुः ।

अप्राकृतस्वरूपत्वादरूपः क्वचिदुच्यते ।( २४ )

अत्राऽपि व्यापकस्वरूपस्य अप्राकृतदिव्यमूर्तिमत्वम् स्वीक्रियते । परमात्मनः सर्वशरीरतया सर्वत्र विद्यमानत्वात् सर्वंसाकारमिति साकारव्यापकता सूचिता । तथा च कार्यायनप्रकरणस्य चतुर्थे तरङ्गे

'तथाविधस्तु मूर्तेः स्यात्तत्त्वेऽसौ व्यापकः कथम् ।

इत्युक्तो हरिरूचे तं *मूर्तोऽपि व्यापको भवेत्* ॥ ( ९ )

तस्य परब्रह्मणः व्यापकत्वमपि साकारमिति सुदृढम् । तत्र श्रुतेः प्रमाणम्, 'अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणः स्थितः' तथा च 'रूपं रूपं प्रतिरूपो बभूव' अत्राऽपि साकारव्यापकता सूच्यते श्रुतिभिः । विशिष्टाद्वैतनये प्रत्यगात्मनः गुणभूतं धर्मभूतज्ञानमपि प्रसरणनिलयनस्वभावत्वात् द्रव्यमिति स्वीक्रियते सुधीभिः तर्हि धर्मिणः प्रत्यगात्मनः साकारत्वे न कोऽपि शङ्काऽवकाशः । आकृतिर्नाम अवयवसंयोगः, स च नास्ति, अनवयवत्वात् अणु परिमाणाऽत्मकेऽऽत्मन्येकोऽप्यवयवप्रदेशः नास्ति येन शाश्वताऽवयविता सिद्ध्येत्, तस्मात् निरवयवो साकारः नित्यचेतनः सुसूक्ष्माकारः आत्मा । करणोपकरणाऽभावात् भोगाऽसिद्धिः। तद्भोगार्थं कर्मानुरूपं मायिकशरीरं प्रापयति परमात्मा ।

श्रीहरिमूर्तेः तेजोऽपि साकारवत्कार्यकारित्वात् तत्तेजसि साकारगर्भः राजमानः श्रीहरिः, तस्मात् सर्वं साकारम् साकारनिभं वा सर्वसत्साकारवादत्वं भजते । बहुषु सुधासिन्धुतरङ्गेषु स्वयं परमात्मा स्वमुखेन साकारत्वं प्रतिपादितवानस्ति ।

'सदासर्वदासाकारविग्रहवान् परमात्मे'ति दृढनिष्ठावन्तं प्रति परमात्मनः निःसीमाहैतुकी प्रसन्नता जायते । सुधासिन्धौ साकारनिष्ठवतामाश्रितानां महिमानमतिगीतं स्वमुखेन परमात्मना । उक्तं च 'साकारनिष्ठावतां पदरेणुमहं स्वशिरषि धारयामि तेषां दर्शने सदा ममोत्कण्ठा विवर्धते '।

''तत्पादरजोऽस्माभिरपि मूर्धाऽत्र धार्यते ।

सदा दर्शनं तस्य कांक्ष्यते च सहाऽमरैः ॥ ( प्र.३७-२४ )

जयतु जयतु सदा सर्वसत्साकारवादः । इति शम् ।

## सदासवर्दैकत्र ( स्वाऽक्षरधाम्नि ) संस्थितिः परब्रह्मणः । सदासर्वदा स्वधामस्थः सन्नवतरणत्वमिति विचारः ।

अप्राकृतदेशविशेषे चिदाकाशाऽऽख्ये दिव्ये ब्रह्मपुरेऽक्षरधाम्नि सदा सर्वदा विराजमानः परमात्मैकदेशस्थः सनेव सर्वत्र नैकब्रह्माण्डराशिषु स्वाऽलौकिकयोगशक्त्या भासते, नृलोकादिषु व्यूहविभवादिरूपेणाऽपरिमितजीवोद्धारणायाऽवतरतीति सुधासिन्धोः निर्देशः । परमात्माऽक्षराऽऽख्यं स्वाऽतिप्रियं धाम कदाऽपि न जहाति तद् ज्ञापयन्ति सुधासिन्धोः तरङ्गाः । दुर्गपुरप्रथमप्रकरणस्य त्रिषष्टितमे तरङ्गे ।

तस्मिन् हि परमे *धाम्नि सदा कृष्णो* विराजते ।
स्वसधर्मैं रसंख्यातैर्महामुक्तै रुपासितः ॥५०॥

तथा च लोहप्रकरणस्य चतुर्थे तरङ्गे,

*एकत्रस्थस्य कृष्णस्य* यत् ब्रह्माण्डेषु वर्तनम् ।
तत्तु तस्य महैश्वर्यमिति ज्ञेयं कृपानिधेः ॥ १८॥

एवं च वृत्तपुरप्रकरणस्य त्रयोदशतरङ्गे उक्तं भगवता,

ब्रह्म तत्कृष्ण एवोक्त *एकदेशगतोऽपि सः* ।
सर्वत्र व्यापकोऽस्त्येव स्वशक्त्या तेजसाऽर्कवत् ॥ १८॥

तथा दुर्गपुरमध्यप्रकरणस्य द्विचत्वारिंशत्तमे तरङ्गे,

अतितेजोमये स्वीये *धाम्नि ब्रह्मणि सर्वदा* ।
कृष्णोऽक्षरात्मभिर्मुक्तैरास्ते सेवितपङ्कजः ॥
*तत्रस्थ एव कृष्णस्तु* प्रतिब्रह्माण्डमात्मनः ।
योगेश्वर्येण रूपैः स्वैरास्ते कार्यस्य सिद्धये ॥ १४-१५॥

तथा च दुर्गपुराऽन्त्यप्रकरणस्य सप्तत्रिशंत्तमे तरङ्गे,

तेजः पुञ्जेऽक्षरे धाम्नि *नित्यं कृष्णो विराजते ।*

तद्भक्ताश्च तदाकाराः सेवन्ते स्वामिनं हितम् ॥ १२॥

***स्वधामस्थस्त्वयं कृष्णः*** स्थितो ब्रह्माण्डकोटिषु ।

अन्तर्यामिस्वरूपेण जीवेश्वरव्रजेष्वपि ॥ १७॥

निजधामस्थ एवाऽसौ सर्वत्र व्यापकोऽस्ति च । ( ग.प्र-६६ )

अनेन परमात्मानः सदा सर्वदैकत्र संस्थितः, सर्वकालं स्वीये धाम्नि निवासः विज्ञायते । एतदौद्धवीये सम्प्रदाये वैशिष्ट्यम् तद्रहः प्रभावितेन महामुनिनाऽत्र भाष्यरत्ने विशेषरूपेण समाविष्टम् । तदास्वाद्यताम् रहः बोधनाय ।

प्रथमाध्यायस्य प्रथमे पादे पञ्चमसूत्रे,

"दिव्यविग्रहेण ब्रह्मपुरे सदावर्तमानस्य नामरूपविभागाऽनर्ह सूक्ष्मचिदचिद्वस्तुषु...."

तथा च

"सदा दिव्य पुरुषाकारेण स्वस्थानस्थो हरिः सततं चिदचिद्वस्तुव्याप्तां...." प्रथमाध्याये द्वितीयपादे 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् '॥११॥ इति व्याख्यानप्रसंगे

"तत्र परमात्मा दिव्यमूर्त्या स्वधामस्थः सन् हृदयगुहां प्रविष्टे जीवे विकसितान्तर्यामिशक्त्या प्रविष्टः सन्नियमयति; स्वयं तु ब्रह्माण्डगुहायां स्वभक्तसुखार्थे रामकृष्णादिरूपैरपि विचरति;, प्रलये तु तयोर्मध्ये एकः स्वभक्तैः सह ब्रह्मपुररूपां गुहां प्रविष्टः सन् महामायोदररूपां गुहां इतरस्मिन् संकुचितान्तर्यामिशक्त्या प्रतीयते, इति तात्पर्यार्थेन तौ गुहां प्रविष्टौ; "।

तथा च सप्त विंशतितमे सूत्रे

"पुरुषस्तु अनादिसिद्धाऽप्राकृतदिव्यपुरुषाकारो ब्रह्मपुरस्थो नारायणः" ।

प्रथमाध्यायस्य तृतीये पादे द्वाविशंतितमे सूत्रे

"दहराकाशशब्दाभिहितं ब्रह्मपुरान्तर्वर्तिमन्दिरस्थं स्वाभाविकापहतपाप्मत्वादिगुणविशिष्टं स्वसाधर्म्यमुपगतैर्मुक्तगणैर्निषेव्यमाणं जनकल्याणायेहाविर्भूतं नारायणस्वरूपं मुमुक्षुजनोपासनीयमिति सिद्धम् "।

तृतीयस्य तृतीयेपादे एकोनचत्वारिंशत्तमे सूत्रे,

"अत एवानादिसिद्धदिव्यावयविदिव्याप्राकृतगुणगणविशिष्टमसंख्यकोटिसूर्याचन्द्रमस-संनिभे ब्रह्मपुरे सदा वर्तमानं सपार्षदं परमात्मस्वरूपं निरन्तरालुप्तमुच्यते"।

## अन्तर्यामिस्वरूपविचारः

सकलैश्वर्यसम्पन्नस्य सर्वशक्तिमतः नैकगुणगणराशेरच्युतत्त्वस्याखण्डाक्षरस्वरूपस्य परमात्मनः अन्तर्यामित्वं किं रूपं ? मूर्तरूपममूर्तरूपं वा ? सद्वारकमद्वारकं वा ? अंशरूपमंशी रूपं ? प्रकाशद्वारकं साक्षाद्रूपं वेति प्रश्ने सञ्जाते सति तन्निवारणार्थं श्रीहरिवाक्यसुधासिन्धुराद्धान्तप्रभावितमिदं ब्रह्मसूत्रभाष्यरत्नं स्मर्तव्यम्। अत्र काश्चन श्रुतयोऽनुसन्धातव्याः, 'तत्सृष्ट्वा तदेवानुप्राविशदिति' 'तद् एवे'ति एवकारः प्रयुक्तः। 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति', 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'। 'ईशावास्यमिदं सर्वम्', 'तस्य भासा सर्वमिदं विभाति।' अत्र परमात्मनः अनुप्रवेशः अन्तर्यामित्वं वा किं साक्षात्स्वरूपं वा शक्तिस्वरूपम् ? शक्तिश्च किंरूपा ? तेजःस्वरूपाऽरूपा वा ? अरूपे सामर्थ्यं भवति न वा ? इति बहुशङ्काशङ्कितत्वे श्रुत्यनुकूलं भाष्यरत्नं समाधत्ते।

प्रथमाध्यायस्य प्रथमपादे पञ्चमसूत्रव्याख्याने,

'एवं नारायणस्यैकत्वे आत्माधारत्वे च सत्यप्यखिलाश्रयत्वोक्त्या बह्वात्मनामात्मत्वोक्त्या सः स्थूलसूक्ष्मभावस्थचिदचित्प्रपञ्चरूपे वस्तुनि प्रकाशरूपान्तर्यामिशक्त्या विशिष्ट एव कार्ये कारणरूपः सत्यपदविषय इति निर्णयः। अन्तर्यामिशक्तिविवेचनमाह-सदा दिव्यपुरुषाकारेण स्वस्थानस्थो हरिः सततं चिदचिद्वस्तुव्याप्तां स्वान्तर्यामिशक्तिं यदा स्वेच्छया संकोचयति तदा प्रलयः, यदा च तां बहु स्यामिति श्रुत्यभिहितप्रकारेण विकासयति तदा उत्पत्तिस्थितिकालौ स्त इति।'

श्रीभाष्यादौ यत् धर्मभूतज्ञानपदेन व्यवहृतं तदेवात्र भाष्यरत्ने 'चित् तेजः', 'मूर्तेः तेजः', 'चैतन्यतेजः', 'प्रकाशरूपाऽन्तर्यामिशक्त्येत्यादि पदप्रयोगाः समायोजिताः। उभयोर्तत्त्वेनार्थेन च साम्यम्।

तथा च द्वितीये सूत्रे निगदितं महामुनिना यत्,

'अत्र सूत्रे दिव्यविग्रहं ब्रह्मपुरे निमित्तकारणतया सदा वर्तमानं सत् स्वेच्छया प्रलये ***स्वप्रकाशरूपया*** संकुचितोन्तर्यामिशक्त्या सूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्म उपादानकारणं

सृष्टिस्थित्यवस्थयोः *स्वप्रकाशरूपया* विकसितान्तर्यामिशक्त्या स्थूलचिदचिद्वस्तुविशिष्टं तत् कार्यं भवति। अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तोऽस्ति।'

अस्मिन्नेव सूत्रे

'अक्षरात् परतः पर इत्यक्षरशब्दवाच्याद् ब्रह्मणोऽन्यत् परब्रह्मशब्दवाच्यं ब्रह्म श्रूयते। दिव्याप्राकृतविग्रहेण स्वब्रह्मपुरस्थानस्थं सत् परब्रह्म विश्वोत्पत्तिस्थित्यवस्थयोर्विकसितां-तर्यामिशक्त्या विश्वप्रवेशनशीलत्वाद्विभक्तनामरूपतत्परिरक्षितस्थूलचेतनाचेतन-वस्तुशरीरकमुपादानकारणं सर्वस्त्रष्टृविष्णुशब्दवाच्यं भवति। तथाहि श्रूयते। 'स इमाँल्लोकानसृजदिति, तत्सृष्ट्वा तदनुप्राविशदिति, बहु स्यामिति, स्वधामस्थं यत्तत् हरिशब्देन हृञ् हरणे इति धात्वर्थवशात्प्रलयावस्थायां संकुचितान्तर्यामिशक्त्या चेतनाचेतनस्थूलनामरूपविभागसंहरणशीलत्वात्सूक्ष्मतां प्रापितनामरूपविभागानह-'चेतनवस्तुशरीरकं सकलसंहर्तृ ब्रह्म प्रतिपाद्यते। अपरं च 'तथाहि श्रूयते 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इति, स वेत्ति वैद्यमित्यादिवचनैः सर्ववस्थावस्थितसकलचेतनाचेतनवस्तुषु संकुचितविकसितान्तर्यामिशक्त्या व्यापकत्वात् तेषां यथार्हकर्मफलप्रदाने परब्रह्मणः सदादृष्टिप्रसारवत्वमस्ति; अतोऽनेन नित्यालुप्तदृष्टित्वं सिद्धम्'।

प्रथमाध्यायस्य द्वितीयेपादे 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि'ति सूत्रव्याख्यानावसरे

''तत्र परमात्मा दिव्यमूर्त्या स्वधामस्थः सन् हृदयगुहां प्रविष्टे जीवे विकसितान्तर्यामिशक्त्या प्रविष्टः सन्नियमयति; स्वयं तु ब्रह्माण्डगुहायां स्वभक्तसुखार्थे रामकृष्णादिरूपैरपि विचरति;, प्रलये तु तयोर्मध्ये एकः स्वभक्तैः सह ब्रह्मपुररूपां गुहां प्रविष्टः सन् महामायोदररूपां गुहां इतरस्मिन् संकुचितान्तर्यामिशक्त्या प्रतीयते, इति तात्पर्यार्थेन तौ गुहां प्रविष्टौ; तद्दर्शात्-तयोः ऋतं पिबन्तौ सुकृतस्येति तं दुर्दर्शं गूढमनुप्रविष्टमित्यादिषु गुहाप्रवेशदर्शनादिति।''

तथा च प्रथमस्य तृतीयपादे एकोनत्रिंशत्तमे सूत्रे,

''तथाहि स सर्वज्ञो भगवान् कमनीयावयवपुरुषोत्तमशब्दाभिधेयो नारायणः प्रकृतिपुरुषाधिप आदिकर्ताऽक्षरपुरुषप्रविष्टः सन् पूर्वरचनाविशिष्टं जगत् स्मृत्वा 'बहु स्यामि'ति संकल्प्य भोग्यभोक्तृवर्गविशिष्टं संकुचितस्वान्तर्यामिशक्तियुतं प्रलीनत्वादविभक्तनामरूपं यदसंख्यकोटिब्रह्माण्डवृन्दमस्ति तत् महाप्रलयान्ते विकसितस्वान्तर्यामिशक्तिविशिष्टतया यथानामरूपविभागं सृजति''।

अत्राऽन्तर्यामित्वशक्तेः (मूर्तेः तेजसः) सङ्कोचविकासद्वारा सर्वकार्यकारित्वमन्तर्यामित्वं प्रद्योतितं महामुनिना स्वग्रन्थे। प्रत्यणु सूक्ष्मस्वरूपः तेजस्विमूर्तिः श्रीहरिः स्वयं विराजते। स एव साक्षी। तद्ज्ञापितं भगवता श्रीस्वामिनारायणमहाप्रभुणा दुर्गपुरप्रथमप्रकरणस्य पञ्चचत्वारिंशत्तमे तरङ्गे,

सच्चिदानन्दरूपं यत् पूर्णं ब्रह्माऽस्ति सर्वतः।

तेजस्तस्यैव तज्ज्ञेयं निःप्रतीकमनावृतम्॥(४५-७)

प्रकाशिनः परब्रह्मणः प्रकाशः "तस्यैव तज्ज्ञेयमि"ति सुस्पष्टम्। तत्तेजः सच्चिदानन्दरूपं सर्वतः परिपूर्णं ब्रह्मसंज्ञमस्ति। अक्षरब्रह्मपदवाच्यं परब्रह्मणः तेज उक्तम्। स्वतेजो द्वारा नियन्तृत्वम् कर्मफलप्रदातृत्वं सर्वकार्यकारित्वमुक्तं सुधासिन्धौ। तद्यथा,

सर्वान्वयेन सर्वेषां नियन्तृत्वान्महोऽपि तत्।

मूर्तवत्कार्यकारित्वादमूर्तमपि मूर्तवत्॥(४५-१८)

अत्र परमात्मनः तेजोरूपं यद् ब्रह्म महःस्वरूपं सत् सर्वेषां नियन्तृत्वात्(कर्मफलप्रदातृत्वात्) अमूर्तमपि तन्मूर्तवत् साकारं ज्ञेयम्। तेजःशक्तेः कार्यकरणसमर्थत्वात् मूर्तस्साकारः। शक्तिशक्तिमतोरभेदत्वात्। तथा च

निराधारं यतस्तेजो नैव कुत्राऽपि दृश्यते।

अतस्तदङ्गाधारं तत्तेजो ब्रह्मेति कथ्यते॥(६६-१४)

तथा च दुर्गपुरप्रथमप्रकरणस्य षट्षष्टितमे तरङ्गे उक्तं भगवता,

मूर्तः सूर्यः स्वतेजोभिर्जगद्व्याप्याऽस्ति तत्पृथक्।

यथा तथा सोऽपि मूर्तः कान्त्या व्याप्याऽस्ति तत्पृथक्॥(११)

अत्र परमात्मा स्वकान्त्या तेजोद्वारा सचराचरेषु चिदचित्सु व्याप्यःसन् विराजते। तत्पृथक् व्यतिरेकेण स्वरूपेण च विद्यते। उक्तं च दुर्गपुरप्रथमस्य त्रिषष्टितमे तरङ्गे,

तदा वर्णियतुं शक्यं केन कृष्णाङ्गजं महः।

स कृष्णो महसा स्वेनाऽन्वितोस्ति पुरुषादिषु॥(५२)

'कृष्णाऽङ्गजं महः' 'तेजस्तस्यैव तज्ज्ञेय' मित्यादिना निर्दिष्टं यत् पुरुषोत्तमभगवतः किरणरूपं - तेजोरूपमक्षरं ब्रह्म तत् सर्वत्राऽन्तर्यामितया सृष्टिव्यापकं

वर्तते । तत्र श्रुतिः प्रमाणयति, 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्', 'अस्मिँल्लोकाः निहिता लोकिनश्च तदेतदक्षरं ब्रह्म', 'लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः', 'तथाऽक्षरात्सम्भवतीह विश्वम्', 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिभिः श्रुतिभिः परमात्मनः तेजोरूपस्याऽक्षरब्रह्मणः सृष्ट्युत्पत्तिकारणम्, प्रशासनत्वम्, 'सर्वं खल्विदं ब्रह्मे' त्यनेन च सर्वव्यापकत्वं परममहत्परिणामवत्वात् परमात्मनः तेजोरूपं ब्रह्म सर्वान्तर्यामितया सर्वकार्यकारि वर्तते ।

'तेनेदं पूर्णं पुरूषेण सर्वमि'ति श्रुत्या परब्रह्मणः सर्वाऽन्तर्यामित्वसर्व व्यापकत्वसर्वनियामकतत्वसर्वकार्यकारित्वसर्वसाक्षित्वसर्वकर्मफलप्रदातृत्वादिकाः नैके परमैश्वर्यगुणाः स्वस्वरूपस्य तेजोद्वारा विद्यन्ते । तेजःकिरणानां सकारणप्रसारात् सर्वत्र प्रकाशी परमात्मा स्वाऽलौकिकयोगशक्त्या मूर्तिमान् राजते । तदुक्तं लौहप्रकरणस्य पञ्चदशतरङ्गे, 'वर्ते त्वहं मूर्तिमानेवे'ति शम् ।

## उपासनयैव मोक्षादिसर्वसाधनसिद्धिः

मोक्षसाधनसिद्ध्यै भगवतः उपासनायाः प्रप्राथम्यं परमावश्यकत्वमिति सुधासिन्धोः हार्दाभिप्रायः । तद्विना साधनसिद्ध्यऽभावः निष्फलत्वञ्च ।

श्रीभाष्ये भगवत्पादश्रीमद्रामानुजार्यैः वाक्यकारस्य निर्देशमुद्धृत्योपासनविषये संज्ञापितं यत् ''वेदनमुपासना स्यात्, तद्विषये श्रवणात्' । इति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् । तथा च 'सिद्धं तूपासनशब्दात् ' इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् । उपासनं स्यात् धृवाऽनुस्मृतिः दर्शनान्निर्वचनाच्च । इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमूपवर्णितम् सेयं स्मृतिः दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापतिः'' ।

अत्र वेदनमुपासनेत्युक्तम् । सुधासिन्धौ ध्यानमुपासनेति विहितम् । श्रीभाष्ये च 'वाक्यार्थाज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं-वेदान्तवाक्यैर्विधित्सितम्' । तत्रैव प्रकरणे 'ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्' ।' सा च स्मृतिः दर्शनसमानाकारा'। वेदनमिति कथनेन ध्यानोपासनादिशब्दवाच्यं साक्षात्काररूपलक्ष्यार्थज्ञाने तात्पर्यं न तु वाच्यार्थज्ञाने । एतद्ज्ञानमेवाऽपवर्गाय । तदर्थं ज्ञापयति श्रुतिः 'तमेव विदित्वाऽतिमृत्यमेति'। 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' । वेदनं ध्यानं चोपासनेति तत्त्वेन साम्यम् । गीतायां चोक्तं भगवता ।

ये तु सर्वाणि कार्याणि मयि सन्यस्य मत्पराः ।

अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ( १२-६ )

ये जनाः मां ध्यायन्तः अनवरतं मयि चित्तलक्षं कुर्वन्त उपासत इति निरन्तरानुसन्धानं ध्यानमुपासना । ध्यानोपासना श्रेष्ठा । तदुक्तं द्वादशाध्याये 'श्रेयो हि ज्ञानमभ्यासात् ज्ञानात् ध्यानं विशिष्यते' ( गीता.१२-१२ )

सुधासिन्धौ परब्रह्मणः ध्यानोपासनमन्तरा साधनसिद्धिर्निषिद्धा । वर्षशतपर्यन्तं यदि जिह्वयाऽऽकाशं लिह्यते तथाऽपि रसानुभवाऽभावः स्यात् तथैव परमात्मनः ध्यानोपासनं विनाऽऽत्मज्ञानभक्तिवैराग्यादीनि साधनानि न मनागपि सिद्ध्येयुरिति सुधासिन्धोः स्पष्टमतम् । तद्ज्ञापितं सुधासिन्धोः षट्पञ्चाशत्तमे तरङ्गे

सच्छास्त्रश्रुतिमात्रेण सद्वाक्यश्रवणेन वा ।

न जायते सा तु सम्यक् किन्तूपासनया हरेः ॥ ( ५६-४१ )

ये ये सिद्धदशां प्राप्ताः सार्वज्ञ्यं वाऽपि देवताम् ।

ते ते सर्वेऽपीष्टदेवोपासनेनैव नान्यथा ॥ ( ५६-४२ )

यस्य यावत्युपासना तस्य तावती सिद्धिः । सिद्धदशां सार्वज्ञ्यमात्मदर्शनादिकमुपासनेनैव सिद्ध्येत् । अत्रैवकारोऽन्यव्यावर्तकः । तथा च 'नान्यथेति' पुनरुक्त्वोपसनाया अनिवार्यता विधापिता ।

यावद्यस्योपास्ति बलं तस्य स्यात्तावदेव हि ।

दुःखकार्श्यं चात्मसुखमल्पेऽल्पं भूरि भूरिणि ॥ ( ५६-४३ )

उपासनं च निरन्तरं ध्यानरूपं न तु वाणीविलासपरम् । कोऽर्थः ध्यानाऽनुसंधानं विना केवलया महत्या वार्तया ? शर्करा शर्करेति कथनेन न मधुररसास्वादोऽनुभूयते । जिह्वोपरि तत्स्थापने सति रस सुखानुभवः तथैव मूर्तेः महात्म्यवर्णनेन श्रवणेन नोपासना कथ्यते । सिद्धिरवाप्तये तु मूर्तेरविच्छिन्नधारारूपमनुसंधानं ध्यानं विधातव्यमेव । उक्तं च भगवता प्रथम प्रकरणस्यप्रथमे तरङ्गे,

अखण्डं भगवद्रूपे स्थापनं मनसः सदा ।

एतदेवाऽतिकठिनं सर्वसाधनतो मतम् ॥ १-५

येनैतत्साधितं तस्य त्वितोऽन्यत् किञ्चनाधिकम् ।

प्राप्यं नास्तीति शास्त्रेषु निश्चित्योक्तं महर्षिभिः ॥ ६

यद्यद्भक्तेप्सितं वस्तु तत्तत्पूरयति ध्रुवम् ।

चिन्तामणिरिव ध्याता मूर्तिः सा परमात्मनः ॥ -७

आत्मदर्शनादिकं दारुणदुःखनिवर्तकः सन् परं शान्तिकरं वर्तते तत्साधनान्यपि उपासनाबलेनैव सिद्ध्यन्ति । परमात्मनः ध्यानोपासनं विना कृतभूरिप्रयत्नेनाऽपि तन्न साधयेयुः। तदुक्तं भगवता दुर्गपुराऽन्त्यप्रकरणस्य षट्त्रिशंत्तमे तरङ्गे

आत्मनो ब्रह्मणश्चाऽपि साक्षाद् दर्शनमन्तरा ।

कस्याऽपि शान्तिर्नैव स्यान्मायिकैः सुखराशिभिः ।( ३६-१९ )

तत्तु साक्षाद्धरेरेव ध्यानोपासनमन्तरा ।

तपोव्रतादिभिर्नैव जायते साधनाऽन्तरै : ॥( ३६-२० )

तद्धित्वा ये यतन्तेऽत्र तत्प्राप्त्यै साधनाऽन्तरैः ।

श्रुतिरप्येतद् रहःगर्भं द्योतयति,

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे ॥( मुण्ड-३-२-९ )

परावरे परब्रह्मणि ध्यानोपासने दृष्टे सति सर्वकार्याणि सिद्ध्यन्ति । छान्दोग्ये,

स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।( ७-२६-२ )

कठिनतममात्मदर्शनमपि परमात्मनः ध्यानेनैव साध्यते मुमुक्षुभिः तद्विनोपायाऽभावः । तत् सूचितं दुर्गुपरमध्यप्रकरणस्य पञ्चत्रिंशत्तमे तरङ्गे,

साक्षाद्धरेस्तु ध्यानेन भक्तेनैवाप्यते हि तत् ।

न त्वन्यसाधनैः क्वाऽपि प्राप्यं यत्नवताऽपि वै ॥( ३५-९ )

तथा च कार्यायनप्रकरणे द्वादशतरङ्गे

यदा मुमुक्षुः सत्सङ्गं कृत्वा साक्षाद्धरिं हृदि ।

दृढं निश्चित्य रहसि प्रेम्णा ध्यायति निश्चलः ॥ ( १२-८ )

हृदि तस्य च वाक्यानि धत्ते तं चाऽनुवर्तते ।

तदा तु तत् प्रतापेन भवत्यात्मा ततः पृथक् ॥ ( १२-९ )

भगवतः मुखसरोजनिःसृतं सुधोपमं रहःपानप्रभावितेन महामुनिना ग्रन्थेऽस्मिन् भाष्यरत्ने आत्मदर्शनादिमोक्षसाधनसिद्धौ ध्यानोपासनायाः अनिवार्यता स्थले स्थले गुम्फिता । तद्यथा,

"मोक्षोपदेष्टुर्मुक्तजीवस्याऽपि नारायणोपासनेनैव मुक्तत्वप्राप्तेः । कृष्ण शब्दवाच्यनारायणध्यानेनैव तन्निष्ठस्य मोक्षोऽस्ति । तथा हि 'चिन्तयंश्चेतसा कृष्णं मुक्तोभवति संसृतेः' इति श्रवणात् " ( १-१-७ ),

"सत्साधनयुक्तपरमात्मोपासनेनाऽक्षरब्रह्म साधर्म्यं प्राप्ते शुद्धे जीवात्मनि विज्ञानस्याधिक्याद्धेतोः " ( १-१-१४ ),

"ततः परब्रह्मोपासनज्ञानाधिक्येन विगलितदेहाभिमानानामुपगताक्षरब्रह्मातिभावानां मुक्तात्मनां निरतिशयनित्यज्ञानसुखादिप्राप्त्या सांसारिकज्ञानसुखादिभ्यो व्यतिरेक इति सिद्धम् " ( २-३-४८ ),

"लोकवत्-यथा लोके राजाश्रितानां पुरुषाणामितरपुरुषसाधारणसर्वार्थसिद्धिर्नास्ति किन्त्वधिकैव तद्वत् । तथा सति परब्रह्मैकान्तिकभक्तानां देहवियोगकाले सकलकर्मक्षयेऽपि परब्रह्मोपासनबलादुपगतभागवतीतन्वा देवयानश्रुत्यभिहितमार्गगतिः" ( ३-३-३० ),

"अतःस्वाभाविकमेवाविद्यामुक्तस्य स्वरूपं परमात्मध्यानबलेन चिदानन्दघनं सर्वज्ञत्वादिगुणविशिष्टं भागवतीतनुसंज्ञमाविर्भवति, केवलात्मनिष्ठस्य त्वक्षरतेजसि निरवयवत्वेन लीनत्वमेव भवतीति परब्रह्मोपासनादक्षरब्रह्मोपासने कनीयस्त्वं श्रूयते स्मर्यते च 'ततो भूय इव ते तमो ये उ विद्यायां रता इति; अस्या अर्थः ततोऽन्यस्यां विद्यायां केवलाक्षरात्मोपासनायां ये रतास्ते भूयो बहुतरं तम इवाज्ञानसदृशं निरवयवं घनतेजोमयं ब्रह्म सुषुप्तिभूतमक्षरात्मस्वरूपं प्रविशन्तीति; 'कृष्णस्यानुग्रहो यस्मिन्स तेजसि तमीक्षते, केवलं तेज एवान्ये पश्यन्ति न तु तं मुने इति, 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनमि'ति । सूत्रार्थवर्णनम्; नारायणध्यानबलेन तं संपद्य स्वेन रुपेण शुद्धजीवात्ममय्या भागवतीतन्वा भक्तस्याविर्भावोऽगम्यते" ( ४-४-१ )

## जीवमुक्तात्मनोरपि ध्यानोपासना निषिद्धेति विचारः

व्यासवचनं च 'ध्येयो नारायणः सदा'। ध्याता ध्येयं ध्यात्वा तत्समानाकारं तत्साधर्म्यादिकं लभते। परमात्मा च सकलगुणगणराशिः। ध्याता परमात्मनः ध्यानद्वारा तत्साधर्म्यमापद्येत। परंब्रह्म ध्येयार्हं तदाश्रयभूताः ब्रह्मविदः ब्रह्मैक्यमापन्नाः मुक्ताः महामुक्ताः अनादिमुक्ताः सद्यःमनोऽभीप्सितकामनाप्रपूरका अपि परतत्त्वपारतन्त्र्यवशात् जीवकोट्यन्तर्गतत्वान्न ध्येयाः नोपास्याः। परमात्मव्यतिरिक्तचिदचित्स्मरणेन तेषु स्नेहो जायते, स्नेहाद् बन्धनम्। बद्धमुक्तजीवानां ध्यानेनोपासनाभङ्गः। उपासनाभङ्गेन परतत्त्वप्राप्त्यभावः तद्द्रोहश्च। द्रोहात् महत्यधोगतिः। शौनकश्चाह,

यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः।

अविद्यान्तर्गताः सर्वे ते हि संसारगोचरः॥

पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः।

नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः॥

एतद्दोषनिवारणाय दोषतः रक्षणाय च भगवता श्रीस्वामिनारायणमहाप्रभुणा सुधासिन्धौ मुक्तात्मनः ब्रह्मविदः भूर्यलौकिकैश्वर्यसम्पन्नस्य मुक्तजीवस्य ध्यानोपासना निषिद्धा। देवादिकानां तु का वार्ता ? सलीलसपार्षदध्यानेऽत्र न कोऽपि विरोधः, परब्रह्मणः विशेषणभूतत्वात् परब्रह्मणः अङ्गभूतत्वाच्च। उक्तं च लौहप्रकरणस्यैकादशतरङ्गे,

देवस्य वा ब्रह्मविदोऽप्यन्यस्य त्वाकृतिस्तु या।

सद्यः फलाऽपि सा नैव ध्यातव्या पारतन्त्र्यतः॥ (११-१३)

तथा च दुर्गपुरमध्यप्रकरणस्यैकोनविंशतितमे तरङ्गे,

कृष्णस्य वा तदर्चाया ध्यानं कार्यं च चेतसि।

न त्वन्यत्देवताया वा सिद्धमुक्तस्य कर्हिचित्॥ (१९-२५)

शिक्षापत्र्याञ्चादिष्टवान्निजाश्रितजनान् प्रति श्रीहरिः,

कृष्णस्तदवताराश्च ध्येयास्तत्प्रतिमाऽपि च।

न तु जीवा नृदेवाद्या भक्ता ब्रह्मविदोऽपि च॥ (११५)

परममहदेतद्रहः गुम्फितं महामुनिना भाष्यरत्ने तृतीयाध्यायस्य तृतीयपादे पञ्चदशसूत्रे,

"अतस्तस्य ध्येयत्वेनानुसन्धानमिति-चेत् ब्रह्मव्यतिरिक्तानां चेतनानां मुमुक्षुध्येयत्वनिषेधात् ध्यानकाले तेषां नानुसंधानम् ।......, स्मर्यते च-'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा' ॥ इत्यादौ नारायणस्यैव मुमुक्षुध्येयत्वमुक्तं नेतरेषाम् "

तथा च सप्तदशसूत्रे,

"अन्योऽन्तर आत्मानन्दमय इत्यानन्दमयस्य परमात्मनो नारायणस्यान्नमयादिभ्यो भिन्नत्वावगमात् 'चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेरि'ति 'ध्येयो नारायणः सदा' इत्यादिषु स्वधामस्थनारायणसेवारूपां मुक्तिं ध्यानेन प्रापयतः स्वस्यैकस्यैव ध्येयत्वेनावधारणान्निर्णयपूर्वं कथनाच्च *तदात्मत्वेन तेषामुपासनं विरुद्धमेव ॥* "

## मुक्तिप्रकारः

ब्रह्मभावाऽपन्नत्वेन सन्ननवरततया परब्रह्मनिषेवणमित्यवतारिपुरुषोत्तममते सर्वोत्कृष्टतमा मुक्तिः । बह्व्यः मुक्तयः परिगणिताः शास्त्रेषु विभिन्नेषु मतेषु च तेषु भगवदभीष्टेयं सेवारूपा मुक्तिः । सा मुक्तिस्तु रूढ्यर्थे 'सेवामुक्ति' रिति प्रयुज्यते । ब्रह्मरूपत्वेन परब्रह्मणः क्रियमाणा सेवाऽन्यतमा मुक्तिः । सा सेवैव मुक्तिः ।

विभिन्नैः मतवादिभिः दुःखनिवृत्त्यै विविधमुक्तयः समामानिताः तदर्थे प्रवृत्ताश्च । जैनानां कर्म विरतिर्मोक्षः, नैयायिकानां पाषाणकल्पिका मुक्तिः, निःशेषसर्वविशेषगुणोच्छेदे मोक्ष इति वैशेषिकाः । परावाक् ब्रह्मनादानुभवः वैयाकरणः । बौद्धेकैदेशिनां माध्यन्दिनानामात्मतत्त्वविपरिलोपात्मकं सर्वशून्यत्वं मोक्षः । अद्वैतिनामैक्यज्ञानम् । चार्वाकानां यावच्छरीरं तावद्बन्धः देहोच्छेदे मोक्षः, ब्रह्मवादिनां ब्रह्मसाक्षात्कारमात्रम्, निराकारमानिनां ब्रह्मतेजसि विलीनत्वम् न ततः बहिर्निसरणम् । उदासीनां निर्लेपत्वमुक्तिः । प्रकृतिवियुक्तः सन् पुरुषमात्राऽवस्थितिः सांख्यानाम् । धार्मिकानां सज्जनानाञ्च स्वर्गाऽवाप्तिः । केचन कारणशरीरनाशेन मुक्तिं मन्यमानाः, सकामवैष्णवानां परमात्मतः सालोक्यसार्ष्टिसामिप्यसारूप्यात्मकैश्वर्यप्रापिका मुक्तिः । विशिष्टाद्वैतिनां दिव्यविग्रहभगवन्निरतिशयसुखानुभवः भगवत्कैङ्कर्यमुक्तिश्च तदेवाऽत्र श्रीस्वामिनारायणमते 'तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम्' ( शिक्षापत्री. १२१ ) इति परमात्मनः सेवा मुक्तिः ।

भगवन्मूर्तौ स्नेहाऽऽधिक्यत्वाल्लीनत्वमित्येका मुक्तिः भगवता शिक्षापत्र्यां सन्दृष्टा सा तु सायुज्यान्तर्गता न पृथक् मुक्तिः ।

एते राधादयो भक्तास्तस्य स्युः पार्श्वतः क्वचित् ।

क्वचित्तदङ्गेऽतिस्नेहात् स तु ज्ञेयस्तदैकलः ॥ ( १११ )

तद् व्याख्यातं शतानन्दमुनिभिः,

"क्वचित् - समये, अति स्नेहात् गाढानुरागवशात्, तस्य-श्रीकृष्णस्य, अङ्ग-हृदयादि, तस्मिन्नेव सायुज्येन स्युः । सर्वजनाऽदृश्याः श्रीकृष्णमात्रद्रश्या भवन्तीत्यर्थः। तदा - एक्यावस्थानसमये तु। सः - श्रीकृष्णः। एकलः - एक एव सर्वैर्दृश्येत, न तु राधादयः । तदा तु केवलं श्रीकृष्णनामाऽस्तीति ज्ञेयम् । अतो यत्र मन्दिरे एकैव श्रीकृष्णमूर्तिः स्यात्तत्रापि राधादिसेवकमण्डलसहित एव श्रीकृष्णो भावनीय इत्याशयः"।

सायुज्यत्वं नाम साधर्म्यम् । अत्र लीनत्वं संश्लीष्टत्वम्, न तत्त्वेनैक्यम् । तथा चोक्तं सुधासिन्धौ दुर्गपुराऽन्त्यप्रकरणस्य त्रयस्त्रिंशत्तमे तरङ्गे,

एकान्तिकस्तु यो भक्तो वासुदेवे स निश्चितम् ।

प्रविश्याऽऽस्ते सेवते च लक्ष्मीवत्तं सदाऽऽदरात् ॥ ( ३३-१८ )

प्रवेशस्तु हरौ ज्ञेयः स्नेहाधिक्येन चेतसि ।

तस्याऽखण्डानुसंधानं न तु तस्मिन् स्वलीनता ॥ ( ३३-२० )

तासु सर्वास्वपि मुक्तिसु 'सेवामुक्तिः' सर्वोत्कृष्टतमा । तत्कथमिति चेत् भगवदभीष्टत्वात् । ' तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम्' ( शिक्षापत्री- १२१ ) तत्र गोलोकमध्येऽक्षरधामनि ब्रह्मभावापन्नेन परब्रह्मणः सेवा निरन्तरं विधातव्या । सा सेवाऽस्मदतितराऽभिष्टा, तां सेवां मुक्तिरिति जानीयात् । तथा चोक्तं प्रथमप्रकरणस्य त्रयस्चत्वारिंशत्तमे तरङ्गे,

एकत्वाख्या च या मुक्तिः शास्त्रे भवति पञ्चमी ।

सतां साप्यनुपादेया सेवाऽसिद्धेस्तदैक्यात् ॥ ( ४३-१३ )

अत्र स्नेहाधिक्यात् परमात्मविग्रहे लीनत्वमैक्यभावत्वं परमात्मनः सेवाविरहादैक्यमुक्तिरपि गौणी । सेवाविरहे परमात्मनः निःसीमनूतनप्रसन्नताप्राप्त्यभावः । भगवत् सेवया भगवत्प्रसन्नता । प्रीतः परमात्मा सर्वस्वं बलाद् प्रददाति ।

तदाह श्रीहरिः

अनिच्छद्भ्योऽपि तेभ्योऽसौ महैश्वर्यसुखानि च ।

दुर्लभानि सकामानां ददाति निजधामनि ॥ ( ४३-१५ )

सेवां विना चतुर्धामुक्तिमनिच्छद्भ्यः सकामभक्तैः प्राप्तुमशक्यानि दुर्लभानि महैश्वर्यसुखानि प्रीतः परमात्मा बलाद् प्रददाति इति तात्पर्यम् । सेवामुक्तेः महात्म्यमनुवर्णयता व्यासेनोक्तं भागवते,

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।

दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ ( ३-२९-१३ )

सुधासिन्धौ स्थले स्थले भगवता श्रीस्वामिनारायणेन बहुमानितेयं सेवा मुक्तिरत्र तस्याः आचमनमात्रं प्रस्तूयते ।

भक्ता एकान्तिका येऽत्र देहान्ते तेऽपि धाम तत् ।

प्राप्यक्षरसधर्माणः सेवन्ते कोटिशो हरिम् ॥ ( प्रथम- २१-२४ )

देहान्ते त्वस्य भगवत्साधर्म्याप्तिश्च जायते ।

ब्रह्मधाम्नि कृष्णस्य सेवा तेन च लभ्यते ॥ ( मध्य-६६-६१ )

अन्त्यप्रकरणे चतुर्विंशतितमे तरङ्गे,

मुक्तानन्दस्तमप्राक्षीन्नानाभक्तगणैर्वृतम् ।

भक्तास्त्वदीयास्त्वत्सेवां यान्ति धाम्न्यक्षरे तदा ॥ ( २४-३ )

इत्यतः प्रारभ्य,

इत्येतैः साधनैः साधो भक्ता एकान्तिका हरेः ।

सेवां सुदुर्लभां सम्यक् प्राप्नुवन्त्यक्षरे पदे ॥ ( २४-८ )

सुधासिन्धुरहस्यामृतमवतारितं महामुनिभिः स्वग्रन्थे तद् विहङ्गवदवलोक्यताम् ।

"सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुमिति, कृष्णं च तत्र च्छन्दोभिः स्तूयमानमित्यादिश्रुतिस्मृत्युक्ते ब्रह्मपुरे स्थितस्यानन्तकोटिमुक्तसेवितचरणकमलस्य परब्रह्मणः सेवारूपा मुक्तिः प्रयोजनं च भवतीत्यस्मिन्नाद्याधिकरणे निरूपितम् "। ( १-१-१ )

एवं च

"हरिनिवासभूते ब्रह्मपुरेऽक्षरात्मभावं प्राप्तेन तदुपासकवृन्देन प्राप्ता तत्सेवारूपा मुक्तिः प्रयोजनं चास्ति" ।( १-१-१ ),

''ध्येयो नारायणः सदा' इत्यादिषु स्वधामस्थनारायणसेवारूपां मुक्तिं ध्यानेन प्रापयतः स्वस्यैकस्यैव ध्येयत्वेनावधारणान्निर्णयपूर्वं कथनाच्च तदात्मत्वेन तेषामुपासनं विरुद्धमेव'' ॥ ( ३-३-१७ ),

''प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमिति पार्षदत्वरूपया भागवतीतन्वा भगवत्परिचर्यारूपा मुक्तरिति सर्वश्रुतिस्मृतितात्पर्यादक्षरात्मभावेन परब्रह्मोपासनमुपासितुर्मुक्तिकरम्, अन्यथा संसारानिवृत्तिरिति निर्णयः'' ( ४-१-३ ),

''तत्समानगुणरूपो मुक्त आत्मा पार्षदतया निरतिशयानन्दं परब्रह्मस्वरुपं सेवमानस्तत्सुखमनुभवति क्वचिदतिप्रेम्णा तस्मिन् विलीयते चेत्तर्हि तु परब्रह्मस्वरूपमविभागेनानुभवतीति निर्णयः'' । ( ४-४-४ )

सज्जनकृपाकांक्षी
सा. पूर्णवल्लभदासः
श्रीस्वामिनारायण-गुरुकुलम्
कण्डारी, वटपत्तनम् ( गुजरात )

॥ श्रीहरिः ॥

## "प्रकटपूर्णपुरुषोत्तमस्य भगवतः श्रीस्वामिनारायणस्य संक्षिप्तचरितवृत्तम्"

लीलालावण्यधर्तारम्, लसल्लोलविलोचनम् ।
ललितकलितं कायम्, लेभे सुदुर्लभं प्रभुम् ॥१॥

सहजानन्दमहानन्दम्, भक्तानन्दप्रदायकम् ।
स्वरूपानन्ददं नित्यम्, भूयो भूयः नमाम्यहम् ॥२॥
चरितं श्रीहरेः पूतं, तस्य सागरसन्निभम् ।
लिख्यते सादरं प्रीत्या, यथाशक्ति यथामति ॥३॥

अथ कलिकालकरालकलुषे प्रवृद्धप्रकृषे चाधर्मे सततसुरासुन्दरिसंषेवमाणानां संजातनिरङ्कुशाणां नृपाणां प्रवृत्तप्रचुरविषयविलासनिमग्नानां भूभारभूतानां छद्मवेषधारिणां साधूनां यत्र तत्र सर्वत्र विकरालताण्डवोऽभूत्, एवञ्च सर्वतस्सर्वजनाः परितः पीडामन्वभवन्।

सद्धर्मानुसेवनशैथिल्यां समप्राप्तैतादृश्यां स्थित्यां तिरोहितभागवतधर्मञ्चावेक्ष्य जगदुदयविलयादिहेतुः, सेतुश्च धर्माध्वनो व्यचिन्तयदवतरणाय । प्रतिज्ञाप्रतिबद्धस्य प्रभोरियं प्रतिज्ञा प्रथिता ।

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

(गीता - अ.४ -७/८)

जब जब होइ धरमकी हानि, बाढहि असुर अधम अभिमानी ।
तब तब धरि प्रभु विविध शरीरा, हरहि कृपानिधि सज्जनपीरा ॥

( - रामचरित मानस )

समप्राप्तत्वरिततीव्ररोषख्यातस्य दुर्वासमुनेश्शापं चाङ्गीकृत्य धर्मपालनाद् धर्मदेव इति भगवत्यतिशयप्रेमप्रार्ख्ययात् भक्तिरिति समवाप्तविशुद्धसत्कित्यौः दम्पत्योरङ्के वैक्रमाब्दाष्टादशशताधिकत्रिशंत्तमे (१८३७)) चैत्रशुक्लनवम्यां पावन्यां सकलग्रहनक्षत्रराशिशुभानुकूल्यां उत्तरप्रदेशीयगौडाजनपदान्तर्गतछुप्पयाख्यगाम्रे दशघटिकोल्लङ्घितायां निशायां श्रीस्वामिनारायणभगवान् पृथिव्यां प्रादुरासीत् ॥

सौन्दर्यमाधुर्यलावण्यादिभिस्संतोषयामास मातृपितृनृजनान्निखिलान् नारिणश्च ववर्धेऽनुदिनं शिशुचन्द्रवत् । मार्कण्डेयमहर्षिणा विहितनामकरणसंस्कारो घनश्यामप्रभुः मनुजसहजकमनीयकेलिभिरानन्दयन् कतिपयदिनानयापयत् । कोटराकालिदत्तप्रभृतिदुष्टदलान् विदार्य कलिमलमपससार ।

अकारणासुरोपद्रवमाकल्य छुप्पयग्रामं त्यक्त्वा अयोध्यामवाप धर्मदेवः सकुटुम्बको न्यवसत् तत्र सोल्लासः सानन्दश्च । प्राप्ताष्टमे वर्षे विहितोपनयनः श्रीहरिः निजजनकादधिजगाम वेदवेदाङ्गेतिहासपुराणादिषु प्रागल्भ्यम् । स्वल्पवयस्यैवैकदा ज्ञानवाप्यां वाराणस्यां शास्त्रवादप्रतिवादे पराजित्य पण्डितपरिषद् विस्मापयन्निखिलान् "यः सर्वज्ञः सर्वविदिति" श्रुतिवाक्यं साक्षादकरोत् । पित्रोः सादरं सपर्यां विदधता प्रभुणा मातुः भक्तिदेव्यास्सन्निकटावसानसमयमालक्ष्य धर्म-ज्ञान-भक्ति-विरागाणां मुक्तिपरमोपकारिणां तस्यै सदुपदेशो प्रादात् । "अयं मम पुत्रः" साक्षात् परंब्रह्म इति मत्वा ज्ञात्वा स्वाक्षरधाम प्राप सा । धर्मदेवोऽपि तदनन्तरमल्पकालैनैव प्रापयामास स्वधाम । ( यद् गत्वा न निवर्तन्ते तद्धाम परमं मम । गीता-१५/१६ )

पित्रोरन्त्येष्टिकर्मादिकं सुसम्पाद्य स्वावतरणप्रयोजनमनुचिन्त्य बन्धुबान्धवाननाज्ञाप्य गृहान्निर्गत्य प्रचण्डतोयपरिपूरितसरयूसरितां समुत्तीर्य निर्जनवनं प्रतस्थे ।

विक्रमवर्षाष्टादशशताधिकोनपञ्चाशत्तमे ( १८४९ ) अषाढशुक्लदशमीतिथौ गृहं श्रीहरिणा परित्यक्तम् ।

एकादशवर्षाधिकमासत्रयेकाहः यावत् स्वपित्रोस्समीपमवसत् ।

तापसवेषमवधार्य दधत्चैककौपीनपरिधानमात्रं, वस्तून्येतानि परिमितानि तद्यथा-दण्डं, कमण्डलुं, भिक्षापात्रं, पयःप्रक्षालनवस्त्रखण्डं, यज्ञोपवीतं, कण्ठे तुलसीमालां, जपमालिकां, शालग्रामं, शास्त्रसारभूतपुस्तकम् नीलकण्ठः प्राधार्यत । कण्टककर्कशपाषाणपथि सिंहशार्दुलवराहवारणसर्पादिसंयुते वृक्षवेलीभूयिष्ठे प्रगाढनिबिडातिदारुणवने मार्तण्डमयूखनिवेशाक्षमेऽपि प्रचलतो वनाद् वनं नाबिभ्यत् ।

कतिपयैः दिनैस्संप्राप मुक्तिनाथं हिमालयोपत्यकायाम् रमणीयायाम् । प्रत्यहः तत्रैव विद्यमानायां गण्डक्यां स्नात्वा मुक्तिनाथं प्रभुः प्रेम्णाऽप्रणीयत् । चार्तुमासपर्यन्तं तत्र निवसता नीलकण्ठेनाभ्यर्थितम् गायत्रीमन्त्रमनुसृत्य भगवन्तं भुवनभास्करमादित्यं तीव्रतपसा उद्बाहुः चैकैन पादेन ।प्रस्थितः ततः योगपारङ्गतं गोपालसंज्ञकयोगिनमवाप्याष्टांगयोगाभ्यासं चकार तेन सहैकवर्षं र्निगम्य तस्मै दिव्यगतिं ददौ । सिद्धपुरवास्तव्येन साधुवल्लभेन सिद्धवल्लभेनातिमानितस्सन्

कामाख्यसमीपग्रामं संप्राप्य पिबेकाख्यं कौलाख्यागमज्ञं तान्त्रिकं विजित्य नीलकण्ठः नवलक्षनामकं पर्वतमधिरूह्य तत्रत्यान् नवलक्षपरिमितसंख्यकान् सिद्धान् क्षराक्षरातीतमक्षरधाम प्रापयित्वा गङ्गासागरतटवर्तिनं कपिलाश्रममेकमासमुषित्वा जगन्नाथपुरीं प्राप्तः। सद्धर्मसंस्थापनं मूलतोऽधर्मोन्मूलनं स्वस्मिनासक्तानां भक्तिमतां भक्तानां योगक्षेमार्थं सुखार्थञ्च संचिन्त्य स्वावतरण प्रयोजनं दशसहस्त्रासुरसङ्घे कलहं विधाप्य मिथः शस्त्रसंपातैरयापयत् यमालयम् तानसुरान्। तत्र स्थितेन्द्रद्युम्नसरःकृतस्नपणो दशमासं स्थित्वा दक्षिणदिग् प्रायात्। आदिकुर्मवैकटाद्रिकाञ्चीश्रीरङ्गक्षेत्ररामेश्वरादिषु दिव्यक्षेत्रेषु दर्शनस्नानादिकं सन्निधाय महारण्यं प्राप।

पञ्चमेऽहनि कूपमेकमपश्यत् शालग्रामं स्नपनाय प्रवृत्तो वर्णीन्द्रः साश्चर्योऽपश्यत् स्नानार्थं यज्जलं विहितं तत्सर्वं शालग्रामोऽचुष्यत्। तृषितं क्षुधितं शालग्रामं द्रष्ट्वाऽति व्यथितः तस्मिनेव क्षणे तापडीवेषधारिणौ पार्वतीपरमेश्वरौ सक्तुमादाय नीलकण्ठमर्पयामासुः। शालग्रामं निवेद्य प्रसादबुद्ध्या स्वयमपि चखाद। ततश्च भूतपुरीक्षेत्रे रामानुजप्रतिमायाः दर्शनार्चने कृत्वा कन्याकुमारिकापद्मनाभमाययौ। ततोऽऽदिकेशवं साक्षिगोपालमुपगम्य पुण्डलीकाख्यं प्राप्य मासद्वयं स्थित्वा गुर्जरगौरवरुपां जनजीवनसन्निभां तापीमुत्तीर्य शर्मदां नर्मदामुल्लङ्घ्य महीं, साभ्रमतीं तीर्थीकुर्वाणो तीव्रतपकृशतनुः नीलकण्ठः सोरठप्रदेशान्तर्गतलोजपुराभिधं ग्राममाजगाम्। सप्तवर्षाधिकैकमासेन सहैकादशदिनानि यावत् वनाटनं कृतं श्रीहरिणा। भगवद्ध्याननिमग्नं पद्मासनस्थं निरुद्धचित्तवृत्तिकं तापसवेषमनोहरं वर्णीन्द्रमवलोक्य रामान्दस्वामिनोऽन्तेवासि सुखानन्दो प्रातः समये स्नानार्थं तत्रागतो प्रहृष्टमनो बभूव।

"कोऽप्ययमसाधारणपुरुष" इति मन्यमानः वर्णीन्द्रात् सकलस्वीयवृत्तान्तं विज्ञाय लोजपुरस्थितं रामानन्दस्वामिप्रतिष्ठितमाश्रममानयत्। तत्र मुक्तानन्दस्वामिप्रमुखानां साधूनां विशुद्धजीवनं, सद्ज्ञानं, परस्परात्मीयतां विलोक्यातिष्ठत्। जीवेश्वरमायाब्रह्मपरब्रह्मविषयकभेदः संपृष्टः मुक्तमुनिं संतुष्टः नीलकण्ठः सम्यगुत्तरदानेन। अष्टाङ्गयोगाभ्यासमकारयत् साधुजनान्, आश्रमसेवादिभिः सर्वान् प्रहर्षयन् मुमुक्षुणां सेवादर्शो प्रादर्शयत्। गुरुदर्शनसमुत्सुको वर्णीन्द्रः नवमासानन्तरं पीप्पलाख्यग्रामं प्राप सद्गुरुरामानन्दस्वामिनम्।

सेवया संप्रीतस्वामिना दिक्षित एषः 'सहजानन्दनारायणमुनि' रित्यभिधाभ्यां भूषितः। कतिपयदिनानि श्रीहरिः स्वामिना सह ग्रामान्तरं परिभ्रमन् सतां भक्तानाञ्च हृदयानि विजहार। सर्वसद्गुणपरिपूर्णं परब्रह्म परमात्मानं सहजानन्दस्वामिनं सर्वश्रेष्ठं ज्ञात्वा तस्मै धर्मधूरां प्रददौ स्वामी। कालेनाल्पेन फणिग्रामे विक्रमाब्दाष्टादशशताधिकाष्टपञ्चाशत्तमे वर्षे (१८५८) मार्गशुक्लत्रयोदश्यां स्वामिना सुखेन पाञ्चभौतिकं तनुं त्यक्त्वा ब्रह्मपुराख्यं अक्षरधाम प्राप्तम्।

रामानन्दस्वामिन्युपगते शोकसंविग्नमानान् किंकर्तव्यविमूढान् स्वस्वधर्मोपदेशव्याजेन संतोषमजनयत् तथा च तस्यामेव सभायां "श्रीस्वामिनारायण" महामन्त्रराजस्योद्घोषः कृतः स्वमुखेन भक्तजनक्षेमार्थञ्च । ततः मकरालयाख्यग्रामे वापिखननकृत्यं विधाय लोककल्याणकार्यमाचरन् तत्रत्यान् सन्तर्पयन् सद्धर्मस्थापनमधर्ममुत्खननं भक्तजनानां योगक्षेमार्थं तेषां भावपरिपूरणार्थं ग्रामाद् ग्रामं नगराद् नगरं व्यचरत् ।

सर्वावतारिणः परब्रह्मणः श्रीस्वामिनारायणस्य भगवतः षड्विधं प्रागट्यप्रयोजनं योगिवर्यगोपालानन्दस्वामिनं कार्यायनग्रामेऽज्ञापयत् तद् यथा-

(१) स्वीयोपासनप्रवर्तनम् (२) अन्यावतारोपासकानामक्षरधामप्राप्त्यर्थम् (३) स्वपित्रोः भक्तिधर्मयोः स्वस्वरूपानन्ददानेन परितृप्त्यर्थम् (४) भागवतधर्मसंपोषणार्थम् (५) नवमुमुक्षुणामभिवृद्ध्यर्थम् (६) बहुकालारंभिततपस्विनां योगिनाञ्च साधनासमाप्त्यर्थम्

भगवतः श्रीस्वामिनारायणस्य जीवने स्वकार्येऽपि परिपूर्णरूपेण एतत् दरीदृश्यते ।

अपरिमितैश्वर्यभाक् श्रीस्वामिनारायणमहाप्रभुः आपामरपण्डितजनान् लीलया सम्प्रापयामास योगिजनसुदुर्लभाम् समाधिस्थितिम् । मकरलयग्रामे सुचारुसंचारिते समाधिप्रकरणे तु देवतान्तरसमुपासकाः सज्जनाः महामहसि स्वेष्टदेवतादर्शनपुरःसरं निःसीमलावण्यसौन्दर्य सौकुमार्यमाधुर्यादिगुणोपेतम् आनन्दघनस्वरुपं सन्ददृशुः, मुद्रामदिरामत्स्यामिषमैथुनासक्ताः घोरवासनिकाः महापाप्मानः सस्वामिनीं संयमिनीञ्च । सर्वाविर्भावहेतुः श्रीहरिः समेषां स्वावताराणां स्वस्वरूपतः प्रकटीभवनं तन्निलयनञ्चाकार्षीत्; तदेतत् दृष्ट्वा अकल्पनीयकंकामयमानाः नैकविधसाधनसंसाधयमानाः परममुमुक्षवः सर्वावतारित्वमधिजग्मुः महाप्रभोरस्य ।

मदनमुखारिमदमर्दनाः शुद्धबृहद्व्रतधारणाः पूतान्ताः द्विसहस्राधिकाः मुक्तानन्दमुनिप्रभृतयः साधवः निखिलदोषनिर्दुष्टाः आज्ञोपासनपरायणाः लक्षाधिकाः मयारामप्रमुखाः गृहिणश्च समकालीनं श्रीहरिं स्वेष्टदेवतात्वेन भेजिरे इति महद्वैलक्षण्यं अस्यावतारिणोऽवतारान्तरापेक्षया । यावच्चन्द्रदिवाकरौ मुमुक्षूणां निर्विघ्ननिःश्रेयससम्पादनहेतवे संपेदे चैतादृशानि कार्याणि....

(१) नूतनमन्दिरनिर्माणं तस्मिंश्च मूर्तिप्रतिष्ठापनम्

(२) स्वोपासनप्रवर्तनाय वृत्तालयपुरे श्रीहरिकृष्णस्वरूपस्थापनम्

(३) धर्मधूःनिर्वाहकाचार्यद्वयनियुक्तिः

(४) आचारसंहितायाः शिक्षापत्र्याः गुम्फनम्

(५) स्वचरितात्मकप्रबन्धनिबन्धनं विद्वदग्रगण्यैः साधुभिः

सद्गुरुश्रीरामानन्दस्वामिना प्रवर्तितोऽयं सम्प्रदायः महाप्रभुणा श्रीस्वामिनारायणेन विवर्धितः सम्यक्तया परिबद्धश्च । एतेन "श्रीस्वामिनारायणसंप्रदाय" इति नाम्ना प्रख्यायतेऽयं सम्प्रदायो भुवनमण्डलेऽस्मिन् । सम्पन्नं समस्तं सत्कार्यं स्वीयमिति मत्वा तिरोभवितुकामोभक्तजनकल्पमहीरुहाभो भगवान् निजाश्रितान् स्वसंकल्पं श्रावयामास । श्रुत्वेदं प्राणहरं प्राणप्रियवचनं गतप्राणा इवाभवन् समे श्रिताः। अन्तःप्रविश्य शास्ता जनानां सर्वात्मा परमात्मा धृतिं धारयन् योगिवर्यगोपालानन्दमुनिं स्वस्थाने नियोज्य तद्वचनमनुसर्तुमादिदेश । ततः दुर्गपुरं राराजमानः आनन्दाम्भोनिधिः भगवान् वैक्रमाब्दाष्टादशशताधिकषडशीतितमे (१८८६) ज्येष्ठशुक्लदशम्यां तिथौ तिरोदधे धरातः।

एतद् चरित्रालेखनेन श्रीहरिकृष्णपरमात्मा मयि प्रसन्नः भूयादिति प्रार्थये ।

शा. शुकवल्लभदासः
श्रीस्वामिनारायण गुरुकुल कण्डारी

## श्रीमन्मुक्तानन्दमुनिवर्यस्य जीवनवृत्तम्

काव्ये नैपुण्यमाप्त्वा भृशमतुषदजं स्वामिनं कीर्तनाद्यैः
दासत्वं संजुगुम्फ प्रणयसुनिभृतं बन्धमुक्तौ सहायम् ।
नृत्यन्गायंश्च पादैः करिकृतिकृतिनाऽप्रीणयन्नीलकंठं
मुक्तानन्दं मुनीन्द्रं गुणगणनिलयं सद्वरेण्यं नमामि ॥

सौराष्ट्रप्रान्तान्तर्गतम् अमरेलीत्याख्यं प्रसिद्धं नगरमभूत् स्वामिचरणानाम् प्रादुर्भावस्थलम् । नगरेऽस्मिन् निवसतो महात्मनो मूलदासाऽभिधस्य परमपावने चाश्रमे चतुर्दशाधिकाष्टादशशततमे (१८१४) वैक्रमाब्दे अनन्तरामराधादेवीनाम्नोः दम्पत्योरपत्यत्वेनाजनि महामुक्तश्चायम् ।

रूपलावण्येन नित्यं पितरौ प्रमोदयन् अयं बालः मुकुन्ददासाख्यामधिगम्य सर्वजनमनोहारी बभूव । बाल्योचितव्यापारेऽपि गाम्भीर्यं स्थैर्यञ्चावलोक्य स्थितप्रज्ञः कश्चनावतीर्णः इत्यमन्यत सर्वलोकः । प्राप्ते वयसि शैशवेऽभ्यस्तविद्यः स सद्यः सकलशास्त्रवैदग्ध्यमविन्दत । विद्यां सद्विद्याञ्चावाप्य गान्धर्वे च शास्त्रेऽपि नैसर्गिकं नैपुण्यमविन्दत ।

*आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।*
*इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥*

इति मथितमतिः महात्माऽयं बाल्यावस्थात एव भगवत्भक्त्याऽकृष्टचेतो बभूव । वयसा समं वैराग्यमपि ऐधिष्ट प्रतिदिनम् । दृढस्नेहानुबन्धयोः पित्रोरनुदिनं विवाहनिर्वृत्यर्थं मोहोऽप्यवर्धत । विरक्तचेतोऽयं मुकुन्ददासः अनिच्छन्नपि पित्रोराग्रहातिशयात् लग्नग्रन्थिनाऽबध्यत । प्रसन्नौ पितरौ निर्वेदाप्लावितं मुकुन्दमानसं नाबुध्यत । मातापितोरेकतस्तु मोहः अन्यतस्तु मुकुन्ददासस्य औदासीन्यम् सुतरामवर्धिष्ट ।

गृहान्निष्क्रान्तुमीहमानो मुकुन्ददासः निष्क्रमणोपायं विचिन्वानो लोकलज्जापरित्याग एक एवोपायमपश्यत । तदित्थं लोकलज्जां विहाय *"जानन्नपि हि मेधावी जडवल्लोकमाचरेत्"* इति वचनानुसारेण प्रबुद्धोऽप्ययम् अबुद्ध इव व्याजहार ।

उन्मत्तवत् व्यवहरन्नयं 'राम घटाघट महूडी फूली' 'राम घटाघट महूडी फूली' इत्यनर्थकं जल्पमाणो यत्र तत्र दधाव। असभ्यचर्यं अवाच्यवाचिनमेनं दृष्ट्वा पित्रादयो खिन्नाः अभूवन् । प्रतिदिनमेवमेवाचरन्तम् एनम् लोकाः अपि नासहिषन्त पितृभ्याञ्च सखेदमिदं निवदेयामासुः। जातावमानाः पत्नीपित्रादयोऽपि उपायमपरमपश्यन्तो मुकुन्ददासम् गृहान्निष्क्रान्तुं निर्णीन्युः।

स्वार्थावलम्बितां सांसारीकीं तेषां प्रीतिं निवृत्तां विज्ञाय मुकुन्ददासोऽपि स्वाभिलषितमवसरं समुपनतमिति जहर्ष । गृहान्निष्क्रम्य *'यदिच्छन्तो ब्रह्मचर्यं चरन्ति '* इति वचनानुसारेण परब्रह्मप्राप्तिसाधनं नैष्ठिकं ब्रह्मचर्यं सिषाधयिषुरासीत् । *'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्'* इति श्रुत्युक्तिमनुसृत्य विरागिणं ऊर्ध्वरेतसं कञ्चन गुरुमन्विष्यन् आसीत् । सद्गुरुमन्विष्यन्नयं ध्रांगध्रानगरनिवासिनं द्वारकादासाभिधं विरागिणमधिजगाम । शिष्यत्वमङ्गीकृत्य तं संसेवमानः तत्परमप्रीतिपात्रोऽजायत ।

कदाचन प्राप्तावसरः तस्मै नैष्ठिकव्रतनिर्वृत्यर्थं प्रार्थयामास मुकुन्ददासः । स्वात्मानमसमर्थं विनिवेद्य स चैनं वांकानेरवास्तव्यं परमवितरागिणं कल्याणदासाख्यं साधुमाश्रय इत्यादिशत् । तत्क्षणमेव ततो निर्गत्य वांकानेरमागत्य कल्याणदासान्तेवासित्वं स्वीचकार । भृशं संसेवमानस्तं भूरि प्रसादयामास । एकदा रहसि स्वाभिलषितं निवेदयामास पुनश्चैनम् नैष्ठिकं सिषाधयिषुरेषः ।

कल्याणदासोऽप्यात्मनोऽसामर्थ्यं वीक्ष्य व्याजहार "योगिनामप्यसुलभमिदं व्रतम् कलुषिते कलिकाले कामोत्क्रमणं सर्वथाऽसंभवम्" । निशम्येदं नितरां निषण्णः (खिन्नः) अयं निष्कामव्रतासिद्धौ नारायणस्याप्राप्तौ जीवनस्य नैष्फल्यम् अन्वीक्षत ।

"अर्थं साधयामि देहं वा पातयामि" इत्यध्यवसितमानसोऽयं देहपातार्थमुत्तुङ्गं वृक्षमारुरोढ। सहसाऽश्रृणोत् दिव्यां वाचं "शरधारं गच्छ" इति। सद्यः एव शरधारपुरमवाप्य तुलसीदासाभिधं प्रथितकीर्तिं पवित्रं साधुमुपससाद । तस्य वैराग्यादिसद्गुणैः संतुष्टस्तत्समीपेऽवात्सीत् । स चाप्यस्य सेवासारल्यादिगुणैः मुदितान्तरङ्गः स्वमुख्यशिष्यं विधाप्याश्रमस्य महन्तस्थानं प्रददौ ।

कतिभिर्दिवसैस्तत्रोद्धवावतारः श्रीरामानन्दस्वामी भक्तान् अनुग्रहीतुं विचरन्समाययौ । श्रोत्रीयं ब्रह्मनिष्ठं गुरुमुपसृत्य शिष्याः सज्जनाश्च ग्रामीणाः सर्वे अमोदन्तातिशयम् । मुकुन्ददासोऽपि स्वामिनः सदुपदेशश्रवणेन साधुतादिसद्गुणदर्शनेन चाधिकतरम् आकृष्टहृदयः

प्रतिदिनमाजगाम कथाश्रवणार्थम् । तदिदं नारोचत तुलसीदासाय । इर्ष्याकुलितोऽयं न्यरुणत्तम् स्वामिसमागमात् । तथाप्यस्य प्रीतिरवर्धतानुदिनम् । विदितवृत्तो रामानंदस्वामी मुकुन्ददासस्य स्वस्मिन् वर्धमानमाकर्षणं विलोक्य गुरुशिष्ययोः क्लेशो यथा न स्यात्तदर्थमादिशत् मुकुन्ददासम् नागन्तुम् समागमार्थम् ।

अथाप्ययं रात्रौ वर्षन्तीं मेघधारां सहमानः गृहपश्चाद्भागे कोऽपि न जानीयात् तथाऽवतिष्ठन् कथां शुश्राव । कथमप्येतत् यदा प्रसिद्धमभूत्तदा तुलसीदासस्त्वतिशयेनाक्रुध्यत्। रामानन्दस्वामी तूपाधिमेनं दुरीकर्तुं ग्रामान्तरं जगाम । खिन्नोऽयं मुकुन्ददासः तुलसीदास एव मां त्यजेदित्युपायमचिन्तयत् । आश्रमोपकल्पिते सदाव्रते तैर्थिकेभ्यः आमान्नवितरणम् औदार्येण आरभत । कृपणो तुलसीदासः उदारहस्तदानं निरोद्धुमशक्नुवन् आश्रमाद्गन्तुमादिशत् । विचक्षणोऽयं मुकुन्ददासः लिखिताऽनुज्ञामकामयत । तुलसीदासेन गन्तुमादेशः लिखितः ।

मुदितान्तरङ्गो मुकुन्ददासः सत्वरमेव रामानन्दस्वामिनं प्राप्य साष्टांगं प्रणिपत्य स्वात्मानं च स्वामिने न्यवेदयत् शिष्यत्वेनाङ्गीकर्तुं प्रार्थयामास च । पात्रतां परीक्षितुं मुमुक्षुमेनमाज्ञापयामास रामानन्दस्वामी मुलूभाई–इत्याख्यस्य सद्गृहस्थस्य क्षेत्रे हलाकर्षणार्थम्। निःसंकोच एव सः निरभिमानः सन् गुरोराज्ञां शिरसि निधाय कृषिकारकर्म प्रारभत सानन्दम् । गृहस्थभक्तक्षेत्रे हलचालनम् व्यदधत्तायं त्यक्तसंसारसर्वसुखः ।

सेवयाऽनयाऽतिशयेन प्रसन्नः स्वामी स्वान्तिके स्थापयामास तम् । बंधीयाग्रामे च परमहंसदीक्षया चैनं दीक्षयित्वा मुक्तानन्द इत्वन्वर्थनाम व्यदधात् । गुरुकृपाप्रतापेनायं चिरेप्सितां निष्कामसिद्धिमाससाद । साधुगुणैरलंकृतोऽयं स्वामिनः शिष्येषु प्रमुखं स्थानमाप्नोत्। रामानन्दस्वामिनोऽनुज्ञया पञ्चाशत्साधुभिः साकं लोजाभिधाने नगरे निवसन्नयं मुक्तानन्दस्वामी तैर्थिकान् अन्नादिभिः सिषेवे ।

षट्पञ्चाशदधिकाष्टादशे ( १८५६ ) वैक्रमाब्दे श्रावणकृष्णषष्ठयां च तिथौ तीर्थयात्राव्याजेन धर्मभक्तिनन्दनो भगवान्नीलकण्ठस्तत्राऽऽयौ । प्रभातकाले नित्यकर्मनिर्वृत्यर्थं समागतः सुखानन्दनामैकः साधुः पूर्णचन्द्रवदनं कमललोचननीलकण्ठं वापीमवस्थितम् ददर्श। आकृष्टहृदयश्चैनं प्रार्थयामास पावयितुमाश्रमपरिसरम् । अष्टादशवर्षीयोऽसौ वर्णिवेशः साधूनां मनांसि आकर्षयन् मुनिमुख्यं मुक्तानन्दस्वामिनं सादरं जीवेश्वरमायाब्रह्मपरब्रह्मविषयकान् प्रश्नान् पृच्छति स्म । सद्गुरुपरम्पराप्राप्तज्ञानेन यथाशास्त्रं तत्त्वतो निरूपयामास तेषां स्वरूपाणि ।

साधुतादिभिः सद्‌गुणैराकृष्टो वर्णिवर्यः शास्त्रसंमतं सुचारुज्ञानं निशम्य नितरां संतुष्टो बभूव । तेषामाग्रहेण तन्मध्य एव तस्थिवान् सकलसद्‌गुणसमलङ्‌कृतस्य सद्‌गुरोः रामानन्दस्वामिनो दर्शनार्थमुत्कण्ठितोऽजायत । साधवोऽपि सर्वे तत्राश्रमे ब्रह्मचारिसमागमेन अष्टांगयोगमभ्यसन्तो ज्ञानमनुत्तममवापुः ।

एकदावसरं प्राप्य रहसि स्वामिनं गुरुवर्यरामानन्दस्वामिदर्शनार्थं व्यजिज्ञपदेष ब्रह्मचारी । पत्रेण प्रार्थितस्य गुरुवर्यस्याज्ञया नीलकण्ठस्तत्रैव निवासमकरोत् भक्तिभावेन । परस्परं भावयन्तौ तत्राश्रमे निवसन्तौ तौ मुक्तानन्दस्वामी नीलकण्ठवर्णी च तैर्थिकान् असेवताम्।

कदाचन कथाप्रसङ्गे सम्मिलीतस्त्रीपुरुषसभामवलोक्य स्त्रीणां पुरुषाणां च पृथगवस्थानं कल्याणकरं कथायामित्येतां वर्णीच्छामादृत्य मुक्तानन्दस्वामी तथैवाऽकरोत् । सारल्यं साधुतां चाऽवलोक्य वर्णिवर्योऽप्यधिकतरं प्रसन्नो बभूव ।

निर्मत्सरिणो मुक्तानन्दमुनेरनुमतेन रामानन्दस्वामी नवदीक्षितमल्पवयस्कमपि सहजानन्देत्यन्वर्थनामानं वर्णिराजं स्वकीयेऽध्यक्षे पदे स्थापितवान् । सत्यपि कस्यचनाग्रणिनः साधोः विरोधे गुरोरादेशमनुसरताऽनेन मुनिवर्येण यावदायुषम् गुरुभावेन सहजानन्दस्वामिसेवा आचरिता । नवोदितस्य वर्णिवर्यस्य योग्यतां स्वीकृत्य स्वकीयां महत्तां तत्याजेति मुनिराजस्योत्कृष्टं बलिदानं सम्प्रदायेऽस्मिन् ।

सहजानन्दस्वामिकृतसमाधिरूपमैश्वर्यं विलोक्य योगिनामप्यसुलभमिदं कथं सर्वजनसुलभमिति सन्दिहानाय उदासीनचित्ताय मुक्तानन्दस्वामिने रामानन्दस्वामी दिव्यदर्शनं दत्त्वा एषः सहजानन्दस्वामी भगवानेवेति निःसंशयं स्वीकृत्य निःश्रेयसे आश्रय तमिति प्रत्यबूबुधत् । निःसंदिग्धमानसस्यास्य सहजानन्दस्वामिनं प्रति प्रेम ववृधेतमाम् । प्रेमाप्ल्वावितान्तरङ्गोऽयं सुमनःसुजं समर्प्य दीपं प्रज्वाल्य च निराजनेन ( आरतीद्वारा ) सम्पूजयामास सहजानन्दस्वामिनम् कालवाणीत्याख्यग्रामे । मुक्तमुनि विरचितम्

जय सद्‌गुरु स्वामी प्रभु जय सद्‌गुरु स्वामी

सहजानंद दयालु बलवंत बहुनामी.

पद्यमिदम् आसमुद्रान्तप्रवर्तिते मन्दिरे गृहमन्दिरे च प्रतिदिनमद्यापि गीयमानं विद्यते ।

सत्संगविकासपुरुषेषु स्वामिचरणानां योगदानमनुपमं विद्यते । रामानन्दस्वामिनोऽनुज्ञया विद्याभ्यासार्थमागताः स्वामिचरणाः भुजनगरं भिक्षावृत्तिमाचरन्

प्रतिदिनम् । अत्रापि स्वामिनः सद्वृत्तिं साधुतामनुभूय राजपुरुषः सुन्दरजीभाई-प्रभृतयः सत्सङ्गमाश्रयन्त । वटवृक्षायितः भुजनगरीयः सत्सङ्गः मुक्तानन्दमुनिप्रभावात् । सुरतमहानगरेऽपि भूताकुलितेऽतिजीर्णे सदने निर्भीतः सन् निवासं कृत्वा तत्र सत्संगविकासमारभत । तत्राऽप्यनेके जनाः मुनिवर्योपदेशेन सत्सङ्गमाश्रयन्त ।

कलौ खलु हरेरवतारोऽसंभवः इति विवदमानानां वटपुरवासिनां विदुषां वादं सद्युक्तिभिरनेन निरस्तः । स्वामिभिस्तु सभायां सप्रमाणं कलावपि भगवान्नवतरतीति वटपुरे व्यवस्थापि । अवताराः ह्यनन्ताः इत्युपपाद्य अयं श्रीस्वामिनारायणः प्रकटपुरुषोत्तम इति वटपुराधीश्वरस्य सयाजीरावमहाराजस्योपस्थितौ सभायामेव प्रत्यपादित । पराजिताश्च विद्वांसः स्वामिचरणान्नाश्रित्य भगवद्भक्ताः अभूवन् । सयाजीराव महाराजश्चापि स्वामिनं स्वसद्गुरुरूपेणाचिनुत । स्वामिनः समागमात् सत्सङ्गश्चाप्यतिशयमवर्धत वटपत्तननगरे ।

गायनं वादनं नृत्यं त्रिभिः संगीतमुच्यते-इति वचनानुसारेण सुसंस्कृतज्ञोऽयं साधुतामूर्तिः मुक्तानन्दस्वामी सुमधुरः गायकः श्रेष्ठः वादकः कुशलनर्तकश्चापि आसीत् । संप्रदायस्यास्य प्रथमः कविरेषः मधुरया गिरा गायमानः भृशमतुषत् श्रीहरिम् । *"मुक्तानन्दस्तदा वीणां वादयन् षट्पदीं जगौ"* ( स.गी.३/६३ ) इति शतानन्दमुनिवचनेन वृत्तालये प्रवर्तिते पुष्पदोलोत्सवेऽसौ वीणां वादयन् षट्पदीं जगाविति प्रसिद्धिः । नृत्यकलाकौशल्यं तु स्वामिचरणानां सर्वजनीनं सम्प्रदायेऽस्मिन् । *''पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्''* इति वचनानुसारेण ज्ञानवयोवृद्धोऽपि स्वामी भगवति भक्तिभूम्ना सभायां नृत्यन् पादाभ्यां पृथिव्यामकार्षीत् करिप्रतिकृतिम् । गर्विष्ठाः ग्वालीयरदेशीयाः गायका अपि विलोक्यैतत् मन्त्रमुग्धाः सन्तः स्तब्धाः अभूवन् ।

वयोज्ञानगुणादिभिः सर्वश्रेष्ठं मुक्तानन्दस्वामिनं भगवान् स्वयमपि सदैव गुरुरूपेणैवामन्यत । अत एव *"मुक्तानन्दानुगः''* इत्यन्वर्थं नामाभिधानं सर्वमङ्गलस्तोत्रे शतानन्दमुनिना निवेदितम् । सर्वसत्सङ्गिषु साधुषु च सौहार्दभावं स्नेहाधिक्यं च वीक्ष्य *"सत्सङ्गस्य माता''* उद्घोषयामास चामुं मुनिवर्यम् भगवान् स्वयम् । मातृवत्वात्सल्येन सर्वान्नाश्रितान् पालयामासुः एते दयालवः स्वामिनः । शिक्षापत्र्यां *"मुक्तानन्दादयो ये स्युः साधवश्चाखिला: अपि''* ( शिक्षापत्री. ५ ) इति वचनेन श्रीहरिणा स्वयमेवास्य सर्वश्रेष्ठत्वम् प्रत्यपादि । श्रीमद् सत्सङ्गिजीवनस्य चतुर्थे च प्रकरणे कार्यायनग्रामे मुनिवर्यश्चायं *"श्रीभाष्येण सहैवासौ व्याससूत्राणि तत्र च"* ( स.जी.४-१३-२२ ) इति श्रीभाष्यकथां विदधे इति ज्ञायते । कदाचित्

भगवान् व्यजिज्ञपत् स्वामिनं स्वामिनो माहात्म्यं कश्चनापि जीवं कल्याणाय पाणावादाय क्षिपति ( प्रयतते ) चेद्भवान् तदा अष्टावरणान्मायिकान् उत्तीर्य श्रीहरेर्धामाक्षरं प्राप्नोत्येव इति अस्ति भवतां सामर्थ्यम् ।

समर्थोऽप्ययं श्रेष्ठः आज्ञांकितः आसीत् । सम्प्रदायपुष्टिहेतुना स्वेष्टदेवमाहात्म्यपराणि सम्प्रदायपुष्टिकराणि शास्त्राणि रचनीयानीति भगवदाज्ञाम् शिरसि वहन्तः बहवो ग्रन्थाः संस्कृतप्राकृतनिबद्धाः व्यरचन्त । दुर्गपुरमध्यप्रकरणे अष्टपञ्चाशत्तमे ( ५८ ) वचनामृते भगवदाज्ञावचनान्येतानि गुम्फितानि सन्तीति सर्वे जानन्ति एव । तेषां ग्रन्थानां निर्देशो यथा–

## संस्कृतग्रन्थाः

( १ ) ब्रह्मसूत्रभाष्यरत्नम्
( २ ) सत्सङ्गिजीवनमाहात्म्यम्
( ३ ) निर्णयपञ्चकम्
( ४ ) श्रीहनुमत्स्तोत्रम्
( ५ ) श्रीहनुमदष्टोत्तरशतनामावलिः
( ६ ) श्रीहनुमत्कवचम्
( ७ ) श्रीहनुमन्मन्त्रपुरश्चरणविधिः

## प्राकृतग्रन्थाः

( १ ) धर्माख्यान
( २ ) वासुदेवावतारचरित्र
( ३ ) अवधूतगीता
( ४ ) कपिलगीता
( ५ ) भगवद्गीता
( ६ ) शिक्षापत्री–भाषा
( ७ ) वैकुण्ठधामदर्शन
( ८ ) उद्धवगीता
( ९ ) नारायणकवच
( १० ) विवेकचिन्तामणि
( ११ ) सत्संगशिरोमणि
( १२ ) विदूरनीति
( १३ ) कृष्णप्रसाद
( १४ ) मुकुन्दबावनी
( १५ ) सतीगीता
( १६ ) धामवर्णनचातुरी
( १७ ) पञ्चरत्न
( १८ ) नारायणचरित्र
( १९ ) गुणविभाग
( २० ) नारायणगीता
( २१ ) भागवतदशमस्कन्धानुवादः
( २२ ) प्राकृत सत्सङ्गिजीवन

अन्यानि सहस्राधिकानि कर्णरसायनानि भगवन्माहात्म्यभक्तिभूषितानि कीर्तनपदान्यपि विरचितानि सन्ति ।

एवम् सर्वमुमुक्षुजीवोपजीव्यः सकलसद्गुणालङ्कृतः एषः स्वामी भगवदाज्ञामनुसरन् स्वेष्टदेवमाहात्म्यपराणि मोक्षमार्गोपयुक्तानि संप्रदायपरिपोषकानि शास्त्राणि यावज्जीवम् रचयामास । भगवदन्तर्धानमनु तद्विरहासहिष्णुः ''धर्माख्यान'' इत्याख्यम् ग्रन्थम् प्रणयन् जर्जरीतशरीरः नित्यानन्दस्वामिप्रार्थितग्रन्थसमाप्तिकार्यभारः षडशीत्युत्तराष्टादशशततमे ( १८८६ ) आषाढकृष्णैकादश्यां तिथौ दिव्याक्षरं धाम प्रपेदे । पार्थिवं शरीरं विहाय पुरुषोत्तममूर्तिमहासुखमवापुः मुक्तानन्दस्वामिनः ।

विनयावनत : सुव्रतवल्लभाचार्यः
( व्याकरणाचार्यः, वेदान्ताचार्यः,
प्राचीनन्यायवैशेषिकाचार्यः, धर्मशास्त्राचार्यः (M.A/Phil)
( लोयाधाम–न्युजर्सी–अमेरिका )

॥ श्रीसहजानन्दाय नमो नमः ॥

श्रीमत्स्वामिनारायणशिष्य श्रीमुक्तानन्दस्वामिविरचितम् ।

# ॥ ब्रह्मसूत्रभाष्यरत्नम् ॥

## प्रथमाध्याये प्रथमपादः ।

धर्मात्मजमहं वन्दे मुक्तानन्दः सदा हरिम् ।
दिव्यं गुणातिगाकारं सच्चिदानन्दधर्मिणम् ॥१॥
श्रीमतां व्याससूत्राणां मुक्तानन्दः करोम्यहम् ॥
सुखबोधं भाष्यरत्नं व्यासाभिप्रायबोधकम् ॥२॥
धामन्यक्षरे निखिलमुक्तगणावृतो यो वेदैः स्तुतोऽष्टनिजभूतिनिषेवितश्च ॥
सोऽयं नराकृतिधरो हरिकृष्णनामा निर्विघ्नतां वितनुतां मम सत्प्रयासे ॥३॥
निखिलनिजशक्तिधरो यो यच्छक्त्यैव सकलविश्वविनोदः ।
स जयति हरिर्वृषसूनुर्निखिलागमसारसर्वस्वम् ॥४॥
भवतु सुसिद्ध्यै हि सतां हरिकृष्णः सर्वमङ्गलोपेतः ॥
ईशोऽशेषः प्रपञ्चश्चिदचिन्मयस्तु यस्यैषः ॥५॥
नमो व्यासाय कृष्णाय ब्रह्मसूत्रविधायिने ॥
येन श्रुतिविरोधस्य विनाशाय श्रमः कृतः ॥६॥
व्याससूत्रमिदं पूर्वाचार्यैर्व्याख्यातमप्यथ ॥
दुर्बोधं तस्य व्याख्यानं मया स्पष्टं विरच्यते ॥७॥
सर्ववेदान्तसत्पद्मसुगन्धस्वादमोदिनाम् ॥
साधूनां हरिनिष्ठानां भाष्यमेतन्महानिधिः ॥८॥

अत्र सूत्रकलापे ह्युपनिषज्जन्या ब्रह्ममीमांसा प्रारभ्यते । इह तस्या आरम्भो हि किं पुरषार्थः? पुरुषार्थो हि प्राकृताप्राकृतसुखजनकश्चतुर्विधः । को वा ब्रह्ममीमांसाख्यविचारेऽधिकारी भवति यस्यार्थित्वादयो धर्माः सन्ति ? किमस्य विषयः ? यदुक्तं तत्प्रसिद्धमनतिप्रसिद्धं च संशयदोलारूढं विद्यते ?

अस्यारम्भः कस्यानन्तरमस्ति, यस्य नियतप्रयोजनत्वेन पूर्वभावित्वं ज्ञायते, इति श्रोतृनरमनः सन्देहशरक्षतसमपनयनाय ग्रन्थप्रबन्धविधायकोत्तमेन हर्यवतारव्यासेन समुद्भावितमिदं सूत्रम्:-

जिज्ञासाधिकरणम् ॥१-१-१॥

## अथातो ब्रह्मजिज्ञासा ॥१-१-१॥

इदमेकमधिकरणम् । विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयसङ्गतीनामाधारत्वमिहाधिकरणत्वम् । इहायमथशब्द आनन्तर्यार्थः, न त्वथ योगानुशासनमित्यादिवदधिकारार्थः । अधिकारो हि समारम्भः । नहि ब्रह्मज्ञानेच्छा करणीयत्वेन समारम्भार्हा विद्यते; किन्त्वतिरमणीयविषयत्वेन सा हि संभावनीया ।

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥" (बृ.भार.पु.पू.ख.५१-१०)

इति स्मृतावथशब्दो मङ्गलवाचकोऽप्यत्रायं न मङ्गलार्थः प्रतिपादनीयः । यतो ब्रह्मजिज्ञासां प्रति मङ्गलस्यान्वयसम्भवो नास्ति; तस्या एव मङ्गलत्वात् । शास्त्रारम्भे हि शिष्टाचारपरिरक्षणार्थे यन्मङ्गलकरणं तत्त्विहाक्षरध्वनिमात्रेणोद्यते । न चायमथशब्दः पक्षान्तरसंग्रहार्थः । यतः प्रथममेकस्य पक्षस्याकथिततया तत्प्रसङ्गाभावोऽस्ति । यथा भोजनगमनादौ तथाऽनिर्धारितं प्रथमं यत्किंचिद्वृत्तमपेक्ष्य न चायमथशब्दप्रयोगः । अत्र नियतसामग्रीभूतस्य कस्यचिद्वस्तुनो वक्तुमिष्टत्वात् । अत्र यस्य संपत्तिरधिकारिविशेषणत्वेन ब्रह्ममीमांसायाः साधनं तच्छास्त्रं पूर्वभावीत्यवगम्यते । अत्राष्टसंवत्सरप्रभृतियुतब्राह्मणाद्यर्होपनयनसंस्कारसंस्कृतस्य द्विजस्य

'स्वाध्यायोऽध्येतव्यः' (तैति. आर. प्रपा.२ अनु.१५)

इति स्वकर्तव्योपदेशतया नियतप्राप्तस्य नियमनिषेविताचार्याऽऽननप्राप्तवर्णोपादानरूपस्यार्थवेदनफलस्य स्वोपबृंहणस्मृतिवेदपठनस्य ब्रह्ममीमांसायाः पूर्वभावित्वं योग्यम् । धर्मज्ञानवद् ब्रह्मज्ञानस्यापि वेदैकसिद्धत्वात् । वेदाध्ययनवर्जितस्य तद्विचारानुपलब्धेः । अतः केवलवेदपठनानन्तरं ब्रह्मविचार इति चेत्, भवतु नाम तथा भूतं वेदाध्ययनम् । तदध्ययनानन्तरं तु धर्मविचारः । वेदाध्ययनाभावे धर्मविचारसिद्ध्यभावात् । तथैवाचार्यैः सम्पादितम्

'अथातो धर्मजिज्ञासा' (पू.मी.सू.१-१-१) इति ।

आदित आचार्यात् स्वोपबृंहणशास्त्रयुतवेदपठनान्तरं धर्मविचारलब्धिरिति तर्हि कस्मादनन्तरं ब्रह्ममीमांसारम्भः ? धर्ममीमांसानन्तरमेवेति कथमेवमुक्तमिति चेत्तत्र ब्रूमः - नास्माकं धर्मब्रह्ममीमांसारूपयोः शास्त्रयोरत्यन्तभेदवादित्वं किन्त्वेकत्ववादित्वमेव । उपासनोपास्यतया प्रतिपादितयोर्धर्मब्रह्मणोः प्रतिपादकम्

'अथातो धर्मजिज्ञासा' (पू.मी.सू.१-१-१) इत्यारभ्य

'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' (४-४-२२) इत्येतावत्पर्यन्तमेकमेव शास्त्रमस्ति । तत्राथातः शेषलक्षणमित्यादौ यथा तथाऽवान्तरभेदबोधकोऽयमथातो ब्रह्मजिज्ञासेति प्रारम्भः ।

अथवा 'धर्माज्ज्ञानं प्रभवति' इत्यादिवाक्यैर्धर्मस्य परब्रह्मज्ञानकारणत्वात्तद्विचारोपयोग्यानां श्रुतिवाक्यानां वेदार्थप्रतिपादकस्मृतिपुराणादिषु तत्प्रमाणत्वप्रतिपादकवाक्यानां च ब्रह्मविचारोपयोग्यत्वाच्च धर्मविचारानन्तरं ब्रह्ममीमांसा । साधनमृते साध्यानुपलब्धेः । परब्रह्मज्ञानं प्रति धर्मस्य साधनतायां-

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृह.६-४-२२) इति वेदवचनमेव प्रमाणभूतम् । धर्मरूपकर्मणो ब्रह्मज्ञानं प्रति साधनत्वात्तदेव विचार्य कर्तव्यं च किमनेन वेदान्तवचनमीमांसायत्नेनेति न च वाच्यम् । फलानुसंधानहीनतया परब्रह्मप्रसन्नतार्थं कृतस्य वर्णाश्रमोचितधर्मात्मककर्मणः पापक्षयसंभूतान्तःकरणशुद्धिद्वारा मुमुक्षोर्ब्रह्मविचारयोग्यत्वसंपादकत्वेन परब्रह्मज्ञानकारणत्वात् । तथा शिष्टस्मृतिः

'यस्यैते चत्वारिंशत् संस्काराः' (गौ.ध.सू. ८-२५) इत्यादिना

'स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' (कृ.यजु.तै.काठक प्र.३ अनु.५-१२ / गौ.ध.सू. ८-२६) इत्यन्तेन प्रकरणेन गर्भाधानादिसमस्तकर्मणां पापमलप्रक्षालनरूपसंस्कारकारणत्वं द्योतयति।

अतः कर्मफलानुसंधानहीनेन पुरुषेण परब्रह्मतुष्टये कृतकर्मणामन्तःकरणशुद्ध्यादिसंस्कारोत्पादकत्वोपलब्धिः । तथा च सति फलाभिसन्धिरहितकर्मकर्तुर्नरस्य यदेव परब्रह्मज्ञानफलं तदेव कर्मफलमस्ति; यथा व्रीहिप्रोक्षणदर्शपूर्णमासोत्पत्तिरपूर्वहेतुतया स्वर्गे समुच्चीयते तथा कर्माणि चित्तशुद्धिद्वारा परब्रह्मज्ञानहेतुतया मोक्षे समुच्चीयन्ते । अतः कर्मणां गौणत्वादङ्गत्वमेषाम् । अतः परब्रह्मज्ञानसमुद्भवाय कर्माणि विधेयानि ।

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृह.६-४-२२) इति श्रवणात् । परब्रह्मज्ञानसाधनानां कर्मणां मीमांसानन्तरं परब्रह्मज्ञापकशास्त्रारम्भो वेदज्ञप्रसिद्धोऽस्ति । ननु कर्मब्रह्ममीमांसयोरनुक्रमनियमः कथमवगम्यते ? इति चेत् कर्तृभेदाभावादनुक्रमनियमोऽस्ति । ननु कर्त्रैक्यमिहाधारदर्शपूर्णमासवदङ्गाङ्गित्वेन वा पञ्चप्रयाजवदेकाङ्गोपयुक्तानेकाङ्गत्वेन वा षड्यागवत्फलैक्येन वा भवति ? तत्रोत्तरम्- तेषां मध्येऽन्यतमत्वेन तदस्ति । तथात्वे सत्युभयविचारयोर्वेदादिप्रमाणं नोपपद्यते । ततः कर्मब्रह्मविचारयोरनुक्रमनियमो नार्ह इति । यर्हि वेदादिप्रमाणं न संभवेत्तर्हि तु तथात्वं स्यादेव, परन्त्वेवं नास्ति । किन्तु,

'विद्यां चाविद्यां यस्तद्वेदोभयं सह' (ईशा.११),

'तेनैति ब्रह्मवित्पुण्यकृच्च' (बृह.६-४-९),

'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यक्ज्ञानेन ब्रह्मचर्येण नित्यम्' (मुण्ड.३-१-५) इत्यादिका ज्ञानकर्मसमुच्चयवादिन्यः श्रुतय उभयत्रोपपद्यन्ते । ततः परब्रह्मतुष्ट्येकफलस्य फलान्तराभिसन्धिरहितकर्मणस्तज्ज्ञानस्य च जन्यजनकभावेन स्थितयोरुभयोर्मुक्त्येकफलजनकत्वात्तन्मीमांसयोरप्यनुक्रमनियमः संघटते ।

यद्यपि वेदाध्ययनविधेर्वर्णोपादानमात्रपर्यवसायित्वमस्ति, तथाप्युभयमीमांसयोर्न प्रवृत्त्यनर्हत्वम् । साङ्गवेदपठनाद्वेदानां पदार्थमात्रबोधेन तत्र प्रवृत्तिप्रतीतेः । तदनन्तरं परब्रह्मस्थूलाराधनभूतज्योतिष्टोमाद्युत्पादकानां तत्सूक्ष्माराधनरूपदहरादिविद्यासंपादकानां च वेदवाक्यानामन्योन्यविरोधाभासं समीक्षमाणो ब्रह्मविचारे पुरुषार्थाभिलाषी मनुजः स्वमेव प्रवृत्तिं करोति । ततो नानिबन्धनस्तद्विचारः । अतः समस्तचेतनाचेतनशरीरकस्य जीवेश्वरप्रकृतिपुरुषकालाक्षरब्रह्मभ्यः स्वरूपस्वभावगुणविभूतिभिरद्वितीयत्वात् समस्तनिगमसारगुह्यप्रकाशस्य ब्रह्मपरमात्मपरमेश्वरपुरुषोत्तमहरिकृष्णविष्णुवासुदेवनारायणमुनिप्रभृतिपर्यायवाचकैः शब्दोत्तमशब्दैः प्रद्योतितपरममहिम्नः स्वोपासकसकलचेतनवृन्दानुष्ठितस्वाराधनानुरूपसंजातस्वकीयप्रसादसंपादितपुरुषार्थसमुदायस्य वराहाद्यवतारधारिणः परब्रह्मणो विज्ञानजनकं स्वोपबृंहकस्मृत्यादिसहितमुपनिषच्छास्त्रं मीमांसनीयम् ।

तदुपायभूतनोदनात्मकस्य हर्युपासनभेदकलापरूपस्य तत्तदर्थवादप्रद्योतितप्राशस्त्यस्य श्रुत्यादिप्रतिपादितसमस्ताङ्गसंपन्नस्य स्वप्रमाणानुरूपस्मृतिपुराणेतिहासाभियुक्तसुवाक्यसमुदायप्राप्तोपबृंहणस्य विधिनिषेधविकल्पसमुच्चयोत्सर्गापवादबाधाभ्युच्चयप्रभृतियुतस्य सकलपुरुषार्थरत्नमहोदधिभूतस्य परब्रह्मज्ञानसाधनरूपस्य हरिप्रसादरूपफलेच्छया फलान्तराभिसन्धिरहितस्य वर्णाश्रमोचितस्य धर्मस्य मीमांसानन्तरमित्यथशब्दार्थः सिद्धान्तितः॥

अयमतः शब्दः पूर्वोक्तस्य हेतुत्वे गण्यते । यतो भणितस्वोपबृंहकस्मृत्यादियुतवेदेन पुंसा धर्मो मीमांसितोऽतस्तदनुष्ठानसंप्राप्तान्तःकरणशुद्धिना शीघ्रसंप्राप्तविवेकादिगुणविद्यमानत्वप्राप्तहरिभक्तिसंपन्नेनानेन परब्रह्माऽपि निरवधिकातिशयाऽऽनन्दरूपनिःश्रेयसकरं मीमांसनीयमिति तन्मीमांसामाह । ब्रह्मणः परमात्मवासुदेवनारायणमुनिप्रभृत्यनेकाभिधस्य परब्रह्मणो जिज्ञासा-ज्ञातुमिच्छेति कर्मणि षष्ठी । इच्छाया इष्यमाणज्ञानप्रयोजनत्वात्, तयेप्सितं तस्य ज्ञानं संपादनीयमिति सूत्राभिप्रायः ।

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' (भा.१-२-११) इति,

'तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुः' (भा.२-७-४८) इति,

'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्

'विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः'(भा.३-११-४१)

इत्यादि श्रीमद्भागवतवाक्येषु ब्रह्मशब्देन परमात्मसंज्ञं परब्रह्म तत्स्थानभूतं ब्रह्मपुराख्यमक्षरब्रह्म चोक्तम्; ब्रह्मशब्दवाच्ययोस्तयोर्मध्ये ब्रह्मशब्दोऽत्र परब्रह्मबाचको ग्राह्यः ।

'नारायणः परं ब्रह्म आत्मा नारायणः परः' (तै.महा. ११-४) इति;

'नारायणपरा वेदा नारायणपरा मखाः । नारायणपरं ज्ञानं नारायणपरं तपः' (भा. २-५-१५,१६) इत्यादिश्रुतिस्मृतिवाक्यैस्तस्यैव प्रतिपादनात् ।

इदानीं विषयसंशयादिकथनेन मीमांसा दर्शयति। अत्राधिकरणे को विषय इति चेद्ब्रूमः

'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' (मुण्ड. १-२-१२),

'नास्त्यकृतः कृतेन' (मुण्ड. १-२-१२) इति कृतेन कर्मणा अकृतः कर्मबन्धहीनो नास्तीत्यर्थः, यद्वा अकृतोऽनादिसिद्धो दिव्यमूर्तिः परमात्मा कृतेन कर्मणा नास्ति न गम्यः, अतो निर्वेदमायादिति पूर्वेण संबन्धः।

'तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति' (मुण्ड. १-२-१२),

'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः'

(गी.४-३४)' इति,

'तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्, शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्'

(भा. ११-३-२१)

इत्यादिश्रुतिस्मृतिवाक्यसमुदायो विषयः। परब्रह्म मीमांसायोग्यं भवति नवेति संशयोऽस्ति। पूर्वपक्षस्तु परब्रह्म विचारणार्हं नास्ति, तत्र संशयाभावात्। कथं संशयाभावः?

'अयमात्मा ब्रह्म' (बृह.६-४-५) इति श्रुतिवाक्यमयमितिपदेन साक्षात्सिद्धं जीवात्मानमेव ब्रह्मेति बोधयति। ततोऽत्र कथं संशयदूषणप्रसक्तिः? किञ्च विचारस्य फलं तूक्तविषयं वेदनं, तच्च वेद्यवस्तुपरिच्छेदकं वेदान्तमीमांसोत्पन्नं ज्ञानं वस्त्वन्तरेभ्यो ब्रह्म परिच्छिनत्ति न वा? यदा परिच्छिनत्ति तदाऽस्यापरिच्छेद्यविशेषणभङ्गोपलब्धिः, यदा न परिच्छिनत्ति तदा ब्रह्म यथार्थतया न प्रद्योतेत। अयमिति निर्देशतया निश्चितः पदार्थान्तरेभ्यो भिन्नो घटः पटश्च यथा ज्ञायते तद्वज्ज्ञानाभावात्। अतो ब्रह्मविषयं वेदनमपि न घटते; तथात्वे सति प्रयोजनं च किमपि नेक्षामहे; जनानां न मोक्षरूपं प्रयोजनं चाप्यनादिकालप्रवृत्तस्य संसरणस्य निवर्तनाभावादित्येवं प्राप्ते वच्मः:-सच्छास्त्रप्रोक्तचेतनाचेतनपरब्रह्मस्वरूपाभिज्ञं हर्येकान्तिकभक्तं गुरुं प्राप्य सर्वथा समारम्भणीयं शास्त्रम्। ब्रह्मणः संदिग्धतया विषयत्वसंभवात्। तन्निर्णयस्य सप्रयोजनत्वाच्च

यद् 'अयमात्मा ब्रह्म' (बृह.६-४-५) इत्यादिश्रुतिरमुमेवाहंकारबद्धकर्माधीनमनाद्य-विद्योपहतात्मसंविदमल्पज्ञं संसरणस्वभावं जीवात्मानं ब्रह्मेति वक्ति, अत एव संशयः। निरस्तसकलदोषकलापस्य सर्वज्ञत्वसत्यसंकल्पत्वापहतपाप्मत्वानादिबोधादि-गुणगणमहोदधेर्हरेरनवधिकातिशयज्ञानानन्दप्रभृतिशक्तिमहिमातिशयत्वं हि ब्रह्मत्वम्; संसारिनरस्यानाद्यज्ञानवासनावष्टंभविजृंभितविचित्रकर्मफलभोगानुगुण-बहुशरीरप्रवेशनिर्गमव्यापारपरवशनिःसीमतापसहिष्णुत्वं हि जीवत्वम्; कथमेतयोः स्वरूपस्वभावादिभिरन्योन्यविलक्षणयोरेकत्वं वदन्ति श्रुतय इत्येवं संशयः किं न भवेत्? अथ च इत्थमपि शङ्क्यते-

'आदित्यो ब्रह्म, अन्नं ब्रह्म, मनोब्रह्म, विज्ञानं ब्रह्म' (तै. उ. भृ.) इत्यादयो भिन्नं भिन्नं पदार्थं ब्रह्मेति वदन्ति, तत्र किंवा ब्रह्मेति बहुधा शङ्कितत्त्वात्तन्मीमांसार्हमस्ति; तत्र

श्रवणमननादिनिर्णीतस्य धर्मज्ञानविरतियुतभक्तिलभ्यस्य परमदयानिधेर्गुरुराजेन्द्रस्य शरणागतसकलजनानुग्रहशीलस्य दिव्याप्राकृतविग्रहस्य नारायणाभिधपुरुषोत्तमस्य परब्रह्मणोऽनुग्रहाधिक्येन उक्तस्याधिकारिणो विनष्टनाद्यविद्याजन्यबन्धनसाक्षादनुभूतानवधिकातिशयानन्दरूपा हरिनिवासभूते ब्रह्मपुरेऽक्षरात्मभावं प्राप्तेन तदुपासकवृन्देन प्राप्ता तत्सेवारूपा मुक्तिः प्रयोजनं चास्ति। अतः सविषयं सप्रयोजनं परब्रह्मप्रतिपादकशास्त्रश्रवणं प्रतीयते। ननु तच्च श्रवणमपरिच्छिन्नपरब्रह्मविषयं न संघटते, तज्जन्यज्ञानस्य वेद्यपरिच्छेदकरूपत्वात्; एवं सति ईदृगिदमिति परिच्छेदाभावान्न तत्परब्रह्म विचारगम्यमस्तीति चेन्न; एवं परब्रह्मणः परिच्छेदासंभवेऽपि लक्षणद्वाराऽन्यव्यावृतत्वमात्रेण परिच्छेदसंभवात् विचारगम्यं सर्वत्र लक्ष्यविषयमन्यव्यावृतत्वेन यद्वेदनं तदेव लक्षणेन वेदवस्तुपरिच्छेदकं बोध्यम्। स्वोपबृंहकस्मृत्यादियुतवेदान्तवाक्यैर्निरूपिते परीक्षिते चोद्दिष्टपरब्रह्मसंबंधिनि लक्षणे तल्लक्षणहीनेभ्यस्तदितरेभ्यः सजातीयविजातीयसकलचेतनाचेतनवस्तुभ्यो विलक्षणस्वरूपस्वभावादिमदुक्तं यत्तत्परब्रह्मेत्यवगम्यते। अतः समञ्जसोऽयं परब्रह्मविषयः सच्छास्त्रारम्भः। यदसञ्जातशङ्कमप्रयोजनं च तद्धि न सच्छास्त्रानुशीलनवतां विचारकोटौ समागच्छति। अस्यास्तु परब्रह्मप्रतिपादकशास्त्रमीमांसायाः प्रमाणयुक्त्याभासवशात्संशयस्थानं परब्रह्म विषयो भवति।

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन.१-१),
'तमेव विद्वानमृत इह भवति' (पु.सू. १७),
'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता.३-८ / ६-१५) इति,
'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वेता.१-६) इति,
'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनादेव पाशं दहति पण्डित'
(श्वेता. १-१४) इति,
'ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे.१-८ / ५-१३ / ६-१३) इति,
'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति'
(गीता. ५-२९) इति,
'यो मामेवमसंमूढो जानाति पुरुषोत्तमम्' (गी. १५-१९),
'स सर्वविद्' (बृह.५-७-४) इति,
'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन'
(गीता. ४-९) इति,
'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्'
(गीता. १२-७) इति,

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' (गीता. १४-२६) इत्यादिश्रुतिस्मृत्युक्तानुसारेण प्राप्या परमसुखरूपा आदौ सञ्जातजिज्ञासस्य पश्चाद्धरिज्ञानभक्तिरूपोपासनेन ब्रह्मभावं प्राप्तस्यास्याधिकारिणोऽनाद्यविद्याकृतगुणरूपबन्धन-निवर्तनपूर्विका

'सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित'

(मुण्ड-२-२-७) इति,

'एतत्सत्यं ब्रह्मपुरम्' (छा.८-१-५) इति,

'ददर्श तत्राखिलसात्वत्तां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् ।

सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम्' (भा. २-९-१४) इति,

'कृष्णं च तत्र च्छन्दोभिः स्तूयमानम्' (भा. १०-२८-१७) इत्यादिश्रुतिस्मृत्युक्ते ब्रह्मपुरे स्थितस्यानन्तकोटिमुक्तसेवितचरणकमलस्य परब्रह्मणः सेवारूपा मुक्तिः प्रयोजनं च भवतीत्यस्मिन्नाद्याधिकरणे निरूपितम् । अत्रोद्दिष्टस्य परब्रह्मणो यन्निर्णायकं लक्षणं तत् किमस्ति, इत्यपेक्षायां तल्लक्षणबोधकमधिकरणान्तरं प्रकटयति सूत्रकारकः-

जन्माद्यधिकरणम् ॥१-१-२॥

## जन्माद्यस्य यतः ॥१-१-२॥

विदिते वस्तुनि लक्ष्यलक्षणप्रयोजनाभावात् अविदिते वस्तुनि लक्ष्यलक्षणवेदनापेक्षानुपलब्धेः कथमिह लक्ष्यस्य परब्रह्मणो लक्षणकथनावसर इति न सन्देहनीयम् । उपरिष्टाद्वेदादिशास्त्रपठनाद्विदिते परब्रह्मसंज्ञे परमात्मनि तत्सम्भवात् । जन्मादि अस्य यत इति सूत्रपदविभागः । जन्मादीत्यत्र तद्‌गुणसंविज्ञानो बहुव्रीहिः । अस्य चेतनाचेतनसंमिश्रणसमरसीभूतस्य विचित्राऽन्तभोक्तृभोग्यभोगोपरकरणभोगस्थानादि-रूपविविधरचनायुतस्य जगतः जन्मादि-जन्म आदिर्यस्य तज्जन्मादि-उत्पत्तिरक्षणाप्ययनिग्रहानुग्रहरूपं कर्म, यतः

'अक्षरात्परतः पर' (मुण्ड. २- १ -२) इति,

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' (गी.१५-१८) इत्यादिवाक्योक्ताद् बद्धमुक्तनित्यमुक्तक्षेत्रज्ञेभ्यः स्वरूपस्वभावादिभिरत्युत्कृष्टाद् यस्माद्भवति तद् ब्रह्मेति शेषः ।

'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्‌ब्रह्म' (तै. उ. भृ. अनु. १-१), इति

'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' (श्वेता. ६-१६) इति,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. अनु. १-१) इति,

स्थित्युद्भवप्रलयहेतुरहेतुरस्येति.....तदवैहि परं नरेन्द्र' (भा. ११-३-३५)

इत्यादिवाक्यकलापो विषयः। इह विश्वस्य जन्मादिकृत्यं ब्रह्मणो लक्षणसंपादने संघटते नवेति संशयः। न संघटते तस्य ब्रह्मणा संयोगाभावात्। किञ्च

'आनन्दो ब्रह्मेति व्यजानात्' (तै. उ. भृ. अनु. ६)

इत्यत्रानन्दस्य जगज्जन्मादिलक्षणं पर्यवस्यति। अन्यत्र

'सदेव सौम्येदमग्र आसीत्'(छा.६-२-१) इति सतो जगत्कारणत्वमवगम्यते।

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. अनु. १-१) इति ज्ञानमेवापरिच्छिन्नं जगत्कारणं ब्रह्मेत्येकत्र विज्ञायते। अपरत्र च

'नारायणः परं ब्रह्म आत्मा नारायणः पर' (तै.महा. ११-४) इति,

'तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदे' (भा. १०-८७-२४) ति,

'नारायणपरा वेदा नारायणपरा मखा' (भा.२-५-१५) इति,

'वासुदेवपरा वेदा वासुदेवपरा मखा' (भा.१-२-२८) इति,

'मत्तः परतरं नान्यत्' (गी.७-७) इति,

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' (भा.१-२-११) इति, परमात्मपरब्रह्मवासुदेवादिशब्दवाच्यं नारायणमुनिसंज्ञं वस्तु जगद्धेतुत्वेन सृज्यसमस्तवस्तुपूर्ववर्तिब्रह्मेत्यवबुध्यते। इहानन्दादीनां ब्रह्मत्वे विकल्पो वा समुच्चयो वा? विकल्पे श्रुतहान्यादिदोषप्रसङ्गो व्यवस्था च; व्यवस्थितविकल्पेऽपि ब्रह्मानेकत्वप्रसङ्गः। समुच्चयपक्षे तेषां धर्मरूपत्वान्निखिलजगन्निर्माणोपायज्ञानविशेषविशिष्टब्रह्मत्वासंभवः। अतः सर्वथापि ब्रह्मणा जगद्धेतुत्वादिलक्षणं वक्तुमशक्यमित्येवमादौ पूर्वपक्षरूपकलहे जाते सति वच्मः-यद्यपि जन्मादेर्जगत्सम्बन्धित्वेन ब्रह्मण्यसंयोगस्तथापि तटस्थत्वेन लक्षणत्वं सम्बध्यते। यत्सर्वज्ञत्वादिगुणगणविशिष्टं परमात्मपरमेश्वरपरब्रह्मवासुदेवादिसंज्ञाधारं नारायणतत्त्वं तदेव जगत्कारणं ब्रह्मेत्यभिधियते। आनन्दप्रभृतिधर्माणामिहैव पर्यवसनामस्ति; सर्वज्ञत्वं नित्यतृप्तत्वमनादिबोधत्वं स्वतन्त्रत्वमलुप्तदृष्टिकत्वमनन्तशक्तित्वं चेति षडेतानि सर्वज्ञत्वादीनि वायुपुराणे चोक्तानि।

'सर्वज्ञता तृप्तिरनादिबोधः स्वन्त्रता नित्यमलुप्तदृष्टिः,
अनन्तशक्तिश्च विभोर्विभुज्ञाः षडाहुरङ्गानि महेश्वरस्येति' (वायु. पूर्वार्धे १२-३१)

नित्यपरोक्षानपेक्षितसाधननिर्दोषज्ञानगोचरसकलवस्तुत्वमत्र सर्वज्ञत्वम्

'यः सर्वज्ञः सर्वविद्' (मुण्ड.१-१-१०)

'यस्य ज्ञानमयं तप' (मुण्ड.१-१-१०) इत्यादिभिरिदं ब्रह्मणः सिद्धम्। अनेन सकलबद्धचेतनबहुविधकर्मफलभोगानुकुलदेवमनुष्यपश्वादिशरीरनिर्माणोपायसामग्रीविशेषज्ञं स्वोपासकसकलमुक्तचेतनस्वपरिचर्यानुरूपभागवतीतन्वादिप्रदानचतुरं च ब्रह्म

जगन्निमित्तमस्ति। निरस्तसमस्तोपप्लवकलङ्क निरतिशयानन्दपरिपूर्णत्वमिह नित्यतृप्तत्वम्। अत एव

'आनन्दो ब्रह्म' (तै.उ. ३-६) इति श्रूयते।

'यः खल्वन्योऽन्तर आत्मानन्दमय' (तै.उ.आनं. ५) इति प्रस्तुत्य

'सैषानन्दस्य मीमांसा भवति' (तै.उ.आनं.८-१) इत्यारभ्याऽभ्यासान्निरतिशयशिरस्कत्वेन

'स एको ब्रह्मण आनन्दः' (तै.उ.आनं.८) इति निरूपितः।

परब्रह्मधर्मत्वेन च स एवानन्दो ब्रह्मेत्युक्तः, अतो ब्रह्मत्वेनोपचर्यते। तादृग्निजानन्दभोगरसिकं ब्रह्मनित्यतृप्तत्वमित्यभिधीयते। आनन्दमयस्य परब्रह्मणः स्वत एव निजैकानन्दानुभवो न तु साधनान्तरतस्तदनुभवः। तथाहि सूत्रश्रुतिस्मृतिकाराः

'आनन्दमयोऽभ्यासात्' (ब्र.सू.१-१-१२) इति,

'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः, स वा एष पुरुषविध एव'

(तै.उ.आन.अनु. ५)

इति विज्ञानमयात् क्षेत्रज्ञवृन्दादन्यो वस्त्वन्तरमित्यर्थः। पुरुषस्य द्विभुजनरस्य विद्या ज्ञानेन्द्रियकर्मेन्द्रियरूपप्रकारा इव विद्या-अवयवप्रकारा यस्य स पुरुषविध इत्यर्थनिरुक्तिः। 'निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः, आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मेति,

'केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृग्' (भा.१०-३-१३) इति,

'यः स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्य' (भा.११-६-८) इति।

एवं निरपेक्षसाधनं पुरुषविग्रहं परब्रह्मानवधिकातिशयं स्वरूपानन्दमनुभवत्, अतो नित्यतृप्तम्। न तस्य कदापि बाह्यसांसारिकसुखलवापेक्षा भवतीत्यर्थः। ननु

'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः,

'स वेत्ति वेद्यं नहि तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्' (श्वेता. ३-१९) इति,

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वेता.६-१९)

इत्यादिवाक्यैः परब्रह्म निराकारमेवेत्युक्तम्; इह तु तस्य

'स वा एष पुरुषविध' (तै.उ.आन.अनु. ५)

इत्यादिवाक्यैः साकारत्वं कथमुच्यते, इति चेच्छृणु, यतः पाणिपादकर्णरहिततयापि साकारस्य सर्पस्य ग्रहणादयो हस्तादिव्यापारा मुखोरोनेत्रैः सन्ति, तथा चक्षूरहिततयापि तथाविधायां लज्जालुवल्ल्या दर्शनरूपचक्षुर्व्यापारो भवति। अतः परब्रह्मणोऽपाणिपादादिविशेषणवृन्दं साकारत्वप्रतिपादनपरमेव बोध्यम्, नहि निराकारत्वप्रतिपादनपरम्; तथात्वे सति ब्रह्म सर्पाकारं वा वल्ल्याकारं वा? कथंभूतं ब्रह्मेति विकल्परूपकलहे प्राप्ते ब्रूमः -श्रुत्युत्तरार्द्धेन स वेत्तीति; सः परब्रह्मसंज्ञो हरिः स्वेतरजीवेश्वरप्रकृतिपुरुषकालाक्षरब्रह्मतत्स्थमुक्तकोटिवस्तुमात्ररूपं वेद्यं

स्वं चापि वेत्ति; तस्य परब्रह्मणः वेत्ता स्वोक्तज्ञानप्राप्तं नरं विना स्वेतरो ज्ञाता नास्ति; पुनस्तमेव विशिनष्टि-अग्र्यमादिभूतं पुराणमनादिसिद्धं पुरुषं दिव्याप्राकृतानाद्यवयवयुतपुरुषाकारं तं परब्रह्मसंज्ञं हरिमाहुर्मुनयः। एवमनया श्रुत्योदितस्य पुरुषाकारब्रह्मणोऽपाणिपादादिविशेषणवृन्दं त्वप्राकृतकरपादाद्यङ्गयुतदिव्यविग्रहबोधनपरम्, नहि सर्पवल्ल्याकारत्वबोधनपरमिति श्रुतितात्पर्यार्थः। निष्कलमिति श्रुतिस्तु तस्य ब्रह्मणो निष्कलादिविशेषणैर्विभागशून्यत्वं प्राकृतव्यापारविधूरतयाऽप्राकृतव्यापारवत्त्वं च निर्दोषत्वं च मायातीतत्वं च बोधयति; इत्थंभूते परब्रह्मणि नित्यतृप्तिरस्ति। स्वतः सिद्धनिरतिशयज्ञानवत्वमनादिबोधत्वम्। यद्ब्रह्मणः स्वरूपानन्दानुभवसाधनमन्तःकरणज्ञानं तत्तस्यानादिसिद्धमेव; अतोऽनादिबोधं ब्रह्म। (तस्य ब्रह्मणः) संसारनिवर्तकस्य ज्ञानस्यानादिसिद्धत्वात् नित्यनिवृत्तसंसारदोषं ब्रह्म शान्तिसमृद्धममृतमिति श्रूयते। अन्यप्रेष्यताकार्पण्यरहितत्वेन स्ववशीकृतस्वेतरसकलवस्तुत्वं स्वातन्त्र्यम्।

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता.१-९),

'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वेता.१-१२),

'विद्याविद्ये ईशते यस्तु सोऽन्य' (श्वेता. ५-१)

इत्यादिषु ब्रह्मणश्चेतनाचेतनप्रपञ्चप्रेरकत्वेन स्वतन्त्रत्वं सिद्धम्; सर्वत्र परब्रह्मणः स्वतन्त्रत्वेन निखिलकर्तृत्वसिद्धिः। सर्वत्र स्वभावसिद्धं त्रैकालिकज्ञानात्मकदृष्टिमत्त्वं हि नित्यमलुप्तदृष्टित्वम्। तथाहि श्रूयते

'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इति,

'स वेत्ति वेद्यम्' (श्वेता. ३-१९) इत्यादिवचनैः सर्वावस्थावस्थितसकलचेतनाचेतनवस्तुषु संकुचितविकसितान्तर्यामिशक्त्या व्यापकत्वात् तेषां यथार्हकर्मफलप्रदाने परब्रह्मणः सदादृष्टिप्रसारवत्वमस्ति; अतोऽनेन नित्यालुप्तदृष्टित्वं सिद्धम्। अपरिमेयसामर्थ्ययुक्तत्वम्, यद्वा असङ्ख्यशक्तिविशिष्टत्वमनन्तशक्तित्वम्। असङ्ख्याभिः प्रधानपुरुषब्रह्मशिवादिरूपाभिर्विभूतिभूतशक्तिभिर्जगत उत्पत्तिस्थितिसंहारकारकमपरिमेयसामर्थ्ययुतं परब्रह्म भवति। तथाहि श्रूयते

'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वेता. ६-८) इति,

अपरिमेयभग (भा. १०-८७-३८) इति,

अखिलशक्त्यवबोधक इति; स्मर्यते च-

'सर्गे तपोऽहमृषयो नव ये प्रजेशाः।
स्थाने च धर्ममखमन्वमरावनीशाः॥
अन्ते त्वधर्महरमन्युवशासुराद्या।
मायाविभूतय इमाः पुरुशक्तिभाजः' ॥ (भा. २-७-३९) इति;

सू.भा. ॥७॥ धर्म

अ.२पा.२

मियसामर्थ्ययुक्तत्वं। यथा। अपरंस्वशक्तिविशिष्टत्वमनंतशक्तित्वं। असंख्याभिः प्रधानपुरुषब्रह्मादिवादिरूपा
भिर्विभूतिभूतशक्तिभिर्जगतउत्पत्तिस्थितिसंहारकारकमपरिमेयसामर्थ्ययुतंपरब्रह्मभवति। तथाहिश्रूयते। प
रास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेति अपरिमेयभगइति। अखिलशक्त्यवबोधकइति।
स्मर्यतेच। सर्गस्थित्योर्हिमूषयोनवयेश्वराः। स्थानेचमरवमन्वमरावनीशाः। अंतेत्वधर्महरमन्युवशाःकराद्या
मायाविभूतयइमाःपुरुशक्तिभाजइति। तांकामशक्तिमादायवासुदेवोऽक्षरात्मनासिसृक्षयैक्षतयदासाचुक्षो
भतदेवहि। तस्याःप्रधानपुरुषकोटयोजज्ञिरेमुने। युक्तंतेसप्रधानैस्तपुरुषाश्चेल्लयाप्रभो। पुमांसोनिर्धुणैं
भौस्तेषुतेऽप्यभूत्तदिरे। इतिएवमनंतशक्तिमत्वात्परब्रह्मणोऽसंख्यकोटिब्रह्मांडरूपप्रपंचसमवायिकारणत्वं
सिध्यति। महापुरुषपरब्रह्मसर्वेशहृविशुद्धिकसर्वात्मवासुदेवपरमात्मपुरुषोत्तममाधवादिमुख्यनामस
हस्राधिकरणंनारायणमुनिसंज्ञंब्रह्मवाच्यं। अस्यजन्मस्थानगुणस्वभावचरित्रादिकृतासंख्यनामवाच्यत्वेपि
मुख्यतयापरभावमनुष्यभावयोरेकबोधकत्वात्महापुरुषादिनामवाच्यत्वेननेतरत्वबोधकनामाभिधेयत्व
भावप्रसंगः। पुरतिसर्वेभ्यःअग्रेहिआत्मप्रकृतावयविपुरुषाकारेणगच्छतीतिपुरुषःमहांश्चासौपुरुषश्चमहा ॥७॥

'तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना ।
सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि' ॥
तस्याः प्रधानपुरुषकोट्यो जज्ञिरे मुने ।
युज्यन्ते स्म प्रधानैस्ते पुरुषाश्चेच्छया प्रभोः ॥
पुमांसो निदधुर्गर्भास्तेषु तेभ्यश्च जज्ञिरे' ॥ (वा. मा. २४ – ५,६,७)

इत्येवमनन्तशक्तिमत्वात्परब्रह्मणोऽसंख्यकोटिब्रह्माण्डरूपप्रपञ्चोपादानकारणत्वं सिध्यति । महापुरुषपरब्रह्मसर्वस्त्रष्टृविष्णुहरिकृष्णसर्वात्मवासुदेवपरमात्मपुरुषोत्तममाधवादिमुख्य-नामसहस्त्राधिकरणं नारायणमुनिसञ्ज्ञं ब्रह्म वाच्यम् ।

अस्य जन्मस्थानगुणस्वभावचरित्रादिकृताऽसंख्यनामवाच्यत्वेऽपि मुख्यतया परभावमनुष्यभावयोरैक्यबोधकत्वात् महापुरुषादिनामवाच्यत्वेन नेतरतद्बोधक-नामाभिधेयत्वाभावप्रसंगः। पुरति सर्वेभ्यः अग्रे दिव्याप्राकृतावयविपुरुषाकारेण गच्छतीति पुरुषः। महांश्चासौ पुरुषश्च महापुरुषः । महत्त्वेन पूर्वसिद्धं महापुरुषशब्दवाच्यं ब्रह्म; पुरुधातोरग्रगमनार्थत्वात् सर्वेभ्यः अग्रे वर्तमानं श्रेष्ठत्वविशिष्टं पुरुषाकारं ब्रह्मेति विज्ञायते । तथाहि श्रुतयः-

'पूर्वमेवाहमिहासं तत्पुरुषस्य पुरुषत्वम्' (तैति. आर. प्रपा. १ अनु. २३) इति,
'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्'(छान्दो. ६-२-१) इति,
'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१) इति,
'वेदाहमेतं पुरुषं महान्तम्' (तै.आर.पु.३-१३-२/३-१२-१६ / श्वेता. ३-८) इति ।

तथात्वे सति सर्वेभ्यः पूर्वसिद्धत्वेन महापुरुषस्य ब्रह्मणः सर्वश्रेष्ठाप्राकृतपुरुषाकारत्वं सिध्यति। एवं ब्रह्म महापुरुषशब्दवाच्यं भवति । ब्रह्मशब्दवाच्यं ब्रह्मपुराभिधं महापुरुषस्थानं तत्स्थाऽसंख्यमुक्तकोटिवृंदं चैतदुभयस्मात् परमन्यत्न् 'बृहि वृद्धावि'ति धात्वर्थवशात् बृहत्वादिसकलगुणगणविशिष्टं ब्रह्म परब्रह्मशब्देन प्रतिपाद्यते ।

'अक्षरात् परतः पर' (मुण्ड. २-१-२)

इत्यक्षरशब्दवाच्याद् ब्रह्मणोऽन्यत् परब्रह्मशब्दवाच्यं ब्रह्म श्रूयते । दिव्याप्राकृतविग्रहेण स्वब्रह्मपुरस्थानस्थं सत परब्रह्म विश्वोत्पत्तिस्थित्यवस्थयोर्विकसितान्तर्यामिशक्त्या विश्वप्रवेशनशीलत्वाद्विभक्तनामरूपतत्परिरक्षितस्थूलचेतनाचेतनवस्तुशरीरकमुपादानकारणं सर्वस्त्रष्टृविष्णुशब्दवाच्यं भवति । तथाहि श्रूयते ।

'स ईर्मांल्लोकानसृजदि' ति, 'तत्सृष्ट्वा तदनुप्राविशत्' (ऐ. १-२) इति,
'बहु स्याम्' (तै. आन. अनु. ६-२) इति,

स्वधामस्थं यत्तत् हरिशब्देन हृञ् हरणे इति धात्वर्थवशात्प्रलयावस्थायां संकुचितान्तर्यामिशक्त्या चेतनाचेतनस्थूलनामरूपविभागसंहरणशीलत्वात्सूक्ष्मतां प्रापितनामरूप-

विभागानर्हचेतनवस्तुशरीरकं सकलसंहर्तृ ब्रह्म प्रतिपाद्यते। तस्मादुपसंहर्त्रे

'महाग्रासाय वै नमः' (अ. शिर. ३),

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन' (कठ. १-२-२५) इति सर्वसंहर्तृ ब्रह्म श्रूयते। निरूपाधिकपरमानन्दभूमित्वात् कृष्णशब्दवाच्यं ब्रह्म भवति। तथाहि श्रूयते।

'कृषिर्भूवाचकः शब्दो नश्च निर्वृत्तिवाचकः।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते'॥ (गो.पू.ता.उ. १)

इति शरणागतसकलजनानेकविधपीडाहारकत्वेन तेषामनवधिकातिशयानन्दोत्पादकभूमित्वात् हरिकृष्णेत्येकशब्दवाच्यं ब्रह्म विज्ञायते।

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः'॥ (गी.११-६६)

इति स्मरणात् 'कृषिर्भूवाचकः शब्द' इति,

'तमात्मस्थं येऽनुपशन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषामि'(कठ. २-२-१३) त्यादिश्रवणाच्च सर्वेषां चेतनाचेतनानामन्तरात्मतया नियामकत्वात् सर्वात्मशब्दवाच्यं ब्रह्म विज्ञायते।

'यः पृथिव्यां तिष्ठन्नि'ति, 'यः प्रकृतौ तिष्ठन्नि'ति, 'यः आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद, यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत' (बृ. ५ - ७ - ७/२६) इति,

'योऽक्षरे तिष्ठन्नक्षरमन्तरो यमक्षरो न वेद यस्याक्षरः शरीरं योऽक्षरमन्तरो यमयति' (सुबा.उ.७) इत्यादिकासु श्रुतिषु प्रतिपर्यायं पृथिव्यादिसकलचेतनाचेतन-वस्तुनामात्मान्तर्यामिशब्देनोच्चार्यमाणत्वादमृतशब्दाभिधेयं तद्ब्रह्म प्रतिपादितमिति। वासुदेवशब्दवाच्यं-ब्रह्म, वसधातोर्निवासार्थत्वात् दिवुधातोः क्रीडाद्यर्थत्वाच्च सर्वावस्थावस्थितसकलचेतनाचेतनेष्वन्तर्यामितया यथार्हकर्मफलप्रदानाय निवसत् सत् दिव्यविग्रहेण ब्रह्मपुरे स्वयं द्योतमानं तत्रावस्थिताऽसंख्यस्वभक्तमुक्तकोटिभिः साकं क्रीडत् मोदमानं च वर्तते; वसुदेवपुत्रत्वाद्वा वासुदेवशब्दाभिधेयं ब्रह्म विज्ञायते। तथाहि श्रूयते

'ईशावास्यमिदं सर्वम्' (ईशा. १) इति,

'दिव्ये ब्रह्म पुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित' (मुण्ड. २-२-७) इति,

'स्वभक्तेभ्यो रमते स मे सर्वस्वम्' इति। स्मर्यते च-

'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः।
ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते' (वि.पु. १-२-१२)। इति
स वासुदेवः प्रकृतौ पुंसि कार्येषु चैतयोः।
अन्वितश्च पृथक् चास्ते सर्वाधीशः स्वधामनि ॥(वा.मा.२४ -६५)

व्याप्य स्वांशैरिमांल्लोकान् यथाग्निवरुणादयः ।
स्वस्त्यासते स्वस्वलोके तथैष भगवान्मुने' ॥ (वा. मा. २४ - ६६)

इति तदैव ब्रह्म सर्वभजननीयत्वेन विज्ञायते ।

'न वासुदेवात्परमस्ति पावनं न वासुदेवात्परमस्ति मङ्गलम् ।
न वासुदेवात्परमस्ति दैवतं न वासुदेवात्परमस्ति वाञ्छितम् ॥
यन्नामधेयं सकृदप्यबुद्ध्या देहावसानेऽपि गृह्णाति योऽत्र ।
सपुष्कसोऽप्याशु भवप्रवाहाद्विमुच्यते तं भज वासुदेवम्' ॥
(वा.मा.२५-६९,७०)

इत्यादिस्मरणात् आत्मशब्दवाच्येभ्यो जीवेश्वराक्षराख्यब्रह्मभ्यः श्रेष्ठत्वेन वर्तमानं परमात्मशब्दवाच्यं ब्रह्म विज्ञायते । तथाहि स्मर्यते-

'परमात्मा च सर्वेषामाधारः पुरुषोत्तमः ।
स विष्णुनामा वेदेषु वेदान्तेषु च गीयते' ॥ (वि.पु. ६-४-४०) इति
'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' । (गी.१५-१७) इति,
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' (भा.१-२-११)इति

पुरुषोत्तमशब्देन क्षराक्षरशब्दवाच्याभ्यां बद्धमुक्तपुरुषसमूहाभ्यां स्वरूपस्वभावगुणविभूतित उत्कृष्टतमं दिव्याऽप्राकृतविग्रहं ब्रह्माऽभिधीयते । तथाहि स्मर्यते-

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' ॥ (गी.१५-१८) इति

'प्रकृतिपुरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य'(भा. ११-६-१४) इति लक्ष्मीपतित्वान्मधुकुलोत्पन्नत्वाद्वा मधुदैत्यघातकत्वाद्वा सर्वस्वामित्वेन तस्य धवाभावाद्वा माधवशब्दाभिधेयं ब्रह्म विज्ञायते । एवं परभावमनुष्यभावद्योतकैः सहस्रनामभिस्तदितरैरसंख्यनामभिश्चापि स्वाभाविकानन्दजनकमस्पृष्टाशेषदोषतया कल्याणैकतानतया च सकलमङ्गलाधारतया च नारायणतत्त्वं यदवगम्यते तत्सततान्तर्यामिशक्त्या सर्वावस्थावस्थितसकलचेतनाचेतनवस्तुशरीरकत्वात् दिव्यविग्रहेण ब्रह्मपुरे ततः पृथक् स्थितत्वाच्च जगत उपादानकारणं निमित्तकारणं च भवति । एवमुक्तस्वभाववत्येतादृशमहिम्नि तस्मिन्सकलजगज्जन्मादिकारणत्वं भवति । एतादृशमहत्त्वात्तद्ब्रह्मेत्यभिधीयते; तदेव नारायणशब्दवाच्यमानन्दादिधर्माश्रयतया सिद्धम्; अत आनन्दादीनां विकल्पादिचिन्ता निरर्थका । अत्र सूत्रे दिव्यविग्रहं ब्रह्मपुरे निमित्तकारणतया सदा वर्तमानं सत् स्वेच्छया प्रलये स्वप्रकाशरूपया संकुचितोन्तर्यामिशक्त्या सूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्म उपादानकारणं सृष्टिस्थित्यवस्थयोः स्वप्रकाशरूपया विकसितान्ततर्यामिशक्त्या स्थूलचिदचिद्वस्तुविशिष्टं तत् कार्यं भवति । अतो जगज्जन्मादिलक्षणं

ब्रह्मेति सिद्धान्तोऽस्ति । ननु दिव्यमनोहरमूर्तेर्हरेरन्तर्यामिशक्त्या सह सर्वावस्थावस्थितचेतनाचेतनानां शरीरशरीरिभावेन विशिष्टत्वमुक्तं दिव्यावयविपरब्रह्मणा सह कुतो नोक्तमिति चेत्तत्रोच्यते - दिव्यावयविहरिसंबंधेन तु बद्धचेतनानां शास्त्रेषु मायाकर्मनिवर्तनरूपमोक्षोक्तेस्तेषां तदन्तर्यामिशक्तिसम्बन्धेन मोक्षाभावोक्तेश्च तया सह संयोग उक्तः, अन्यथा

'तदरयोपि ययुः स्मरणात् स्त्रिय उरगेन्द्रभोगभुजदंडविषक्तधियः' (भा. १०-८७-२३) इति,

'तमेव परमात्मनं जारबुद्ध्यापि संगताः, जहुर्गुणमयं देहम्' (भा. १०-१९-११), इति,

'सता सौम्य तदा संपन्नो भवति सुषुप्त्युक्रान्त्योर्भेदेन' (छा.६-८-१) इत्यादिशास्त्रविरोधापत्तेः। लक्षणप्रमाणाधीना हि वस्तुसिद्धिः, जगत्कारणं ब्रह्म किं प्रमाणकमित्यत आह -

शास्त्रयोनित्वाधिकरणम् ॥१-१-३॥

## शास्त्रयोनित्वात् ॥१-१-३॥

यतः यस्य शास्त्रं योनिः प्रमाणं लक्षकमिति यावत्, अत एव शास्त्रगम्यजगज्जन्मादिलक्षणं ब्रह्म भवतीति शेषः। अत्र जगत्कारणं ब्रह्म शास्त्रैकगम्यं उत प्रमाणान्तरेणापि गम्यमिति सन्देहः। जगदिदं सावयवं कार्यमेव । तच्च वैचित्र्यगर्भितत्वेन स्वोचितकर्तृकमस्तीति कश्चित् सर्वज्ञत्वादिमान् कर्ता कल्पनीयः । नासौ शास्त्रैकगम्य इति नास्मिन्कर्तरि वेदादिशास्त्रस्य प्रामाण्यम् । शास्त्रप्रमाणैरप्यप्राप्तविषयत्वादिति पूर्वः पक्षः । सिद्धान्तस्तु जगत्कारणं ब्रह्म वेदान्तशास्त्रैकगम्यम्;

'नावेदविन्मनुते तं बृंहतम्' (शाट्यायनीयोपनिषत् - ४) इत्यादिषु वेदान्तशास्त्रमन्तरेण ब्रह्मणो बोधासंभवसंश्रवणात् । पूर्वपक्षे यदुक्तं सावयवत्वात् कार्यत्वसिद्धौ प्रपञ्चस्य कर्ता समुचितः कल्प्य एक इति तदसत् । विचित्ररचनस्य गोपुरप्रासादादेर्बहुकर्तृत्वदर्शनात् । तथा च नानुमानेन एककर्तृत्वसिद्धिः; बहुकर्तृसाध्यस्य रथगोपुरादेरपि मुख्यस्त्वेक एव कर्तास्तीति युक्तिबलेन तत्सिद्धौ सत्यामपि तस्य पुरुषान्तरव्यापारवश्यादिप्रसंगश्च । किञ्च अनुमानेन जगतो विलक्षणैककर्तृत्वसिद्धावपि निमित्तोपादानशक्तियुक्तैककर्तृकत्वसिद्धिर्नास्ति; ततो वेदान्तशास्त्रैकगम्यं तत्प्रमाणं ब्रह्मेति सिद्धम् । अनेन सूत्रेण पूर्वाधिकरणप्रतिपादितजगत्कारणत्वोपयोगिसर्वज्ञत्वं ब्रह्मणः । शास्त्राणां योनित्वाद्वेदानां कारणत्वात्सिध्यतीत्यप्यत्रार्थान्तरं प्रतिपाद्यत इति केचिदाहुः । सूत्रस्य सूचनात्मकस्यार्थद्वयाभिधाने श्लेषकाव्यवद्वाक्यभेदादिदोषाभावादेकस्मिन्नपि सूत्रे पुनरधिकरणान्तरप्रस्तावः । अत्र

'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदः' (बृ. ६-५-११) इत्यादिः श्रूयते विषयः । ब्रह्मणो वेदकर्तृत्वं युक्तं न वेति सन्देहः । न युक्तमिति पूर्वः पक्षः ।

'वाचा विरूपनित्यया' इत्यादिकाया वाङ्नित्यत्वप्रतिप्रादनपरायाः श्रुतेर्विरोधात् वेदानां पुरुषाकृतिब्रह्मकार्यत्वे सति पुरुषाकृतेः कालविक्षिप्तप्रकृतिजन्यत्वात् पौरुषेयत्वेनाप्रामाण्यप्रसंगाच्च। तस्माद्ब्रह्मणो वेदकर्तृता कथमिति प्राप्ते ब्रूमः-युक्तमेव ब्रह्मणो वेदकर्तृत्वम्।

'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेद'(बृ. ६-५-११) इत्यादिश्रुतेः निःश्वसितवद्वेदराशेरप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात्। तथाऽन्यत्र पुराणेषु सर्वासां विद्यानां पृथक्पृथग्मार्गाणां मुख्यकर्ता कविराजः साक्षान्नारायणमुनिः प्रतिपादितः।

एवं तस्य सकलविद्यादिकर्तृत्वप्रतिपादनाच्च सृष्टेः प्राक् स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुक्रमानुरूपरचनया पुनः कर्ता भवति स्वतः सिद्धानादिसर्वज्ञत्वाद्यसंख्यगुणगणवानप्राकृतपुरुषाकृतिर्नारायणः। अत एव वेदानामपौरुषेयत्वं नारायणकार्यत्वं चास्ति। येषामज्ञभावजनका रागद्वेषादयस्तेषां वचनमप्रमाणम्; निरस्तसमस्तदोषकलङ्कस्य निरुपप्लवनिरतिशयज्ञानप्रत्यक्षानुभूयमानत्रैकालिकवस्तुमात्रस्य स्वतः प्रमाणस्य परमेश्वरस्य परमाप्तस्यावाप्तसमस्तकामस्य नारायणस्य परब्रह्मणो वचनं तु प्रमाणमेव भवति। अतः सर्ववस्त्ववभासकानां वेदानां नारायणकर्तृकतयानारायणस्य सर्वज्ञता निश्चीयते; तां विना त्वज्ञातं वस्तु वक्तुमशक्यत्वात्। यद्यपि सर्वगतस्य नारायणस्य सर्ववस्तुसंयोगेन सर्वज्ञत्वं सिध्यति, तथापि सकलवस्त्ववभासकानां वेदानां या तस्य प्रणेतृता सैवाधिक्यं दर्शयति। यथा दीपः स्वप्रभासंयुक्तेष्वपि रूपादिषु रूपमेव प्रकाशयति न रसादि, एवमन्ये वेदप्रणेतारोऽपि; तथा न नारायणः, किन्तु स्वप्रकाशरूपान्तर्यामिशक्तिसंयुक्तं सकलमपि प्रकाशयतीति। ननु नारायणस्य सर्वज्ञत्वं नाम वेदोक्तसकलपदार्थाभिज्ञत्वम्; तर्हि ब्रह्मादीनामपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धं किमत्र वैषम्यमिति चेन्न; परतंत्रेभ्यस्तेभ्यस्तत्कर्त्तुर्नारायणस्याधिकं ज्ञानबलस्वातंत्र्यादिकमस्ति। वेदादेः सम्यगर्थविदां हि विधिप्रभृतीनां तत्प्रणेतृत्वमात्रं दृश्यते नत्वधिकम्। ननु सर्वावभासकतया वेदनारायणयोः साम्यमिति चेन्न; वेदः सर्वार्थावभासकोपि न सर्वं मुख्यतः प्रकाशयति। किन्तु किमपि लक्षणया, किमपि सामान्येन, किमपि विशेषेण; नारायणस्तु सर्वसाक्षी सर्वं प्रत्यक्षयतीति निगमनारायणयोरप्येतावद्वैषम्यमिष्यते।
ननु नारायणस्यैव वेदकर्तृत्वमिति न नियमः।

'षड्होता वै भूत्वा प्रजापतिरिदं सर्वमसृजत (तै.ब्रा. ३-६)
ऋचो यजूंषि सामानि' (बृ. ३-२-५, तै.ब्रा.१२-४६, प्र.उ.२-६)

इत्यादिश्रवणाद्धिरण्यगर्भादेरपि तत्कर्त्तृत्वावगम इति चेन्न; हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावात्। श्रूयते हि

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' (श्वेता. ६-१८) इति।

स्मर्यते च-

'जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः' (भा. १-१-१) इति,
'मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्तः' (भा. ३-५-४०) इति,
'वेदान्तकृद्वेदविदेव चाहम्' (गीता. १५-१५) इति,

यः सर्वदेवानामादिमस्य हिरण्यगर्भस्यापि कर्ता तस्मै सर्वान्वेदानुपदिशति स एव सर्वाधिको वेदकर्ता परमगुरुर्नारायणः। इत्थं सकलवेदकर्तृत्वं मुखाद्यवयववतो नारायणस्यैव सिद्धम्। वाचो नित्यत्वश्रुतिर्नारायणेन वेदानां पूर्वसद्भावानुवृत्त्या कृतत्वादविरुद्धा। अतो वेदानां हरिप्रणीतत्त्वं नित्यत्वं चाविरुद्धमेव। प्रथमाधिकरणे जिज्ञास्यतया प्रतिपादितस्य परब्रह्मणो नारायणस्य परिज्ञाने लक्षणापेक्षायां द्वितीयाधिकरणे लक्षणं जगज्जन्मादिनाऽभिहितम्; किं प्रमाणमित्याकांक्षायां तृतीयाधिकरणेन वेदान्तशास्त्रस्य तद्विषये प्रामाण्यं तन्मूलत्वं च निरूपितम्। येन यद्वस्तु अव्यभिचारेण सिद्ध्यति तद्धि तस्य प्रमाणमुच्यते। वेदान्तवाक्यानां कथं वा ब्रह्मसाधकत्वमित्याकांक्षायां चतुर्थाधिकरणं प्रादुर्भावयति-

समन्वयाधिकरणम् ॥१-१-४॥

## तत्तु समन्वयात् ॥१-१-४॥

तत्छब्देन प्रासंगिकं ब्रह्मानुकृष्यते। तुशब्देन समस्तानि स्वोपबृंहकस्मृत्यादिसहितोपनिषत्पर्यायकवेदान्तवचनानि समुच्चीयन्ते; समन्वयशब्दवाच्यस्तात्पर्येण संबन्धोऽभिधीयते। स्वोपबृंहकस्मृत्यादिसहितवेदान्तवाक्यानि यथार्थप्रामाण्यसंबन्धात् तद् ब्रह्म लक्षयन्तीति सूत्रार्थः। स्वोपबृंहकस्मृत्यादिवाक्यसहितानि ब्रह्मसंबन्धबोधकानि समस्तवेदान्तवचनान्यस्य विषयः। तेषां वाक्यानां ब्रह्मबोधकत्वं युक्तं नवेति संशयः। न युक्तमिति पूर्वः पक्षः।

तथाहि सर्वत्र संबन्धग्रहणसापेक्षं शब्दस्यार्थावबोधकत्वम्; शब्दार्थयोः संबन्धज्ञानमन्तरेण हि पुरुषस्य शब्दार्थप्रत्ययो न भवति; संबन्धज्ञानं च वृद्धव्यवहारसापेक्षम्; व्यवहारश्च कार्यैकगोचरः। तथाहि गामानय, गां बधानेति बहुवाक्यश्रवणानन्तरं गवानयनादौ कर्मणि प्रवर्तमानं प्रयोज्यं पुरुषमवगम्य पार्श्वस्थस्तज्जिज्ञासुर्जन एवमवधारयति; तदेवावधारणं दर्शयति, सर्वथायं प्रयोज्य जनः कार्यज्ञानानन्तरमेव गवानयनादौ कर्मणि प्रवर्तते; सा च वृद्धव्यवहाराज्ज्ञाता कार्यावगतिरेतस्मादेव प्रयोजकवाक्यात् समुत्पन्ना; अन्यथा कथमस्य प्रयोज्यजनस्यैव प्रयोजकवाक्यमात्रश्रवणसमनन्तरं तस्मिन्कर्मणि प्रवृत्तिरिति ज्ञात्वा प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यकृतगवानयनबन्धनदर्शनात् कार्यविशेषं निश्चिनोति पार्श्वस्थः। एवं कृतकार्यार्थज्ञानादेव तत्र व्युत्पत्तिसंभवान्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यम्। किञ्च कार्यविशेषस्य जगतः कर्तृविशेषस्य ब्रह्मणश्चानुमानादप्यन्योन्यसिद्धिस्तथा सति कथमस्मिन्

प्राप्तविषयाणामपि वेदान्तवाक्यानां प्रामाण्यम्। अथवा ब्रह्मज्ञानविधिपराण्येव वेदान्तवाक्यानि न ब्रह्मस्वरूपप्रतिपादनपराणि; उभयपरत्वे वाक्यभेदः स्यादतो वेदान्तवाक्यानां न ब्रह्मसाधकत्वमिति महाकलहे प्राप्ते तेषां ब्रह्मबोधकत्वं युक्तमिति सिद्धान्तः। वेदान्तवाक्यानां तात्पर्यलिङ्गसमन्वयेन ब्रह्मबोधसाधनसमर्थत्वात्। यदुक्तं कृतकार्यार्थज्ञाने सत्येव व्युत्पत्तिसंभवान्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यमिति तदसत्; पुत्रस्ते जात इति वाक्यस्य सिद्धेऽपि वस्तुनि प्रामाण्यदर्शनात्। वृद्धव्यवहारेऽपि व्युत्पत्तिं लब्धुमिच्छुः स्वप्रवृत्तिहेतुभूतायाः कार्यावगतेः सिद्धपदार्थज्ञानपूर्वत्वावगमात् प्रयोज्यवृद्धस्य प्रयोजकवाक्यं पदार्थज्ञानमुत्पादयतीति निश्चिनोति। ततः सिद्धार्थेष्वपि शब्देनाभिधाननिश्चय:। अथवा किमिह वृद्धव्यवहारेण। व्युत्पत्तेः प्रकारान्तरेणापि सिद्धत्वात्। तथाहि बाला मात्रादिभिः शिशुपशुप्रभृतीनर्थानङ्गुलियादिना निर्दिश्य तत्तच्छब्दांस्तेषु तेष्वर्थेषु प्रयुञ्जानैर्बहुशः शिक्षितास्तेषु तेष्वर्थेषु व्युत्पद्यन्ते। काव्यनाटकानभिज्ञाः पुरुषास्तदभिज्ञपुरुषसमीपमेत्य पदविच्छेदं कृत्वाऽस्य शब्दस्यायमर्थ इति सर्वशब्दानामर्थमवगच्छन्ति। अतः सिद्धार्थेऽपि व्युत्पत्तिसंभवात्तत्र शब्दस्य प्रामाण्यमस्ति; ततो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम्। पूर्वपक्षे यदुक्तं जगतः कार्यविशेषस्य कर्तृविशेषस्य ब्रह्मणश्चानुमानादप्यन्योन्यसिद्धिरिति तन्न संभवति। विचित्ररचनस्य रथगोपुरप्रासादादेरनेककर्तृकत्वदर्शनात्। अनुमानेनाप्येककर्त्तृकत्वसाधनायोगस्यास्य जगतो हेत्वन्तरबलादेकस्मिन्नपि कर्तरि सिद्धे तस्य पुरुषान्तरव्यापारवश्यत्वादिप्राप्तेः पूर्वमुक्तत्वात्। अतो नानुमानगम्यं ब्रह्म। किञ्च श्रुत्यानुगुण्यादनुमानमपि ब्रह्मणि प्रमाणं भवतु नाम; यत्र येषां वाक्यानां तात्पर्यं तत्र हि तेषां प्रामाण्यम्, न स्वतात्पर्यं विना सर्वत्र सर्वेषां वेदान्तवाक्यानां प्रामाण्यमस्ति। ब्रह्मणि तात्पर्यनिर्णायकानि कानि लिङ्गानीति चेत् उपक्रमादीनि लिङ्गानि। वृद्धास्तथा पठन्ति-

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्, अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय' इति; तदिहोपक्रमादिभिर्लिङ्गैर्वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निश्चीयते।

य उपक्रमादिभिस्तात्पर्यनिर्णयस्तदेव स्वोपबृंहकस्मृत्यादिसहितानां वेदान्तवचनानां श्रवणमिति निगद्यते; तथाभियुक्तवचनम्-

'अज्ञानप्रभवं दुःखं ज्ञानं तस्य विनाशकम्।<br>
सर्ववेदान्तवाक्यानां श्रवणं ज्ञानदं भवेत्॥<br>
श्रवणं नाम वचसां वैदिकानां हरौ परे।<br>
प्रारम्भप्रभृतिचिन्हैः कृष्णे तात्पर्यनिर्णयः'॥

इति उपक्रमोपसंहारौ वेदान्तवाक्यानां तात्पर्यनिर्णये ब्रह्मनामके नारायणे एकं चिन्हम्। तत्र तात्पर्यं नाम यथार्थस्वरूपावसायित्वमिति। उपक्रमोपसंहारौ

'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' (मुण्ड-१-१-१०) इत्युपक्रमः,

'तदेतत्सत्यमि'त्युपसंहारः, 'सदेव सौम्येदमग्र आसीदि' (छा. ६-२-१) त्युपक्रमः,
'तत्त्वमसि' (छा.६-८-७) तस्य सद्रूपस्य परब्रह्मण उपासकभूतस्त्वमसीत्युपसंहार;,
'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरं द्विभुजं ज्ञानमुद्राढ्यम्', इत्युपक्रमः
'चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः' (गो.पू.ता.उ. १-२) इत्युपसंहारः,
'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजा' इत्युपक्रमः,
'नारायणे प्रलीयन्ते नारायणे प्रलीयन्ते'(नारा. उ. १) इत्युपसंहारः।
इत्थमन्यत्रापीक्षणीयम्। अथ
'नित्यो देव एको नारायणो ब्रह्मा च नारायण' इत्यारभ्य
'नारायणोऽन्तर्बहिश्च नारायणो नारायण एवेदं सर्वं यद्भूतं च यच्च भव्यम्'(नारा.उ.२)
अथ नित्यो निष्कलङ्को निराख्यातो निर्विकल्पो निरञ्जनः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्;
य एवं वेद' (नारा.उ.२) इत्यन्तोऽभ्यासश्च। अपूर्वता वेदेतरप्रमाणाप्राप्तत्वं च फलं ब्रह्मज्ञानं चार्थवादो जगत्सृष्टिस्थितिप्रध्वंसादयश्चोपपत्तिर्विरोधाभावः सर्वज्ञतादिसंपत्तिर्वा। एतैलिङ्गैर्ब्रह्मणि तात्पर्यमवगन्तव्यं वेदान्तवाक्यानाम्। ये वेदान्तास्ते न केवलब्रह्मपराः किन्तु
'आत्मा वा अरे द्रष्टव्यः' (बृ.६-५-६) इत्यादिषु तज्ज्ञानविधिपरा अपि ज्ञायन्ते।
उभयपरत्वे वाक्यभेदप्रसंग इति यदुक्तं तत्र रूपप्रत्यायकेन चक्षुषा यथा द्रव्यस्यापि सिद्धिस्तथा विधिपरैरपि वेदान्तैर्ब्रह्मसिद्धिरिति नोभयपरत्वे विरोधः। शाब्दं हि ब्रह्मज्ञानं तद्ब्रह्मवाचिशब्दादेव प्राप्तं, तद्विधिना किं प्रयोजनमिति चेत् ज्ञानप्राप्तावपि मन्त्रादिष्विव विधेरविरोधः। तथाहि यथा द्रव्यदेवतादिप्रकाशकेषु मन्त्रेष्वधीयमानेषु द्रव्यादिज्ञाने जातेऽपि पुनरनुष्ठानकाले मंत्रैरनुस्मर्तव्यं पदार्थं प्रयागविधिः तज्ज्ञानानन्तरमनुष्ठापयति तथात्रापि। इहोत्पत्तिविनियोगाधिकाराणां विधेरभावात् प्रयोगविध्यसंभव इति न शङ्कनीयम्; ज्ञानोत्पत्तिविधेरध्याहारेण सिद्धो प्रकरणवशात् शमादिकं च नियोजयन् आत्मानं पश्येदिति विनियोगविधिरुपपद्यते। ततश्च रात्रिसत्रन्यायेन
'ज्ञात्वा देवं मुच्यते सर्वपापैः' (श्वे.१-८/५-१३/६-१३)
इत्याद्यर्थवादावगतमोक्षकामरूपोऽधिकारः कल्पनीयो भवति। अतो मोक्षकामवानधिकारी शमादियुक्तो ब्रह्मज्ञानं संपादयेदिति प्रयोगविधिलाभः। ननु ब्रह्मणि
'यतो वा इमानि' (तै. उ. भृ. अनु. १-१)
इति वाक्यादेव ज्ञाते तज्ज्ञानविधिरप्रयोजकः, तत्प्रयोजनस्य पूर्वज्ञानादेव सम्भवादिति चेन्न; वाक्यात् परोक्षत्वेन ज्ञाते ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः। कथमुभयोर्भेद इति चेत्तत्राह-यच्छब्दजन्यं ज्ञानं न तत्साक्षात्कारहेतुः, किन्तु उपासनानुकुलजातं ज्ञानमेव ब्रह्मसाक्षात्कारजनकम्। तथाहि श्रूयते

'ध्यात्वा मुनिर्गच्छति भूतयोनिम्' (कैव. उ. ७) इति,
'तमेव विद्वानमृत इह भवति' (तै.आर.पु. ३-१३-१७) इति,
'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' (श्वे.३-८),
'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय' (श्वेता.३-८ / ६-१५) इति,
'ध्याननिर्मथनादेव पाशं दहति पण्डितः' (श्वेता. १-१४)

इत्यादिषु कः परमो देवः, कुतो मृत्युर्बिभेति, कस्य विज्ञानेनाखिलं विज्ञातं भवति,
'तदुहोवाच ब्राह्मणः कृष्णो वै परमं दैवतं, 'गोविन्दान्मृत्युर्बिभेति' (गो.पू.ता.उ. १-१),
'गोपीजनवल्लभज्ञानेन तज्ज्ञानं भवती'ति,
'ज्ञात्वा देवं मुच्यते सर्वपापैः' (श्वे.१-८ / ५-१३ / ६-१३)

इत्यादिषु। तथाहि-

'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः'॥

इत्यत्र श्रवणमननजन्यज्ञानाविनाभूतं निदिध्यासनं ब्रह्मणः साक्षात्कारे निमित्तं स्मर्यते। अत उपासनारूपज्ञानं मोक्षफलं विदधाति।
'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्' (कठ.२-२-१३) इति,
'तज्जलानिति, शान्त उपासीत' (छा. ३-१४-१) इति,
'प्राचीनयोग्योपास्व' (तै. शिक्षा.अनु. ६-२) इत्यादिषु च तथा
'ब्रह्मविदाप्नोति परमि' (तै.उ.आन. १-१)

त्यादिषु ब्रह्मस्वरूपोपासना तत्फलादिकं चोपदिश्यते;
अन्यथा सत्पुण्डरीकनयनत्वादिविशेषणविशिष्टेन परब्रह्मणा साकं कथं समस्तकामोपलब्धिः फलम्?। तादृशं ब्रह्म किं तत्राह-

'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्।
द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम्॥
गोपगोपीगवावीतं सुरद्रुमतलाश्रयम्।
दिव्यालङ्करणोपेतं रक्तपङ्कजमध्यगम्'॥ (गो.पू.ता.उ. १-२)
कालिन्दीजलकल्लोलसंगिमारुतसेवितम्।
चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः'॥ इति (गो.पू.ता.उ. १-२)

इत्थं कृष्णशब्दवाच्यं नारायणमुनिसंज्ञं परब्रह्म उपक्रमादितात्पर्यलिङ्गैर्निरूप्यते;
'यो वेद निहितं गुहायाम्' (तै.उ.आन.१-१) इति,
'प्राचीनयोग्योपोस्व' (तै. शिक्षा.अनु. ६-२) इति,

ज्ञानाविनाभूतं तदुपासनं विधीयते;

सर्वान्कामानित्यादिषु सकलकामाप्तिर्ब्रह्मणा सहोपासकानामवगम्यते; अतो निष्कामलिङ्गधर्मोपेतो निषिद्धकाम्यकर्मरहितो यथाश्रुतिस्मृतिचोदितकर्मानुष्ठानसंपन्नचित्तशुद्धिः शमदमादिसाधनसंपन्नत्वात्सद्गुर्वनुग्राह्यः कृष्णशब्दवाच्यनारायणपरमभक्तियुक्त इत्थंभूतो मुमुक्षुः श्रुतिसारेभ्यः कृष्णाभिधेयं नारायणरूपं परं ब्रह्म विदित्वा तच्चिन्तयन्मुक्तो भवतीति ज्ञानोपासनविधिः संपन्नः । अतो नारायणशब्दवाच्यं कृष्णाख्यं परं ब्रह्मैव संसृतिमोक्षकांक्षिभिश्चिंतनीयं ज्ञातव्यं चेति । एवं तात्पर्यलिङ्गसमन्वयेन ब्रह्मपरा वेदान्तास्तदुपासनविधिपराश्चेत्यविरोधः । उक्तस्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्य तदुत्तरेण परब्रह्माकृतिमप्याह-

ईक्षत्यधिकरणम् ॥१-१-५॥

## ईक्षतेर्नाशब्दम् ॥१-१-५॥

'सदेव सोम्येदमग्रआसीत्', 'एकमेवाद्वितीयम्' (छा.६-२-१),

'तदैक्षत बहुस्यां प्रजायेय' (छा. ६-२-३)

इत्यादिवाक्यवृंदं श्रूयतेऽस्यविषयश्छान्दोग्ये,

'आत्मैवेदमग्र आसीत् पुरुषविधः' बृ. (३-४-१) इति बृहदारण्ये च,

'स ऐक्षत' (बृ. ३-२-५) इत्यन्यत्र च । इह पूर्वभावितया सकलस्य प्रपञ्चस्य कारणत्वेन श्रूयमाणं सदिति वस्तु ब्रह्म वा प्रधानं वेति सन्देहः । प्रधानस्यैव जगत्कारणत्वं युक्तम्;

'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' तै.ना.उ. (अनु.१०-५)

इति श्रुत्यन्तरे श्रवणात् । अत्र हि बहुप्रजाजनकत्वं लोहितादिवर्णानुमितरजःसत्वतमोरूपायाः सांख्योक्तप्रकृतेरवगम्यते; तदानुगुण्येनात्रापि सच्छब्दवाच्यं जगत्कारणं प्रधानमेव; रजःसत्वयोगात् अस्य क्रियाज्ञानशक्तिसंबन्धोऽपि युज्यते, येन जगत्कारणत्वसिद्धिः, अचेतनस्य प्रधानस्य जगदाकारपरिणामो युक्तः, न चेतनस्य नारायणस्य निर्विकारस्य कारणत्वम्, परिणामस्य तु विकृतिरूपत्वात् । तत एव न्यायतः श्रुत्या च प्रधानमेव जगत्कारणं सत्पदवाच्यमिति प्राप्ते ब्रूमः-अशब्दमानुमानिकं प्रधानं न जगत्कारणं सच्छब्दवाच्यं वस्तु; अपि तु परमचेतनं ब्रह्मैव जगत्कारणम्; यतो वेदान्तेषु ईक्षतिश्रवणात् ।

'तदैक्षत बहुस्यां प्रजायेय' (छा.६-२-३) इति नह्यचेतने प्रधाने चेतनधर्म ईक्षतिः संभवति। यदुक्तम् 'बह्वीं प्रजां जनयन्तीमि'ति श्रवणात् सांख्यप्रकृतेरत्र जगत्कारणत्वमिति तदसंगतम् ।

'चमसवदविशेषात्' (ब्र.सू. १-४-८) इत्यधिकरणे हि जगत्कर्तृनारायणकरणभूताया एव प्रकृतेर्बहुप्रजाजनकत्वमित्युपपादयिष्यामः । रजःसत्वरूपतया क्रियाज्ञानशक्तिसंबन्धः प्रधानस्येति यदुक्तं तदयुक्तम्; त्रिगुणात्मिकायाः प्रकृतेस्तमः पृथक्त्वेन रजः सत्वयोगाभावात् न च तमःसंयुक्ते रजः सत्त्वयोरुद्रेके सति ज्ञानक्रियासंबन्धः प्रधानस्येति वाच्यम्; सत्वरजस्तमसां साम्यावस्था

प्रकृतिरित्यङ्गीकारात्। किञ्चाविकृतस्य नारायणस्य जगदाकारेण परिणाम यत्र कुत्रापि भणितं तदज्ञानविलसितं तर्हि तत्परिणामः कथमिति चेत्तत्रोत्तरम्-दिव्यविग्रहेण ब्रह्मपुरे सदा वर्तमानस्य नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुषु संकुचितान्तर्यामिशक्त्या विशिष्टस्य नारायणस्य कारणत्वं नामरूपविभागार्हस्थूलचिदचिद्वस्तुषु विकसितान्तर्यामिशक्त्या विशिष्टस्य कार्यत्वमिति वदतामस्माकं तत्प्रसंगभयाभावः। ननु

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'(छा.६-२-१)

इत्यादिना सद्रूपं वस्तु निर्विशेषमेवावधारणादवगम्यते; कारणावस्थमेतत्कथं सूक्ष्मप्रपञ्चविशिष्टमित्युच्यते, इति चेन्न; सदेवेत्यवधारणे विशेषनिषेधो नास्ति; किन्तु

'असद्वा इदमग्र आसीत् ततो वै सदजायत' (तै.उ.आन. अनु. ७-१)

इति श्रुत्या असत्कारणत्वभ्रान्तिप्रसक्तिविद्यमानत्वादसद्वस्तुन एव कारणत्वनिषेधोऽस्ति। किञ्च 'सदेव सोम्येदमग्र आसीदेकमेवाद्वीतीयमि'त्यत्र न निर्विशेषत्वं ब्रह्मणः, तत्कथमित्यत्राह-आसीदिति हि क्रियाविशेषः अग्र इति कालविशेषः एकमेवेत्यवधारणं अधिष्ठात्रन्तरनिषेधपरम्। अद्वितीयमिति जगदुपादानत्वमुच्यते; अतएव सर्वज्ञमनन्तशक्तिविशेषं च परब्रह्मास्ति। कथं सर्वज्ञत्वसर्वशक्तित्वविशेषमन्तरेण जगदुभयकारणत्वं ब्रह्मणो भवति; अथवा प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नैकवस्तुपरत्वं युक्तम्। प्रकृत्या प्रत्ययेन च संयुक्तस्य सत्पदस्यानेकवस्तुप्रतिपादनपरत्वात्। तथा वस्त्वनेकत्वे स्मृतिवचनानि-

'एको नारायणो देवः पूर्वसृष्टं स्वमायया।
संहृत्य कालकलया कल्पान्त इदमीश्वरः'॥

'एक एवाऽद्वितीयोऽभूदात्माधारोऽखिलाश्रय'। (भा. ११-९-१६) इति

'भगवानेक आसेदमग्र आत्मात्मनां विभुः' (भा. ३-५-२३) इति॥

एवं नारायणस्यैकत्वे आत्माधारत्वे च सत्यप्यखिलाश्रयत्वोक्त्या बह्वात्मनामात्मत्वोक्त्या सः स्थूलसूक्ष्मभावस्थचिदचित्प्रपञ्चरूपे वस्तुनि प्रकाशरूपान्तर्यामिशक्त्या विशिष्ट एव कार्यकारणरूपः सत्पदविषय इति निर्णयः। अन्तर्यामिशक्तिविवेचनमाह-सदा दिव्यपुरुषाकारेण स्वस्थानस्थो हरिः सततं चिदचिद्वस्तुव्याप्तां स्वान्तर्यामिशक्तिं यदा स्वेच्छया संकोचयति तदा प्रलयः, यदा च तां बहु स्यामिति श्रुत्यभिहितप्रकारेण विकासयति तदा उत्पत्तिस्थितिकालौ स्त इति। अर्थांतरपक्षस्थेनानेन सूत्रेण पूर्वाधिकरणप्रतिपादितं शास्त्रकारणत्वं परब्रह्मणः ईक्षतेरित्यनेन नेत्रवत्त्वात् ना इत्यनेन नराकारत्वाच्च आशब्दमित्यनेनाऽऽसमंताद्भावेन श्रुतिस्मृतिवचनेषु निरूपितत्वात् सिध्यतीति प्रतिपाद्यते। अत्र पक्षे अस्याधिकरणस्य 'तदैक्षत' (छा.६-२-३) इति,

'स ऐक्षत' (बृ. ३-२-५) इति,

'हिरणमयः पुरुषो दृश्यते', 'हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः' (छा.१-६-६) इति,

'चरणं पवित्रं विततं पुराणम्' (कृ.यजु.तै.काठक प्र.३ अनु. ३-४) इति,

'आत्मैवेदमग्र आसीत् पुरुषविधः' (बृ. ३-४-१) इति,

'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः'(कठ.१-३-११) इति,

'स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट् मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृग्' (भा. ३-५-२४) इति,

'नमाम ते देवपदारविन्दम्' (भा. ३-५-३८) इति,

'मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्त' (भा.३-५-४०)

इत्यादिश्रुतिस्मृतिवाक्यकलापः श्रूयते विषयः। ब्रह्मणोऽनादिसिद्धनेत्राद्यवयववत्पुरुषाकारत्वं युक्तं नवेति सन्देहः। न युक्तमिति पूर्वः पक्षः।

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वेता.६-१९) इति,

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेता.३-१९) इत्यादिकानां ब्रह्मणः पुरुषाकारत्वनिषेधपराणां श्रुतीनां विरोधात् तस्यानादिसिद्धदिव्यपुरुषाकारत्वे प्रामाण्याभावप्रसंगः। तस्माद् ब्रह्मणोऽनादिसिद्धपुरुषाकारत्वं कथं सिद्ध्यतीति प्राप्ते ब्रूमः- युक्तमेव ब्रह्मणोऽनादिसिद्धदिव्यपुरुषाकारत्वम्।

'तदैक्षत' (छा.६-२-३),

'स ऐक्षत' (बृ.३-२-५)

हिरणमयः पुरुषो दृश्यते'(छा.१-६-६)

इत्याद्यनेकश्रुतिस्मृतिनामनादिसिद्धदिव्यपुरुषाकारत्वप्रतिपादनपरत्वात्।

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वेता.६-१९),

'अपाणिपादोजवन' (श्वेता.३-१९),

इत्यादिकानां श्रुतीनां तु प्राकृतक्रियागुणकरणाकृतिनिषेधपरत्वाच्च। एवं च सति शास्त्रयोनितया सिद्धो दिव्याप्राकृतपुरुषाकारनारायण एव जगत्कारणं न तु प्रधानमिति निर्णयः। इदानीं पक्षान्तरस्थमस्पष्टतयोक्तं सूत्रार्थं स्पष्टयति-ईक्षतेः परब्रह्मणि नेत्रोपलक्षकेक्षणधर्मात् आशब्दं आ समंताद्भावेन मुखकरपादाद्यवयवसूचकश्रुतिस्मृतिशब्दैः प्रतिपादितम्; अतो ना नृशब्दवाच्यं दिव्याप्राकृतपुरुषाकारतयोक्तं यत्परं ब्रह्म तच्छास्त्रयोनितया विज्ञायते। एवं तस्य मुखादिमन्नराकारत्वाच्छास्त्रकारणत्वम्; शास्त्रकारणत्वाच्च नराकारत्वमिति परस्परहेतुबलेनोभयं सिध्यति। पुनराशङ्क्य परिहरति-

## गौणश्चेन्नात्मशब्दात् ॥१-१-६॥

ईक्षतेश्चेतनधर्मस्याऽचेतने प्रधाने योगाभावाच्चेतनमेव परं ब्रह्म सत्पदवाच्यं कारणमिति प्रतिपादितं तदसंगतमेव;

'तत्तेज ऐक्षत' (छां.६-२-३),

'ता आप ऐक्षन्त' (छां.६-२-४) इत्यादिष्वचेतनेष्वपीक्षणधर्मो यथा गौणः श्रूयते तथा प्रधानेऽपि गौण इति चेन्न; चेतनवाचिन आत्मशब्दात्सदेव सौम्येदमग्र आसीदित्यारभ्य उपसंहारे 'स आत्मा तत्त्वमसी'त्यात्मशब्दश्रवणात् तेजःप्रभृतिष्वपि न गौणमीक्षतिश्रवणम्; तत्तदात्मतया नारायणस्य चेतनस्यानुवृत्तेः । तत ईक्षतिश्रवणं गौणमभ्युपेत्याप्यचेतनं प्रधानं सद्रूपं जगतः कारणमिति वक्तुमशक्यम्; चेतनवाचकस्यात्मशब्दस्याचेतनप्रधानवाचकत्वासंभवात् । एवं चेत्तर्हि चेतनस्य जीवस्यात्मशब्दवाच्यत्वं मुख्यम्; ततो जीव एव चेतनो जगत्कारणं सद्रूपमित्याशङ्कायां वदति-

## तन्निष्ठस्य मोक्षोपदेशात् ॥१-१-७॥

सत्पदवाच्यवस्तुनिष्ठस्य मोक्षमुपदिशति;

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छां.६-१४-२) इति ।

तस्मान्न प्रधानं जीवश्चात्र सत्पदविषयः। प्रधानकारणवादिनामपि तन्निष्ठस्य मोक्षो नाभिमतः, प्रधानस्य त्याज्यत्वात्; न जीवनिष्ठस्यापि मोक्षः, जीवस्यानाद्यविद्याकृतबन्धनयुक्तत्वात् । मोक्षोपदेष्टुर्मुक्तजीवस्यापि नारायणोपासनेनैव मुक्तत्वप्राप्तेः। कृष्णशब्दवाच्यनारायणध्यानेनैव तन्निष्ठस्य मोक्षोऽस्ति । तथाहि

'चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः' (गो.पू.ता.उ. १-२) इति श्रवणात्

नारदपञ्चरात्रे बृहद्ब्रह्मसंहितायां भद्रासनराजोवाच-

'कथं जीवोऽणुरूपोऽयं शरीरे सर्वगः प्रभो ।
कदास्य मायायोगोऽभूत् कदामुक्तिर्भविष्यति ॥'

श्रीहर उवाच 'स्वरूपोऽणुभूतोऽपि प्रकाशेन शरीरगः ।
एकदेशस्थितो वेत्ति हरिचन्दनबिन्दुवत् ॥
प्रभया भास्करो यद्वद्ब्रह्माण्डं व्याप्य तिष्ठति ।
एकदेशस्थितो दीपः कृत्स्नं गेहं प्रकाशते ॥
कदास्य मायायोगोऽयमिति प्रश्नो न चोचितः ।
अनादिकालतो जीवो मायया परिवेष्टितः ॥
अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः ।

त्रिविधोऽनुग्रहो विष्णोः कर्म ज्ञानमुपासनम्' ॥ (बृ. ब्रह्मसंहिता ४/१०/४३-४७)
इति स्मरणाच्च । पुनरपि प्रधानाख्यप्रकृतिकारणत्वनिषेधे विस्पष्टहेतुमाह-

## हेयत्वावचनाच्च ॥१-१-८॥

यर्हि प्रधानमेव कारणं सच्छब्दवाच्यं विवक्षितं स्यात्तर्हि तस्य सच्छास्त्रेषु हेयत्वं नोच्येत; तस्य तु तेषु हेयत्वमेवोक्तम्; अतः प्रधानं सच्छब्दावाच्यं न स्यात्, सच्छब्दाभिहितं तु मुमुक्षुपरमप्राप्यं परब्रह्मैव स्यात्, अतस्तस्य ब्रह्मणो हेयत्वं त्याज्यत्वं यत्तस्यावचनात् सच्छास्त्रेष्वनभिहितत्वात् जगत्कारणतया मुमुक्षुपरमप्राप्यतया च परब्रह्मशब्दवाच्यं नारायणतत्त्वमेवोपादेयं ज्ञेयं च । प्रधानं तु हेयतयैव ज्ञेयम् । तथाहि श्रूयते स्मर्यते च

'यतो वा इमानि भूतानि जायन्ते' इत्यारभ्य
'तद्विजिज्ञासस्व' (तै. उ. भृ. अनु. १-१) इति,
'तं ह आत्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं प्रपद्ये' (गो.पू.ता.उ. ५) इति,
'तमेव विदित्वातिमृत्युमेती'(श्वेता.३-८ / ६-१५)ति,
'तमेव चाद्यं पुरुषं प्रपद्ये' (गीता. १५-४) इति,
'सत्यात्मकं त्वां शरणं प्रपन्नाः' (भा. १०-२-२६) इति
'अजामेकामि'त्यारभ्य
'जहात्येनां भुक्तभोगामजोऽन्यः' (श्वेता. ४-५ / तै.ना.उ. अनु.१०-५) इति;

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' ॥ (गीता. ७-१४)इति,

'भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यश' (भा. ३-२७-२४)
इति प्रधानस्य कारणत्वेऽभिहिते सति विरोधं दर्शयति-

## प्रतिज्ञाविरोधात् ॥१-१-९॥

प्रधानस्य कारणत्वाङ्गीकारे एकस्य परब्रह्मणो विज्ञानेन तदन्तर्यामिशक्त्या व्याप्यस्य यथा कर्मप्रकाशितफलस्याचेतनविशिष्टसर्वचेतनवृन्दस्य विज्ञानप्रतिज्ञाविरोधात् सत्पपदवाच्यपरब्रह्मज्ञानेन तदन्तर्यामिशक्तिविशिष्टतया तत्प्रकाशनीयसकलचेतनाचेतन-वस्तुविज्ञानम्

'येनाश्रुतं श्रुतं भवति' (भा.६-१-३)

अचेतनविशिष्टचेतनानां यथाकर्मफलप्रदानं प्रकाशनं इत्यादिना प्रतिज्ञायते । प्रधानकारणत्वे एतत् अचेतनविशिष्टचेतनानां यथाकर्मफलप्रदानं प्रकाशनं च विरुद्धम्; अचेतनस्य प्रधानस्यैतत्परमचेतनकरणीयकर्मविधानासंभवात् प्रधानज्ञानेन

सर्वज्ञानासंभवः, अतो न प्रधानं जगत्कारणम् । प्रधानकारणत्वे विरोधं दर्शयन् सूत्रान्तरमवतारयति-

## स्वाप्ययात् ॥१-१-१०॥

'स्वप्नान्तं मे सौम्य विजानीहि यत्रैत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' (छा. ६-८-१)

इति चेतनस्य जीवस्य सता सदा क्षेत्रज्ञव्याप्तान्तर्यामिशक्तिरूपेण ब्रह्मांशेन सह संपन्नस्य स्वाप्ययात् । स्वाप्ययोक्तेः स्वस्मिन्कारणशरीरयुक्तस्य शरीरभूतजीवस्य स्वकीयशरीरिभूतान्तर्यामिणि अप्ययः-सुखानुभवेन लयः । अचेतने प्रधाने चेतनस्य लयो न युक्तः । ततो न प्रधानं सदित्युच्यते । सच्छब्देन परमेश्वर एव प्रतिपाद्यते न प्रधानमिति वदति-

## गतिसामान्यात् ॥१-१-११॥

'स कारणं करणाधिपाधिपः' (श्वेता. ६-९) इति,

'तस्माद्विराडजायत' (पु. सू. ५) इति,

'एको ह वै नारायण आसीत्' (महो. १-१),

'स एकाकी न रमेते'ति,

'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् स ऐक्षत लोकान्नुसृजा' (ऐ. १-१) इति,

'स इमांल्लोकानसृजत' (ऐ. १-२),

'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी' (तै.उ. आन. अनु. १-१),

'तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेद०' (बृ. ६-५-११)

इत्यादिसृष्टिवाक्यानां या गतिः-सत्पदवाच्ये नारायणे कारणतया या प्रवृत्तिस्तस्याः सामान्यात्-समानार्थत्वात् नारायण एव जगत्कारणं, न प्रधानम् । एवं नारायणादेव सर्ववेदान्तवाक्येषु सर्वोत्पत्तिः श्रूयते इत्याह-

## श्रुतत्वाच्च ॥१-१-१२॥

श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपव्याकर्तृत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसंकल्पत्वम्

'चानेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा. ६-३-२),

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा. ६-८-६)

'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छा. ६-८-७) इति,

'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.महा. ११-६) इत्यादिश्रुतिवाक्यं न प्रधानप्रतिपादनार्हमिति श्रूयते । ततो जगत्कारणत्वेन सत्पदवाच्यं ब्रह्मैव न प्रधानमिति सिद्धम्। इह ब्रह्मलक्षणस्य जगत्कारणत्वस्य शास्त्रैकसमधिगम्यस्य तांत्रिके प्रधाने अतिव्याप्तिमाशङ्क्य चेतनत्वादिहेतुना यथा तस्मिन्नतिव्याप्तिर्न भवति तथा निरूपितम् । अचेतनप्रधान इव चेतनेऽपि जीवे तन्नातिव्याप्तमिति वक्तुमधिकरणान्तरमारभ्यते-

आनन्दमयाधिकरणम् ॥१-१-६॥

## आनन्दमयोऽभ्यासात् ॥१-१-१३॥

'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापः' (तै.उ.आन.अनु.१-१) इत्यारभ्य

'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः' (तै.उ.आन.अनु. ५)

इत्यत्र यः कश्चिदाकाशादिभूतकारणतयाऽन्नमयादिकोशकञ्चुकान्तरनिगूढ आत्मानन्दमय इति तैत्तिरीया अधीयते । इहानन्दमय आत्मा जीवात्मा वा परमात्मा वेति संशयः । जीवात्मेति पूर्वः पक्षः । तद्धर्माणामत्रोपलम्भात् । तथाहि

'पृथिव्या ओषधयः, ओषधीभ्योऽन्नं; अन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमयः, तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः, अयमात्मा इदं पुच्छं प्रतिष्ठा' (तै.उ.आन. अनु. १) इत्यादिना प्रत्येकं पञ्चावयवमन्नमयाख्यशरीरादिकमानन्दमयान्तं पञ्चकं निरूप्यते; अत्रान्नमय इति शरीरमुच्यते । प्राणमय इति तदन्तर्वर्ती प्राणः । मनोमय इति तदन्तर्वर्ति मनः । विज्ञानमय इति तदन्तर्वर्तिनी बुद्धिः । आन्दमय इति सर्वेषामन्नमयादीनामाश्रयो जीव एव । अन्नमयादीनां शिरःप्रभृतिकल्पना समुपासनार्था; अन्नमयादीनां ब्रह्मत्वेनोपासनात् तत्तदन्नादिसमृद्धिः फलमुक्तम् । कथमस्य संसारसागरदुःखमग्नस्य जीवस्यानन्दमयत्वाभिधानमिति चेन्न; अत्रानन्दशब्देन परं ब्रह्मोच्यते; आनन्दो ब्रह्मेति श्रवणात् । मयट्शब्दस्य विकारार्थत्वात् तत्कार्यभूतो जीव एवानन्दमय इत्युच्यते इति । नित्यसंपन्नानवधिकातिशयमङ्गलत्वविशिष्टस्य नारायणस्य ब्रह्मण आनन्दमयत्वाङ्गीकारे

'अन्नमयप्राणमयमनोमयविज्ञानमयाऽऽनन्दमया मे शुद्ध्यन्ताम्' (कृ.यजु.तै.आर.प्रपा.१० अनु.५७)

इति शुद्धिप्रार्थना व्यर्था स्यात् । अतोऽयमानन्दमय आत्मा जीव एव न परमेश्वर इति प्राप्ते ब्रूमः- आनन्दमयोऽयमात्मा परमेश्वर एव । कुतः, अस्यानन्दस्य निरतिशयत्वेनाभ्यासात् । कथमभ्यस्यते,

'सैषानन्दस्य मीमांसा भवति' (तै.उ.आन. अनु. ८) इत्यारभ्य

'स एको मानुष आनन्दः, ते ये शतं मानुषा आनन्दाः, स एको मनुष्यगन्धर्वाणामानन्द' (तै.उ.आन.अनु.८) इति मध्येऽभिधायाऽवसाने च

'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्द' (तै.उ.आन. अनु. ८) इति श्रुत्युक्तवचने

मानुषविशेषादिप्रजापतिशब्दवाच्यविधिवैराज-पुरुषप्रकृत्यधिपपुरुषपर्यन्तेषु तत्तदानन्दस्य उपर्युपरि शतगुणमतिशयमभिधाय स एको ब्रह्मण आनन्द इति ब्रह्मानन्दो निरतिशयत्वेनाभ्यस्यते; अतस्तदेतन्निरतिशयानन्दभाजनत्वमस्य संसारिणो न संभवति। यदुक्तमानन्दमयस्य परमेश्वरत्वे नित्यशुद्धस्य तस्य कथं विशुद्धिप्रार्थना इति तत्रेदमुत्तरम्-यथा प्रकाशबहुलस्य सूर्यस्य तिरोधायकमेघापगम एव प्रसादः, तथा तस्य सदा विशुद्धस्य तिरोधायकजीवाऽविद्यारूपमलापनयनमेव शुद्धिः। तस्मादानन्दमयो नारायणशब्दवाच्यपरमेश्वर एव। नन्वानन्द एव ब्रह्मेत्युच्यते, तद्विकार आनन्दमयः मयटो विकारार्थत्वात्। आनन्दमयस्य परमेश्वरत्वाभ्युपगमे परब्रह्मणोऽन्यः परमेश्वर इति प्राप्तम्; तथा सति तस्य विकाररूपत्वादनित्यत्वं चेति शङ्कायामाह-

## विकारशब्दान्नेति चेन्न, प्राचुर्यात् ॥१-१-१४॥

अन्नमयादीनां यथा अन्नादिविकाररूपत्वं तथात्रानन्दमय इत्यानन्दविकारः। यथा मृद्विकारो हि मृन्मयो घटादिः। अतः परमेश्वरत्वासंभवादयं जीव एवेति चेन्न; मयट्शब्दस्यात्र प्राचुर्यार्थत्वात्। अन्नमयप्राणमयमनोमयपर्यंतमेव मयड्विकारार्थः। विज्ञानमयो विज्ञानप्रचुरः शुद्धजीवात्मा तदन्तर्यामी आनन्दमयोऽप्यानन्दप्रचुरः परमात्मा विज्ञानमय इति तदन्तवर्तिनी बुद्धिः। आनन्दमय इति सर्वेषामन्नमयादीनामाश्रयो जीव एवेति यत्पूर्वमुक्तं तदज्ञानविलसितम्।

'विज्ञानं यज्ञं तनुते (तै. उ. आन. अनु. ४) इति

'यो विज्ञाने तिष्ठन् य आत्मनि तिष्ठन् आत्मानमन्तरोयमयति' (बृ. ५-७-२६) इति

'आत्मात्मा चाक्षरात्मा च' (स्कन्द. वा. मा. १९ - २१) इति

'भगवानेक आसेदमग्र आत्मात्मनां विभुः' (भा. ३-५-२३)

इत्यादिश्रुतिस्मृतिषु विज्ञानात्मशब्दाभ्यां प्रोक्तजीवात्मनोऽन्तर्वर्तिपरमात्मोक्तिविरोधात्। अथ सूत्रार्थो विविच्यते। विकारशब्दात् अन्नादिभ्यस्त्रिभ्यः कृतात् विकारार्थवाचकान्मयट्शब्दाद्धेतोः अन्नमयादीनां त्रयाणामनुक्रमं प्राप्तयोरात्मपरमात्मवाचकयोर्विज्ञानमयानन्दमयशब्दयोः स्थितस्य मयट्प्रत्ययस्याविकारार्थत्वं न संभवतीति चेन्न, प्राचुर्यात्। सत्साधनयुक्तपरमात्मोपासनेनाक्षरब्रह्मसाधर्म्यं प्राप्ते शुद्धे जीवात्मनि विज्ञानस्याधिक्याद्धेतोः तथा नित्याजादिविशेषणबद्धचेतनमुक्तचेतनवृंदानामक्षरब्रह्मणश्च नियामके परब्रह्मणि प्राचुर्यात्, आनन्दस्यातिशयाधिक्याच्च। आत्मवाचके विज्ञानमयशब्दे परमात्मवाचके आनन्दमयशब्दे च स्थितस्य मयट्प्रत्ययस्य विकारार्थत्वं न संघटते; किन्तु प्रचुरार्थत्वमेव संभवतीति सूत्रार्थः। सर्वथा विकारार्थप्रकरणपठितत्वाद्विकारार्थ एव समुचितो मयट्शब्द इति यत्समागतं तस्य निराकरणे हेतुमाह।

## तद्धेतुव्यपदेशाच्च ॥१-१-१५॥

'एष ह्येवानन्दयति' (तै.उ.आन. अनु. ७)

इति असंख्यकोटिबद्धमुक्तक्षेत्रज्ञनिकरान्प्रत्यानन्दहेतुस्तदुद्भवकारणमिति श्रुतिव्यपदेशात् आनन्दमयः श्रूयते; स्वयं प्रचुरानन्दः सन्नेवेतरानानन्दयति । अतो नारायण एवानन्दमयः आनन्दप्रचुरोऽस्ति; तमेव मंत्रप्रतिपाद्यतया निरूपयितुं सूत्रान्तरमवतारयति-

## मान्त्रवर्णिकमेव च गीयते ॥१-१-१६॥

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. अनु. १-१) इति,

'ॐनमो नारायणाय' (भा. ६-५-२८),

'ॐनमो भगवते वासुदेवाय'।

(भा. ४-८-५३, ईश्वरसंहिता अ.२३, पाद्मसंहितायाम् चर्यापादे, वि.पु. १-१९-७८)

'नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज' ॥ (श्वेता. ६-८) इति

'नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नो विष्णुः प्रचोदयात्' (महा.ना.उ. २-१६)

त्यादिमन्त्रवर्णैर्मन्त्राक्षरैर्नमनीयत्वेन भजनीयत्वेन ध्येयत्वेनोपास्यत्वेन च प्रसाद्यत्वेन च प्रेमास्पदत्वेन च वरणीयत्वेन प्रोक्तं मान्त्रवर्णिकं परमानन्दमयं दिव्यपुरुषाकृतिपरमात्मस्वरूपमेव श्रुतिस्मृतिषु मुनिभिर्गीयते चकारात्स्तूयते च इति सूत्रार्थः । ननु मन्त्रवर्णोदितं परिशुद्धस्य जीवात्मन एव स्वरूपमस्तीत्याशङ्कायां सूत्रान्तरमारभ्यते-

## नेतरोऽनुपपत्तेः ॥१-१-१७॥

परमात्माभिधनारायणादितरः स्वरूपस्वभावादिभिर्विलक्षणो बद्धावस्थो मुक्तावस्थोऽपि क्षेत्रज्ञकलापो न मन्त्रवर्णोदितः । तत्र हेतुमाह-

तस्य नारायणस्वरूपस्वभावादिसमानत्वानुपपत्तेरिति सूत्रार्थः । अनवधिकातिशयानन्दमयस्य स्वरूपस्वभावगुणविभूतिभिरद्वितीयस्य परब्रह्मणस्तुल्यतयोपमातुं पूर्वमविद्याबद्धोऽत्यल्पज्ञः पश्चाद्भगवदुपासनादिसत्साधनैर्मुक्तोऽपि जीवात्मा न शक्यः । अतः स नारायण एव मन्त्रवर्णोदितो मुक्तपुरुषादिसर्वेषां नमनोपासनादिक्रियार्होऽस्तीति सूत्राभिप्रायः । तथाहि श्रूयते स्मर्यते च -

'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वेता. ६-८) इति,

'सर्वेभ्यो लोकेभ्यो ज्यायान्' (छा. ३-१४-३) इति,

'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वत'इति,

'न पापेन कर्मणा कनीयान् न पुण्येन कर्मणा भूयानि'ति
'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्चे' (ब्र.सू.४-४-१७) ति ।

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ (गीता. १५-१६)
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति (गीता. १५-१७)
'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' (गीता. १५-१८) ॥ इति

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता. १-९) इति,
'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः,
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोकः' (मुण्ड. ३-१-२ / श्वेता. ४-६) इति; जुष्टं महामुक्तैः सेवितमिति पर्यायः, इत्यादिवचनकलापे सर्वज्ञत्वाद्यनेकगुणगणविशिष्टतया स्वोपासकानां मोक्षपूर्वकानवधिकातिशयानन्दप्रदातृतया च सर्वोत्कृष्टं मान्त्रवर्णिकं नारायणाख्यं परं ब्रह्म विज्ञायते । पुनरितरेभ्यो नारायणस्यात्यधिकभेदं प्रतिपादयितुं सूत्रान्तरमवतारयति-

## भेदव्यपदेशाच्च ॥१-१-१८॥

स्वेतरचेतननिकरादानन्दमयस्य परब्रह्मणः श्रुतिस्मृतिषु नियन्तृनियम्यादिरूपेण भेदेन व्यपदेशात् । नायं चेतनवर्गो ह्यानन्दमयशब्दवाच्य इति सूत्रार्थः । तथाहि

'भीषास्माद्वातः पवते भीषोदेति सूर्यः' (तै.उ.आन. ८-१) इति,
ब्रह्मणोऽपि भयं मत्त इत्यादिना वायुसुर्यब्रह्मादिजीववर्गात्प्रशासितव्यात् तत्प्रशासितुर्नारायणस्य भेदो व्यपदिश्यते योजनान्तरं च ।

'तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमयः' (तै. उ.आन. अनु. ५)
इत्यादिना अन्नप्राणमनोभ्य इव जीवादपि तस्य भेदो व्यपदिश्यते ।

'अक्षरात्परतः परः (मुण्ड. २- १ -२) इति,
'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' (गी.१५-१८)
इत्यादिना क्षरभावप्रसक्ताज्जीवात्परं यद्विलक्षणमक्षरं ब्रह्म तस्मादप्युत्तमतया परब्रह्मणो भेदं व्यपदिशति । अतो मान्त्रवर्णिकमानन्दमयं ब्रह्म सर्वचेतनेभ्यो विलक्षणमेव प्रकृतिनिरपेक्षं जगत्कारणमिति विज्ञायते । पुनराशङ्क्य सूत्रान्तरं निगदति-

## कामाच्च नानुमानापेक्षा ॥१-१-१९॥

'तदैक्षत बहुस्यां प्रजायेये' (छा.६-२-३) त्यारभ्य
'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि'(छा.६-३-२)

इति, तत्परं ब्रह्म एक्षत सृष्ट्यादौ तेजःप्रभृतितत्त्वसंयुक्ततया परब्रह्मप्रकाशे तिरोभूतान् सप्रकृतिकान् पुरुषाद्यसंख्यक्षेत्रज्ञान् आलोचितवत् किमिति चेत्तत्राह बहुस्यामिति; एकोऽहं मत्सृज्यमाणानां तेजोजलपृथिवीसंज्ञतत्त्वानां यथार्हप्रकाशनाय ब्रह्मादिस्तंबपर्यंतक्षेत्रज्ञविशिष्टनामजत्वनित्यत्वादिधर्मयुतानां क्षेत्रज्ञानां च यथार्हकर्मफलप्रदानाय बहु यथा भवति तथा स्यां-भवेयम्, इति संकल्पानुरूपबहुभवनप्रकारमाह-प्रजायेयेति-यथाकर्मन्यूनाधिकभावेन प्राप्यमाणोच्चावचदेहानां जीवात्मानां यथार्हप्रकाशकविकसितान्तर्यामिशक्तिरूपेण प्रजायेय-उत्पन्नो भवेयमिति श्रुतितात्पर्यार्थः । श्रुत्यन्तरं च

'सोऽकामयतेत्यारभ्य इदं सर्वमसृजत' (तै.उ.आन. अनु. ६-२) इति कामात् संकल्पादेव जगत्सर्गश्रवणात् । अस्यानन्दमयस्य परमात्मनो जगत्सृष्टावनुमानवेद्यप्रकृत्यपेक्षा न विद्यते । प्रकृत्यधिपपुरुषविधिमरीच्यादिक्षेत्रज्ञकलापस्य तु जगत्सर्गकृतौ प्रकृत्यपेक्षा भवति । अतश्चायमुदितपुरुषादिक्षेत्रज्ञकलापादन्यः पुरुषोत्तमः, प्रकृत्तिपुरुषयोः

'परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्येति स्मरणात्'। (भा. ११-६-१४)

नन्वनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति प्रकृत्यधिपपुरुषरूपेणात्मना प्रपञ्चानुप्रविष्टस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणात् अनयोरभेद एवाभ्युपेय इत्यत आह-

## अस्मिन्नस्य च तद्योगं शास्ति ॥१-१-२०॥

अस्मिन्नानन्दमये पुरुषोत्तमे अस्य पुरुषादिक्षेत्रज्ञकलापस्य च तद्योगमानन्दसंबन्धं शास्ति-शास्त्रमुपदिशति । तथाहि श्रूयते

'रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवति' (तै.उ.आन. अनु. ७-१) इति,

रस आनन्दघनरसमयः स परमात्मा भवति; वै निश्चितं यं रसशब्दवाच्यमनवधिकातिशयानन्दमयं नारायणमेवायंपदनिर्दिष्टः पुरुषादिक्षेत्रज्ञनिकरो लब्ध्वा आनन्दी-प्रचुरानन्दवान् भवतीति श्रुतितात्पर्यार्थः । यल्लाभात् प्रकृत्यधिपपुरुषादिमहामुक्तानां आनन्दयोगोऽस्ति, स तेभ्योऽन्यः परमात्मशब्दवाच्य एवानन्दमयो नारायण इति सिद्धम् । तस्य साधकानां संसारभेषजं मनःसमाधानयोग्यं किमपि रूपं प्रदर्शयितुमिदमधिकरणमारभ्यते-

अन्तरधिकरणम् ॥१-१-७॥

## अन्तस्तद्धर्मोपदेशात् ॥१-१-२१॥

'य एषोन्तरादित्ये हिरणमयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवामक्षिणि' (छा. १-६-६,७)

इति छान्दोग्ये श्रूयतेऽस्य विषयः । अयमादित्यान्तर्वर्ती हिरणमयः पुरुषो नारायणो वा देवतान्तरं वेति सन्देहः । एवं सति सर्वाधारस्य सर्वगतस्य परमेश्वरस्य केवलादित्यान्तर्वर्तित्वं हिरणमयरूपत्वं

च न संभवति, अतो देवतान्तरमिति पूर्वः पक्षः। कुतः, शरीरस्थत्वात्।

कर्माधीनस्यादित्यादिदेवशरीरमुपगतस्य जीववृंदस्य देहसंबन्धो हि स्वकीयकर्मफलभोगायेति। सिद्धान्तस्तु

'स एष सर्वेभ्यः पाप्मभ्य उदितः' (छा. १-६-७)

इत्यादिना प्रतिपादिताः, अपहतपाप्मत्वादयस्तदुपलक्षिता अन्ये सर्वलोककामेश्वरत्वादयोऽपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यादयश्च चेतनाचेतनान्तरात्मकत्वं चानादिबोधत्वं स्वातन्त्र्यमित्याद्यसंख्यधर्माणामादित्यादिजीवेष्वसंभवात् अयमादित्यान्तः श्रूयमाणो नारायणाभिधपरमात्मैव। स्वासाधारणविलक्षणरूपत्वं च ज्ञानबलैश्वर्यादिकल्याणगुणवतोऽस्य संभवति; श्रूयते च तद्रूपस्याप्राकृतत्वम्;

'आदित्यवर्णं तमसस्तु पारे' (श्वे.३-८) इति,

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१) इति,

'स वेत्ति वेद्यं नहि तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्' (श्वेता. ३-१९) इति,

'एको बहूनां यो विदधाति कामान्' (श्वेता. ६-१३)

इत्यादौ सर्वाधारस्य सर्वगतस्य केवलादित्यान्तर्वर्तित्वं न संभवतीति विरुद्धं यदुक्तं तन्निराक्रियते; सर्वाधारः सर्वगतः परमेश्वरस्साधकानुग्रहाय हिरणमयं किमपि रूपं समास्थाय सवितृमण्डलमधिवसति। शरीरसंबन्धादस्मदादिवत् नारायणस्य न संसारदोषापत्तिः। श्रुतिरेव भगवती ह्यस्य शरीरसंबन्धं सर्वपापराहित्यं च प्रतिपादयति। वयं हि श्रुतिप्रामाण्यशरणा न युक्तिं बहु मन्महे इति। सूत्रार्थस्तु अन्तः अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः श्रूयते जीवादन्यः कप्यासपुण्डरीकाक्षो नारायण एव; कुतः, तस्य जीवातिरिक्तस्य नारायणस्यैव धर्माणामपहतपाप्मत्वादीनामुपदेशात्, तेषां जीवेष्वसंभवाच्च।

'तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणि' (छा. १-६-७)

इति श्रुतिवाक्यं व्याख्यायते कं जलं पिबति किरणैरिति कपिः सूर्यस्तेन आसमासितं विकसितं पुण्डरीकं पद्मं यथाऽऽभाति तथा तस्य नारायणस्याक्षिणी नयनयुगलम्। न'न्वसावादित्यो ब्रह्मे'त्यादित्यस्य ब्रह्मशब्देन व्यपदेशस्तस्मादन्तरादित्य इति मण्डलवर्ती सूर्य एव हिरणमयः पुरुष इत्यत आह-

## भेदव्यपदेशाच्चान्यः ॥१-१-२२॥

मण्डलाभिमानिनोऽस्माच्चेतनरूपादादित्यादन्य एव हिरणमयरूपो नारायणः भेदव्यपदेशात्। तदेव स्पष्टयति

'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः' (बृ. ५-७-१३) इति।

इहामृतपदेन नारायणोऽभिधीयते; कुतः, तस्मादादित्यशब्दवाच्याच्चेतनादन्यो हिरणमयो नारायणः, तस्य वेदेन व्यपदेशात् आदित्यान्तर्वर्ती स एव पुण्डरीकाक्षः प्रतिपाद्यते । तस्यादित्यान्तरात्मतयाऽऽदित्यशब्दवाच्यत्वम् । आदित्यान्तर्वर्तिनस्तस्य सावित्रीप्रतिपाद्यत्वात् सर्वेषां मुमुक्षुब्राह्मणानां स एव ध्येय इति सिद्धम् ।

'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः' (ना.पु. ६२-१७), इति स्मरणाच्च सर्वज्ञत्वादिधर्मवतः परब्रह्मणो नारायणस्य परममङ्गलास्पदमुपास्यं रूपमभिधाय तल्लक्षणस्य नामरूढिवशादन्यत्रातिव्याप्तिशङ्कायामधिकरणयुगलमारभ्यते-

आकाशाधिकरणम् ॥१-१-८॥

## आकाशस्तल्लिङ्गात् ॥१-१-२३॥

प्राणाधिकरणम् ॥१-१-९॥

## अत एव प्राणः ॥१-१-२४॥

अस्य विषयः छान्दोग्ये श्रूयते,

'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति'

(छा. १-९-१) इति,

'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहत' (छा. ६-११-५) इति । अत्र सकलभूतोत्पत्तिलयकारणप्रतिपादकावाकाशप्राणशब्दौ परमेश्वरप्रतिपादनपरौ किंवा भूतशब्दवाच्याकाशप्राणवायुप्रतिपादनपराविति सन्देहः ।

'प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते प्राणेन जातानि जीवन्ति प्राणं प्रत्यभिसंविशन्ति'

(तै.उ.भृ.अनु.३)

इत्यादिश्रुतेः आकाशाद्वायुरित्यादिश्रुतेश्च प्राणाकाशयोरपि सकलभूतकारणत्वावगमात् । तावेवात्र प्रतिपाद्याविति प्राप्ते ब्रूमः - प्राणाकाशशब्दवाच्यः परमेश्वर एव सर्वकारणत्वादितल्लिङ्गात् , न ह्यनयोस्सर्वकारणत्वादिकं संभवति, तत्रानन्दरूपस्य ब्रह्मणः कारणत्ववादे प्राणाद्ध्येव खल्वित्यादिश्रुतेस्तात्पर्यमस्ति, न प्राणस्य कारणत्ववादे; किन्तु अनुवादमात्रं आकाशस्य भूतान्तर्वर्तितया सर्वशब्देन ग्रहणाद्धेतोस्तत एव सर्वभूतोत्पत्तिरभिहिता। वस्तुतस्तु

'आत्मन आकाशः संभूतः' (तै.उ.आन. अनु. १)

इति श्रुत्या नारायणादेवास्ति; तस्मात्तस्यैव सर्वभूतकारणत्वं न भूतशब्दवाच्याकाशप्राणयोरिति सिद्धान्तः । नन्वाकाशकारणत्वपक्षाङ्गीकारे किमुक्तमिति चेत् चिदाकाशाख्यं नारायणस्थानमिति; एवं च सति तस्य सर्वभूतकारणत्वसद्भावात् तद्वचनं सप्रयोजनं तर्हि

परमेश्वरशब्दवाच्यनारायण आकाशशब्दाभिधेय इति कथं निर्णय इति चेत्तत्र ब्रूमः तयोर्धामधामिनोरभेदविवक्षयेति सिद्धम्।

'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित' (मुण्ड. २-२-७) इति तयोर्धामधामिभावेन श्रवणात्।

ज्योतिरधिकरणम् ॥१-१-१०॥

## ज्योतिश्चरणाभिधानात् ॥१-१-२५॥

पूर्वं निखिलभुवननायकस्य निरस्तसमस्तदोषवासनाकलङ्कस्य निरतिशयमाङ्गल्यरत्नाकरस्य लक्ष्मीपतेः परब्रह्मणः आदित्यमण्डलमास्पदमिति निरूपितम्; इदानीं तस्य स्थानान्तरमुच्यते। छान्दोग्ये श्रूयतेऽस्य विषयः

'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' (छा. ३-१३-७) इत्यादि।

अत्र सकललोकव्याप्ततया दिवि श्रूयमाणं परं ज्योतिर्नारायणो वा तदन्यो वेति संशयः। द्योशब्दस्याकाशवाचित्वात्परो दिव इति आकाशवर्ति सूर्य एवात्र प्रतिपाद्यते ज्योतिरिति; अथवा अन्तःपुरुषे ज्योतिरिति पुरुषान्तर्वर्तितया जाठरोऽग्निरिति पूर्वः पक्षः। सिद्धान्तस्तु

परो दिवो ज्योतिः (छा. ३-१३-७) इति सर्वोत्तरं परं ज्योतिर्नारायण एव, पूर्वत्र 'पादोऽस्य सर्वा भूतानि'(छा. ३-१२-६) इति ज्योतिषोऽस्य एकांशतया विश्वभूतानामभिधानात्। नैतत्संभवति; जाठराग्निसूर्ययोः परिच्छिन्नत्वात् तद्व्याप्यत्वाच्च।

पूर्वं 'गायत्री वा इदं सर्वं भूतम्' (छा. ३-१२-१) इति सर्वात्मतया गायत्री प्रतिपाद्यते। प्रकरणात्तदेकांशत्वमेव प्रपञ्चस्य 'पादोऽस्य सर्वा भूतानी'ति श्रुतिराह। तस्माज्जयोतिर्वाक्ये गायत्र्येवोपादीयत इत्याशङ्क्य समाधत्ते-

## छन्दोऽभिधानान्नेति चेन्न; तथा चेतोऽर्पणानिगदात्तथाहि दर्शनम् ॥१-१-२६॥

पूर्वं 'गायत्री वा इदं सर्वमि'ति छन्दसोऽभिधानात् तस्यैवात्राभिधानं न नारायणस्येत्युच्यते चेत्तर्ह्येतद्गायत्रीसंज्ञस्य छन्दोमात्रस्य सर्वभूतात्मकत्वं न संभवति; किन्तु गायत्रीछन्दः सादृश्यानुसंधानोपदेशो नारायणस्यैव क्रियते; यथा गायत्री षडक्षरैश्चतुर्भिः पादैश्चतुष्पदा तथा ब्रह्मापि चतुष्पादिति; तथा च गायत्रीजापकस्य गायत्रीछन्दसि चेतसोऽन्तः करणस्यार्पणं निगद्यते तथा मुमुक्षोरपि परब्रह्मणि चेतोऽर्पणं कथ्यते; अतोऽपि गायत्रीछन्दः सादृश्यानुसंधानं नारायणस्येति। तथा ह्यन्यत्रापि

'छन्दोऽभिधायी दशाक्षरा विराड्' इति श्रुत्युक्तो विराट्शब्दो दशत्वसंख्यासादृश्यादर्थांतरे

कृतसंज्ञके वाय्वादो प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायां 'अधिदैवमग्निसूर्यचन्द्रांभांसि वायौ लीयन्ते अध्यात्मं प्राणे वाक्चक्षुः श्रोत्रमनांसी' (छा. ४-३-) त्युक्तम्; तदनन्तरं

'ते वा एते पञ्चान्ये पञ्चान्ये दश संतस्तत्कृतम्' इत्युपक्रम्य

'सैषा विराड्' (छा. ४-३-८) इत्युक्तम्;

ते वायुना सह पञ्चाधिदैविका आध्यात्मिकेभ्यः प्राणादिभ्योऽन्ये तथा प्राणादयः पञ्च अधिदैविकेभ्योऽन्ये; एवं सर्वे दश संतः कृतमित्युच्यन्ते तथा ब्रह्मणि चतुष्पात्त्वसाम्याद्गायत्रीशब्दप्रयोगः। केवलगायत्रीछन्दसस्तु सर्वात्मकत्वाभावान्नारायणस्यैव सर्वात्मकत्वलिङ्गेन गायत्रीप्रकरणबाधः, अतो नारायण एव ज्योतिरिति । पुनरनुपपत्तिमाह-

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥१-१-२७॥

भूतपृथ्वीशरीरहृदयैश्चतुष्पदेति व्यपदेशो न गायत्र्याख्ये छन्दसि उपपद्यते, नारायणे एवोपपद्यते; अतो गायत्रीशब्देन परब्रह्मैव प्रतिपाद्यमित्येवं शब्दार्थः । पुनराशङ्क्य परिहरति-

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥१-१-२८॥

ननु 'पादोऽस्य सर्वा भूतानि' इति,

'त्रिपादस्यामृतं दिवि' (छा. ३-१२-६)

इत्यत्र द्युसंबन्धप्रत्यभिज्ञानात् ज्योतिर्वाक्ये नारायणः प्रतिपाद्यते इति न सारम् । उपदेशभेदेन विरोधात् प्रत्यभिज्ञानासिद्धेः ।

'त्रिपादस्यामृतं दिवीति परो दिवो ज्योतिः' (छा. ३-१२-६/ छा. ३-१३-७) इति विभक्तिभेदेनोपदेशभेदः । अतो विरोध इति चेन्न । उभयत्र विभक्तिभेदेऽप्यन्वयव्यतिरेकभावोपगतपरमात्मरूपार्थैक्येन विरोधाभावत् । अत उभयत्रापि दिवः परत्वमेव विवक्षितम् । अनेन लिङ्गेन नारायण एव पुरुषसूक्तोदितः पुरुष इति सिद्धम् । पादोऽस्य विश्वा भूतानीति तत्रापि श्रवणात् ततो निजैकांशसमाससकलप्रपञ्चं दिवि दीप्यमानं परं ज्योतिर्नारायण इति निर्णयः भगवत्सवितृमण्डले साक्षादुपास्यतया निर्दिष्टस्य नारायणस्य तस्मिन्नधिकरणे विश्वात्मकत्वमुक्तम् । तदात्मकतया तदन्येषामुपास्यत्वं नान्यथेति प्रतिपादयितुमिदमधिकरणमारभ्यते-

### इन्द्रप्राणाधिकरणम् ॥१-१-११॥

## प्राणस्तथानुगमात् ॥१-१-२९॥

अस्याधिकरणस्य कौषीतकीब्राह्मणे प्रतर्दनविद्यायां विषयः श्रूयते ।

'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्व' (कौषी. ३-१४) इतीन्द्रवचनम् ।

अत्रोपासनाविषयत्वेन प्राणशब्दसामानाधिकरण्येन निर्दिष्ट इन्द्रो वा नारायणो वेति संशयः। इह प्राणोऽस्मि प्रज्ञात्मा तं मामिति प्राणशब्दस्य साक्षादिन्द्रेण सामानाधिकरण्यमवगम्यते। मामुपास्वेति तद्विषय एवोपासनविधिः श्रूयते। तस्य प्राणत्वं वृष्टिद्वारा सकलरक्षकत्वादुपपद्यते। सकलोपास्यत्वं च परमैश्वर्यवत्वादुपपन्नम्। तथाहि श्रुतिः-

'इन्द्रो राजा जगतो य ईशे' (तै. आर. ३-११-६)

इत्यादि। तस्मादिन्द्र एवोपास्यतया निर्दिश्यत इति पूर्वः पक्षः, सिद्धान्तो नारायण इति। कुतः, आनन्दाजरामृतप्रज्ञादीनां तदसाधारणधर्माणामस्मिन्प्राणशब्दनिर्दिष्टेऽनुगमात्। तथाहि

'एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत' (कौषी. ३-६२) इति।

इन्द्रो राजेति श्रुताविन्द्रशब्दो नारायणविषयः प्रकरणादवगम्यते। पुनराशङ्क्य परिहरति-

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥१-१-३०॥

उपक्रमे

'मामेव विजानीहि त्रिशीर्षाणं त्वाष्ट्रमहनम्' (कौषी. ३-८,९)

इत्यादिना प्रज्ञातजीवभावस्येन्द्रस्य वक्तुः आत्मोपदेशात् स्वोपास्यत्वोपदेशः, अत उपसंहारस्तदनुगुणो नेतव्य इति चेत् नैतदुचितम्। उपक्रमादारभ्यास्मिन्प्रकरणे अध्यात्मसंबन्धभूमा आत्मनि परमात्मन्येव संबन्धो यस्य हिततमत्वादिधर्मस्य तस्य भूमा भूयस्त्वं बहुत्वं नेतरस्मिन्नित्यर्थः। तथाहि उपक्रमे तावत्

'यं त्वं मनुष्याय हिततमं मन्यसे' (कौषी. ३-३)

इति हिततमोपासनं प्रारब्धं, तद्धिततमत्वं तावत् नारायणधर्मस्तदुपासनस्यैव मोक्षसाधनस्य हिततमत्वात्। मध्ये च

'एष ह्येव साधुकर्म कारयति, तं यमेभ्यो लोकेभ्यः उन्निनीषते, एष ह्येवासाधुकर्म कारयति तं यमधो निनीषते' (कौषी. ३-६४) इति।

यथा राज्ञा तद्व्यावहारिकज्ञानानुकूलार्पिताधिकारोऽपि जनः तत्कर्मानुगुणदत्तकरणकलेवरोऽपि जनः सदसज्जनसेवनानुगुणं तस्य प्रसन्नतामप्रसन्नतां च प्राप्नोति तथा नारायणेन तत्कर्मानुगुणदत्तकरणकलेवरोऽपि जीवात्मा सदसद्देशकालाद्यधिष्ठानुसेवनानुगुणमिह परत्र च सुखदुःखादिकमुच्चावचगतिं च प्राप्नोति; यथा च तस्य राजदत्ताधिकारत्वात् तत्कृतं कर्म राजकृतमिति लोका वदन्ति तथा जीववर्गस्य नारायणार्पितकरणकलेवरत्वात् देशकालाद्यनुगुणं तत्कृतं कर्म नारायणकृतमिति शास्त्राणि वदन्ति; इत्थंभूतायां मुक्तौ सत्यामपि येन यत्कर्म कृतं तत्फलं तस्यैवास्ति, नतु तत्तत्स्वामिनोरिति श्रुतितात्पर्यम्। एवं तस्यैव सर्वकर्मकारयितृत्वं श्रूयते। तद्यथा

'रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः

प्रज्ञामात्राः प्राणेऽर्पिताः' (कौषी. ३-६१)

इति जडचेतनात्मकसकलप्रपञ्चाधारकत्वं श्रूयते । तच्च नारायणधर्मः, अतो नारायणधर्मबाहुल्यादिहोपास्य इन्द्रो न भवति । कथमिन्द्रो जीवत्वादनुपास्योऽपि स्वविषयमुपासनमुपदिशतीत्याशङ्कायामाह-

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥१-१-३१॥

'ऐतदात्म्यमिदं सर्वम्' (छा. ६-८-७) इति,

'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' (तै.आर. ३-११-२),

'तत्त्वमसि' (छा. ६-८-७),

'य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' (बृ. ५-७-२६ (मा.पा.)),

'एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः' (सुबा. उ. ७) इति,

'सर्वं खल्विदं ब्रह्म' (छा. ३-१४-१) इति,

'सर्वं समाप्नोषि ततोऽसि सर्व' (गी. ११-४०)

इत्यादिशास्त्रेषु व्यापकतया व्याप्यचेतनाचेतनात्मकस्य नारायणस्य स्वशरीरभूतानां चेतनाचेतनानां वाचकशब्दवाच्यत्वम् - एवंभूतया शास्त्रदृष्ट्या स्वशब्दवाच्यं नारायणमेवोपास्यत्वेनोपदिष्टवानिन्द्रः । अत इन्द्रशब्देनोपदेशो नारायणस्यैव ।

तत्र दृष्टान्तमाह-वामदेवो हि स्वस्य नारायणात्मत्वदृष्ट्या

'अहं मनुरभवं सूर्यश्च' (बृ. ३-४-१० / ऋ.स. ४-२६-१)

इत्युपदिदेश, तद्वदिन्द्रोपदेशः । अथवा वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभावमुपगतस्य मनुष्यादिदेहविषयकल्पिताहंभावसंकोचस्य संपन्नविश्वाकारपराहंभावस्य वामदेवस्य स्वात्मनः सर्वगतत्वावगमात् मनुसूर्यादिप्रपञ्चभावोक्तिः एवमिन्द्रस्यापीति निश्चीयते। प्राणोऽस्मि प्रज्ञात्मेति प्राणशब्देन परब्रह्मोच्यते, तस्यानन्दरूपत्वेन सकलप्राणनहेतुत्वात्,

'प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत' (कौषी. ३-६२)

इति श्रवणाच्च । तथा 'चाहं ब्रह्मास्मी'ति ब्रह्मदृष्ट्या मामुपास्वेत्युपदेशः । तथा

'कृष्णोऽहं पश्यत गतिं ललितामिति तन्मना' (भा. १०-३०-१९)

इति गोपाङ्गनापि अपरा गोपाङ्गनाः प्रत्युपदिष्टवती । एवमन्ये रुद्रादयोऽपि स्वशिष्यान् प्रत्युपदिष्टवन्तः । अतः सर्वचेतनाचेनात्मके श्रीकृष्णे परमसमाधियोगमुपगता भक्तजनाः स्वात्मप्रसक्तदेहभावविस्मरणेन निजात्मानं ब्रह्मतयोपदिदिशुः तत्र न विरोधः ।

तथोक्तेभ्योऽन्यभक्तैर्नोपदेष्टव्यम्; तेषां तथाविधसमाध्यभावादिति सूत्राभिप्रायः पुनराशङ्क्यन् वदति-

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥१-१-३२॥

'न वाचं विजिज्ञासीत वक्तारं विद्यात्' (कौषी. ३-५८),

'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' (कौषी. ३-९,१०) इत्यादौ जीवलिङ्गं दृश्यते।

'यावदस्मिन् शरीरे प्राणो वसति तावदायुः' (कौषी. ३-१५)

'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' (कौषी. ३-३) इत्यादो मुख्यप्राणलिङ्गं च दृश्यते। तस्माद्धेतोरयमुपदेशो न घटत इति चेन्नैवं वाच्यम्, यतो जीवप्राणशब्दवाच्यत्वं नारायणस्य समुचितम्, उपासात्रैविध्यात्। इहोपासात्रैविध्यं हि नारायणस्य स्वकीयमूर्त्त्या स्वशरीरभूतविज्ञानमयक्षेत्रज्ञरूपेण च स्वशरीरभूतप्राणरूपेण चेति विवक्षितम्। आत्मतया जीवाश्रितत्वात् प्राणाश्रितत्वाच्च तदुपपत्तिः। नारायणस्य स्वरूपोपासनं सद्यो मुक्तिहेतुः, अन्यद्द्वयं च कालान्तरेण। तद्योगात् तस्य परमात्मनो योगः शरीरिभावेनेन्द्रप्राणयोः संबन्धस्तस्मादिहेन्द्रप्राणादिशब्दवाच्योपासनेऽभिहितेऽपि चेतनात्मकस्य नारायणस्यैवोपासनं निश्चीयते।

इति
श्रीशुद्धैकान्तधर्मप्रवर्तकसंसारसिन्धुनिमग्नजनवर्गनिष्कासकाधर्मतिमिर-
विनाशकभास्करप्रकटपुरुषोत्तमश्रीसहजानन्दस्वाम्युपासकाग्रगण्य-
मुक्तानन्दमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
प्रथमाध्यायस्य प्रथमःपादः ॥१॥



## प्रथमाध्याये द्वितीयपादः ।

परब्रह्मज्ञापकानां स्वोपबृंहकस्मृतिसहितानामुपनिषद्वाक्यानामसंख्यत्वात्प्रतिवाक्यं तन्मीमांसानुपलब्धेः । संशययुतानां केषांचिद्वाक्यानां विचारद्वारेण कृष्णद्वैपायनानुष्ठितैस्तन्न्यायैस्तथाभूतानामपि निर्णयो भवति । एवं कतिचिदेव वचनानि तात्पर्यलिङ्गसमन्वयेन परब्रह्मज्ञापकानि सूत्रितानि; तेषु कतिचित् प्रसिद्धलिङ्गानि वाक्यानि प्रथमपादे मीमांसितानि; कतिचिदनतिप्रसिद्धलिङ्गानि द्वितीयपादे मीमांस्यन्ते ।

सर्वत्रप्रसिद्ध्यधिकरणम् ॥१-२-१॥

### सर्वत्र प्रसिद्धोपदेशात् ॥१-२-१॥

छान्दोग्ये श्रूयतेऽस्य विषयः,

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयोऽयं पुरुषः यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर'

(छा. ३-१४-१, २) इति ।

अत्र सर्वं खल्विदं ब्रह्मेति सर्वात्मकत्वेनोपदिष्टं ब्रह्म किं क्षेत्रज्ञसंज्ञो जीवात्मा वा परब्रह्मसंज्ञो नारायणो वेति सन्देहः । क्षेत्रज्ञसंज्ञो जीवात्मेति पूर्वः पक्षः । तस्य सर्वात्मकत्वोपदेशसंभवात् स एव श्रुत्युपदिष्टं ब्रह्मास्ति, समस्तहेयप्रतिकूलस्य कल्याणैकतानस्य परब्रह्मसंज्ञनारायणस्य सकलहेयाकृतिरूपसर्वात्मकत्वविरोधादेव सर्वात्मत्वोपदेशो हि न घटते; क्षेत्रज्ञसंज्ञजीवात्मनो हि कर्महेतुकब्रह्मादिस्तंबपर्यंतभावः संभवति सृष्ट्यादिकारणत्वं च तत्तत्कर्मनिमित्ततया सर्गादिकर्मापि संभवति; ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन

'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' (मुण्ड. १-१-९)

इति श्रुतेस्तत्रैव वर्तते इति प्राप्ते सिद्धान्तं ब्रूमः-तज्जलानिति, सर्वं खल्विदं ब्रह्मेत्यादौ सर्गस्थितिप्रलयहेतुकं तदात्मकत्वं प्रसिद्धवन्निर्दिश्यमानं परब्रह्मसंज्ञनारायणस्यैवोपपद्यते । परस्माद् ब्रह्मण एव जगज्जन्मस्थितिलयाः प्रसिद्धाः ।

'सोऽकामयत बहुस्यां प्रजायेय' इति, 'इदं सर्वमसृजत' (तै.आन.अनु.६-२)

इत्यादिषु । तथा सर्वात्मकत्वं जन्मादिहेतुकं परस्यैव प्रसिद्धम्;

'सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा. ६-८-६)

'ऐतदात्म्यमिदं सर्वम्'(छा. ६-८-७)

इति हेयप्रतिकूलस्य कल्याणैकतानस्य परमात्मनो हेयाकृतिसर्वभूतानामन्तर्यामित्वेनात्मत्वं विरोधशून्यम् ।

'यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरं य आत्मनि तिष्ठन् यस्यात्मा शरीरं स त आत्मान्तर्याम्यमृत' (बृ. ५-७-७)

इत्यादिषु शरीरभूतसमस्तचेतनाचेतनात्मत्वेन सर्वात्मभावप्रतिपादनात् । देहात्मनोश्च विलक्षणतया स्वरूपस्वभावव्यवस्थाप्रतिपादने कृतेऽपि यथा तयोरेकत्वनिर्देशस्तथा सर्वं ब्रह्मेति सकलचेतनाचेतनानां परमात्मनश्च विलक्षणस्वरूपस्वभावादिव्यवस्थाप्रतिपादने कृतेऽपि तेषां देहदेहिभावादेकत्वनिर्देशः । अतः सर्वशब्दवाच्ये सर्वात्मन्यन्तर्यामिणि परब्रह्मण्येव सर्वशब्दप्रवृत्तिरुपपद्यते । शरीरवाचिशब्दः शरीरिण्यात्मन्येव पर्यवस्यति; देवमनुष्यादिशब्दवत्। सूत्रार्थो विविच्यते-सर्वं खल्विदं ब्रह्मेत्यादिषु सर्वत्र श्रुतिषु समस्तचेतनाचेतनैकभावेन निर्दिष्टं तेषामन्तर्यामित्वेनात्मभूतं परब्रह्मैव ज्ञातव्यं न तु जीवात्मा, कुतः, प्रसिद्धोपदेशात् -तज्जलानिति हेतुतः सर्वमिदं जगत् ब्रह्म खल्विति प्रसिद्धवत्तस्योपदेशात् । तस्माद्ब्रह्मणो जातत्वात् ब्रह्मणि प्रलीनत्वाद् ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते सति यस्माज्जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः तदेवात्र ब्रह्मेति विज्ञायते । तथाहि श्रूयते

'यतो वा इमानि भूतानि जायन्ते' (तै.उ.भृ.अनु.१-१)

इत्यादि । एवं भूतं परं ब्रह्म शान्त उपासीतेति यस्योपासनमुक्तं तस्मिन्नसंख्यगुणगणानुपपादयितुं सूत्रमारभ्यते-

## विविक्षितगुणोपपत्तेश्च ॥१-२-२॥

चकारो जीवात्मनः सर्वात्मकत्वं व्यावर्तयति । पूर्वसूत्रे परब्रह्मैव प्रतिपादितं न जीवात्मा; कुतः, विवक्षितानां सर्वोत्तमत्वेन वक्तुमिष्टानामपहतपाप्मत्वाद्यष्टानां सर्वज्ञत्वादिषण्णां च मनोमयत्वादीनां च सत्यशौचादीनां च गुणानां नारायणमुनिसंज्ञे परब्रह्मण्येवोपपत्तेः । तथाहि श्रूयते स्मर्यते च

'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशाको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प' (छा. ८-१-५) इति;

अपहतपाप्मत्वं नाम अपहतकर्मत्वं कर्मवश्यताशून्यत्वमित्यर्थः, तद्वत्त्वं हि परमात्मगुणः न तु कर्माधीनजीवगुणः ।

'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तदृष्टिः ।
अनन्तशक्तिश्च विभोर्विभुज्ञाः षडाहुरङ्गानि महेश्वरस्य'॥ (वायु. पूर्वार्धे १२-३१)

इत्युक्ताः षडङ्गभूता गुणाश्चेति

'मनोमयः प्राणशरीरो भारूपस्सत्यसंकल्प आकाशात्मा सर्वकर्मासर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो वाक्यनादर' (छा. ३-१४-२)

इति परिशुद्धेन तदेकाग्रेण मनसा ग्राह्यत्वाद्धेतोस्तस्मादेवागत इति व्युत्पत्या मनोमयः तत आगत इति मयड्विधानं विवेकविमोकाऽभ्यासक्रियाकल्याणानवसादाऽनुद्धर्षेभ्यः संभवादिति विवेकादिसप्तसाधननिगृहीतेन नारायणोपासननिर्मलीकृतेन मनसैव गृह्यते इत्यर्थः ।

अनेन हेयप्रतिकूलकल्याणैकतानत्वेन समस्तेतरवस्तुविलक्षणस्वरूपत्वं निगद्यते; मलिनमनोभिर्मलिनवस्तूनामेव ग्राह्यत्वात्। प्राणशरीरः-विश्वस्थितसर्वप्राणिप्राणानां धारकः

'अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु' (भा. २-१०-१६)

इत्यादिनोक्तः सूत्रात्मसंज्ञः प्राणः शरीरं यस्य एवं प्राणशरीरत्वमुच्यते; भारूपः-भास्वरविग्रहः अप्राकृतस्वासाधारणानवधिकातिशयकल्याण-दिव्यविग्रहत्वेन निरतिशयदीप्यमान इत्यर्थः। सत्यसंकल्पः-अप्रतिहतसंकल्पगतिः, आकाशात्मा-आकाशवन्निर्लेपो वा सूक्ष्मो वा स्वच्छरूप आत्मा यस्य तथाभूतः। यद्वा आकाशे चिदाकाशाख्ये ब्रह्मपुरे वर्तमान आत्मा दिव्यविग्रहो यस्य तथोक्तः। यद्वा आकाशस्य चिदाकाशाख्याक्षरब्रह्मण आत्मा आत्मतया सदा वर्तमानः, सर्वकर्मा-क्रियते तत्कर्म, सर्वं जगत्कर्म यस्य, यद्वा सर्वं कर्म क्रिया जगदुत्पत्त्यादिरूपा यस्य तथा भूतः, सर्वकामः काम्यन्ते इति कामाः भोग्यभोगोपकरणादयः, सर्वे कामा यस्य यदधीनाः सन्ति, अतःसर्वकामः सर्गगन्धः सर्वरसः अशब्दमस्पर्शमित्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणाः सर्वप्रकाराः निर्दोषाः निरतिशयमङ्गलरूपाः स्वभोग्यभूताः गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः उक्तमिदं रसपर्यंतं सर्व कल्याणगुणवृंदं अभ्यात्तः-स्वीकृतवान्; भुक्ता ब्राह्मणा इतिवत्कर्मणोऽविवक्षयो कर्तरि क्तः। अवाकी-वागुक्तिः साऽस्य नास्तीत्यवाकी प्राकृतगुणमयवाणीशून्यः जनकल्याणजनकवाणीयुत इत्यर्थः। अनादरः -अभक्तजनानां दर्शनादिदाने नास्ति आदरो यस्य तथाभूत इति मनोमयत्वादयो व्याख्याताश्च-

'सत्यं शौचं दया क्षांतिस्त्यागः संतोष आर्जवम्।
शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम्॥ (भा. १-१६-२६)
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः।
स्वातन्त्र्यं कौशलं कान्तिर्धैर्यमार्दवमेव च॥ (भा. १-१६-२७)
प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः।
गांभीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः॥ (भा. १-१६-२८)
एते चान्ये च भगवन्नित्या यत्र महागुणाः।
प्रार्थ्या महत्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित्' (भा. १-१६-२९)॥

इति स्मरणाच्च।

एते चान्ये चेत्यन्यशब्दवाच्याः स्वाभिमतानुरूपैकरूपाचिन्त्यनित्याद्भुतनिरवद्यनिरतिश-यौज्ज्वल्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यसंख्यस्वरूपगुणा अपि बोध्याः। स्वदयागुणेन त्रिगुणातीताप्राकृतब्रह्मपुरधामतो नारायणोऽपरिमितजनोद्धारणाय रामकृष्णादिरूपो भूत्वा इह लोके संचरते। तथाहि श्रूयते

'अजायमानो बहुधा व्यजायत' (तै.आ. ३, पु.सू. २१) इति,

स्मर्यते च-

'नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः' (भा. १०-२९-१४) ॥ इति

निर्गुणस्य सत्वादित्रिगुणहीनस्य, गुणात्मनः उक्ता अप्राकृता अपहतपाप्मत्वादयो गुणा आत्मनि स्वरूपे यस्य तस्येत्यर्थः । एते विवक्षिता गुणाः परमात्मपरब्रह्मादिशब्दवाच्ये नारायणे एवोपपद्यन्ते । विधिरुद्रादिक्षेत्रज्ञेष्वेतेषां विवक्षितगुणानां संभवशङ्कां निराकर्तुमिदं सूत्रमारभ्यते-

## अनुपपत्तेस्तु न शारीरः ॥१-२-३॥

एतेषां विवक्षितासंख्यगुणानामपरिमितक्लेशयुतपरिमितसुखगन्धमात्रसेविन्यत्यल्पज्ञे कर्माधीनेऽनाद्यविद्यानादिबन्धनवति शारीरे क्षेत्रज्ञकलापे सत्वादिगुणत्रयसहिते विधिरुद्रादिजीवन्मुक्तक्षेत्रज्ञकलापे च अनुपपत्तेरनुपलब्धेश्च । शारीरोऽयं शरीरसंबंधी क्षेत्रज्ञकलापो न विवक्षितगुणभाजनं किन्त्वनादिसिद्धपरब्रह्माख्यनारायण एव तद्गुणभाजनम्;

'एते चान्ये च भगवन्नित्या यत्र महागुणाः ।
प्रार्थ्या महत्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित्'॥ (भा. १-१६-२९)

इति स्मरणात् । एवं सकलसद्गुणभाजनत्वात् स एव सर्वोपास्यो विज्ञायते । इममर्थं निरूपयितुं सूत्रान्तरमवतारयति-

## कर्मकर्तृव्यपदेशाच्च ॥१-२-४॥

'एतमितः प्रेत्याभिसंभवितास्मि' (छा. ३-१४-४)

इति श्रुत्या प्राप्यस्योपास्यस्य च नारायणस्य कर्मत्वेन तत्प्राप्तुरुपासकस्य जीवकलापस्य कर्तृत्वेन च व्यपदेशात् उपास्यः कर्मत्वेनोपासकश्च कर्तृत्वेन व्यपदिश्यते; अत उभयोरतिवैलक्षण्यं विज्ञायते। तयोः कर्मकर्तृव्यपदेशस्त्वन्यत्रापि स्मर्यते-'मामेति सोऽर्जुनेति, मामेव ये प्रपद्यन्ते इति च । तमेवार्थं शब्दान्तरेण व्यपदिशन् सूत्रमारभते-

## शब्दविशेषात् ॥१-२-५॥

'एष म आत्मान्तर्हृदये' (छा. ३-१४-३) इति श्रुत्योपासकः क्षेत्रज्ञः षष्ठीविभक्त्या प्रदर्शितः तदुपास्यो नारायणस्तु प्रथमया । एवं तुल्यप्रकरणे वाजसनेयिशाखावतां च श्रुतौ शब्दविशेषो जीवात्मपरमात्मनोः प्रतिपादनेऽभिहितः तथाहि

'यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मनि पुरुषो
हिरणमयो यथा ज्योतिरधूमम्' (अग्निरहस्यम् . १-१०-६) इति ।

इहान्तरात्मनीति सप्तम्यन्तेनान्तरात्मपदेनोपासकः शारीरः प्रोच्यते, पुरुषो हिरणमय इति प्रथमान्तपदाभ्यामुपास्यो नारायणः । अतः स एव परमोपास्य इति सिद्धान्तः ।

पुनस्तत्र सूत्रान्तरमाह- 

## स्मृतेश्च ॥१-२-६॥

'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' (गी. १५-१५) इति,

'यो मामेवमसंमूढो जानाति पुरुषोत्तमम् '(गी. १५-१९) इति,

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति,

'भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायय' (गी. १८-६१) इति,

'तमेव शरणं गच्छ' (गी. १८-६२)

इत्यादि, स्मृतिसमुदायादपि पूर्वोक्तप्रकरणे शारीर उपासकः नारायण उपास्यश्च ज्ञातव्य इति सिद्धान्तितम् । पुनराशङ्क्यन् सूत्रान्तरमारभते-

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निच्चाय्यत्वादेवं व्योमवच्च ॥१-२-७॥

अर्भकौकस्त्वं अल्पस्थानत्वं तद्व्यपदेशः तन्निवासिनोऽल्पत्वनिर्देशश्च । तथाहि

'एष म आत्मान्तर्हृदये'(छा. ३-१४-३) इति,

अणीयो हृदयनिवासेनाल्पस्थानत्वात् अणीयान् व्रीहेर्वा यवाद्वेत्यादिनाऽल्पस्वरूपनिर्देशाच्चेति हेतुद्वयात् अत्र प्रकरणे परमात्माभिधो नारायणो नाभिहितः, किन्तु जीवात्मैवेत्युच्यते चेन्न, ज्यायान्पृथिव्या इत्यादिना महत्वेनोपदिष्टस्य परमात्मनोऽप्युपासकाल्पस्थान-निचाय्यत्वात्; एवं परमात्माऽप्यणीयानभिहितः । अत्र दृष्टान्तः- भूतहृदयादिनिवासादणीयस्त्वेनोपास्यः । व्योमवच्च; यथा महद्व्योमापि सूचीपाशादिव्याप्तं सदल्पत्वेन दृश्यते, चकारोऽवधारणार्थः, तद्वदस्याणीयस्त्वं ज्यायस्त्वं च श्रूयते ।

'एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वेति, ज्यायान् पृथिव्या ज्यायान्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः'(छा. ३-१४-३)

इति उपासकशरीरनिवासेन तस्मिन्नुपगतदोषशङ्कां निवारयन् सूत्रान्तरमवतारयति-

## संभोगप्राप्तिरिति चेन्न, वैशेष्यात् ॥१-२-८॥

उपासकजीववत् परब्रह्मणोऽपि देहान्तर्गतत्वं प्राप्तम्, तेन तस्य जीववत् देहसंयोगसंजातसुखदुःखादेर्द्वन्द्वस्य यः संभोगः सम्यग्भुक्तिस्तस्य या प्राप्तिः सा संभोगप्राप्तिरित्युच्यते चेन्नैवम्, वैशेष्यात्-उभयोर्धर्मवैलक्षण्यात् । नहि देहान्तर्गतत्वं सुखदुःखादिद्वन्द्वभोगकारणम्; किन्तु शुभाशुभकर्माधीनत्वमेव । तद्धि अपहतपाप्मत्वादिधर्मवतो नारायणस्य न घटते; अल्पज्ञत्वगुणाधीनत्वादिधर्मवतो जीवस्य तु घटत एव ।

तथाहि श्रूयते स्मर्यते च

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' (मुण्ड-३-१-१ / श्वेता. ४-६) इति;
सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे,
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयानिति (भा. ११-११-६),
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति ।(गी. १३-२०)

एवं तयोः सुखदुःखादीनां भाक्त्वमभाक्त्वं च प्रतिपादितम् ।

अत्तधिकरणम् ॥१-२-२॥

## अत्ता चराचरग्रहणात् ॥१-२-९॥

'यस्य ब्रह्म च क्षत्रं चोभे भवतः ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स' (कठ.१-२-२५) इति श्रूयतेऽस्य विषयः कठवल्ल्याम् ।

इह ब्रह्मक्षत्रौदनोपलक्षितनिखिलचिदचिन्मिश्रप्रपञ्चस्यदधिधृतादिस्थानीयमृत्युरुपोपसेचनयुक्तकवलभोक्तृतया श्रूयमाणो नारायणोऽन्यो वेति संशयः । परमकारूणिकस्य सर्वानुग्राहकस्य सकलभक्षकत्वमनुचितम्; हिंसारूपं हि परप्राणविमोचनम्; हिंसाप्रवृत्तेः क्रोध एव मूलाङ्कुरः, क्रोधस्यामङ्गलगुणस्य मोह एव मूलकन्दः, तस्य सर्वसंहारनिदानस्य तम एव प्रकृतिः । अतस्तामसः सर्वसंहर्ता नाम, तत्त्वं नाम प्रावृतज्ञानादिमत्त्वान्निष्प्रकाशत्वं सर्वसंहर्त्तृ ब्रह्मेत्युक्ते तस्य नित्यशुद्धस्य निरुपाधिकमङ्गलादिगुणाकरस्य निःसंसारकलङ्कस्याज्ञानतमोमोहक्रोधादिकामङ्गलदोषसंकरप्रसंगः, स्वरूपलक्षणतया निर्णीतं सर्वज्ञत्वनित्यतृप्तत्वादिकमनर्थमेव स्यात्; तस्मात् ब्रह्मणोऽन्य एतादृशगुणः संहर्ता रुद्रनामा क्षेत्रज्ञो भवतीति पूर्वःपक्षः । सिद्धान्तस्तु परब्रह्मैव त्रिगुणाभिमानिविधिरुद्रपृथिव्यादिचराचरसहितासंख्यकोटिब्रह्माण्डसंहर्तृत्वेन श्रूयते, कुतः चराचरग्रहणात्, चराचरग्रहणेन प्रकृत्युत्पन्नमसंख्यकोटिब्रह्माण्डवृन्दमुपलक्ष्यते । यदुक्तं रुद्रस्य चराचरग्रहणोपलक्षितसकलाण्डसंहर्त्तृतया भोक्तृत्वं तदयुक्तम्; रजनीप्रलयजनितलोकदशकसंहरणरूपपरिच्छिन्नशक्तेः प्रकृतिकार्यसहोत्पन्नस्य तमः प्रचुरस्य प्राकृतप्रलयजनितसंहरणवश्यस्य पार्वतीपतेस्तस्य चराचरग्रहणोपलक्षितसकलब्रह्माण्डगणसंहरणसामर्थ्याभावात् । एवं च सत्येतल्लक्षणं नारायणसंज्ञे परब्रह्मण्येव संभवति । तथाहि

'पृथिव्यप्सु प्रलीयते' इत्यारभ्य 'महानव्यक्ते लीयतेऽव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तमः परे देवे एकीभवति' (सुबा.उ.२) इति-

अत्राक्षरशब्देन प्रधानपतिपुरुषो ज्ञेयः, तमःशब्देन महामायाख्यमूलप्रकृतिश्च परे स्वपतौ पुरुषे लीयते; स च पुरुषः देवे परमात्मनि- एवं पृथिव्यादिप्रकृतिपुरुषपर्यंतानां वस्तुमात्राणां लयस्थानं परं ब्रह्मैव । अतोऽत्तेत्युक्तम् ।

'ज्ञः कालकालो गुणि' (श्वेता. ६-१६) इत्यादिना कालस्याप्यत्तृत्वश्रवणात् ।

'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' ॥ (वि.पु. ६-४-३९) इति
'अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ।
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः । कालो गभीरस्य उत्तमपुरुषस्त्वम्'॥
(भा.११-६-१५) इति,

'तदा देवाश्च ऋषयो रजः सत्वतमोवशाः ।
ये ते सह विरिंचेन स्वकीयगुणकर्षिताः ॥
प्रविश्य तस्य जठरे शेरते दीर्घनिद्रया' । इति, (वा. मा. २५ – ४०)
'महदादेर्विकारस्य विशेषान्तस्य संक्षयः ।
सर्वस्यापि भवत्येव वासुदेवेच्छया ततः ॥ (वा. मा. २५ – ५१)
'यदा च मायापुरुषौ कालोऽत्यक्षरतेजसि ।
तदिच्छया तिरो यान्ति स त्वेको वर्तते प्रभुः'॥ (वा. मा. २५ – ५९)

इत्यादिस्मरणाच्च । अनेन प्रकारेण परमात्मनो नारायणस्य विश्वसंहारित्वरूपेण भोक्तृत्वं विज्ञायते, न तु तद्भक्षकतया । सूत्रार्थस्तु-ब्रह्मक्षत्ररूपौदनस्य अत्ता परमेश्वरः । अत्र ब्रह्मक्षत्रशब्दोपलक्षितस्य सचराचरस्यासंख्यकोटिब्रह्माण्डरूपस्य जगतो ग्रहणात् । श्रुतावुपसेचनं हि स्वयमद्यमानं सदन्यस्यापि भक्षणसाधनम् । अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसेच्यमानस्य सकलप्राणिमात्रस्याद्यत्वेन प्रतीयमानत्वात् ब्रह्मक्षत्रग्रहणेन सचराचरमसंख्यकोटिब्रह्माण्डरूपं जगदेवोपलक्ष्यते ।

## प्रकरणाच्च ॥१-२-१०॥

'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (कठ. १-२-२२),
'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन,
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनुं स्वाम्' (कठ. १-२-२३) इति,

स्वां तनुं वृणुते-निजां मूर्तिं ददातीत्यर्थः । एवं नारायणस्यैव प्रकरणम्; अतश्च परं ब्रह्म नारायणः सर्वसंहर्ता नान्य इति सिद्धम् । इहाधिकरणे सर्वसंहर्तृत्वलक्षणेन सिद्धस्य नारायणस्य द्वा सुपर्णेत्यादिप्रसिद्धं स्वविभूतिजीवसाहचर्यमभिव्यञ्जयितुमधिकरणारम्भः-

### गुहाप्रविष्टाधिकरणम् ॥१-२-३॥

## गुहां प्रविष्टवात्मानौ हि तद्दर्शनात् ॥१-२-११॥

'ऋतं पिबन्तौ सुकृतस्य लोके गृहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः'॥ (कठ. १-३-१)

इति श्रूयतेऽस्य विषयः।

अत्र सुकृतस्य कर्मण ऋतं फलं पिबन्तौ भोक्तारौ छायातपाविव परस्परविलक्षणौ कौचित् श्रूयेते; तावेतौ बुद्धिजीवौ जीवनारायणौ वेति सन्देहः। बुद्धिजीवौ ताविति पूर्वः पक्षः। कुतः, ऋतं पिबन्ताविति भोक्तृत्वावगमात्; नारायणस्य न भोक्तृत्वम्, अनश्नन्नन्योऽभिचाकशीतीति दर्शनात्, बुद्धिजीवयोर्भोक्तृत्वं प्रसिद्धमेव। किञ्च जीवनारायणोश्चेतनरूपयोः छायातपवदतीव वैलक्षण्यं नास्ति; बुद्धेरचेतनत्वाच्छायावदस्ति जीवाद्वैषम्यम्; अतो बुद्धिजीवाविति प्राप्ते ब्रूमः -लोके ब्रह्माण्डगुहायां जीवानां निःश्रेयसाय रामकृष्णाद्यसंख्यावतारैर्नारायणः प्रविष्टः-स्वकर्मजन्यदेवमनुष्यादिकमनीयदेहैः स्थितः तावुभौ सुकृतस्य ऋतं पिबन्तौ; तत्र नारायणो निरन्नोऽपि सुष्ठुप्रकारेण कृतस्य-स्वभक्तजनार्पणीकृतस्य कमनीयनानाविधवस्त्रभोज्यान्नादेः ऋतं-स्वसंबन्धेन सत्यं कुर्वन् सन् तत्पिबन् परमभक्त्यर्पितत्वादमृतवद्भुञ्जानो वर्तते; सुकृतिजीवस्तु सुकृतस्य कर्मणो यज्ञादेः ऋतं फलं देवादिशरीरैः पिबन् भुञ्जानो वर्तते; तौ च कथंभूतौ परमे परार्द्धे द्विपरार्द्धावसाने प्राकृतप्रलये इति यावत्, तौ गृहां प्रविष्टौ; तत्र नारायणः स्वभक्तजनैः सह ब्रह्मपुररूपकंदरां प्रविष्टः, जीवस्तु मूलमायोदरदरीं प्रविष्टः। अनयोश्छायातपावितिनिर्देशस्तु अज्ञत्वरूपछायाप्रचुरत्वात् आतपरूपधर्मसमानज्ञानप्रकाशरूपोभयधर्मवत्वाच्च वेदितव्यः इति व्याख्यातार्थश्रुतौ तयोरुभयोर्मध्ये एकस्य निरन्नस्यापि भक्तमनोरथपूर्त्यै च्छया तदर्पितान्नादिभोक्तृत्वावगमात्

आत्मारामोऽप्यरीरमत्' (भा. १०-२९-४२) इति

भोक्तृत्वस्मरणाच्च स्वतन्त्रतया गुहाप्रवेशश्रवणात्। अन्यत् च

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्' (कठ. १-२-१२) इति गृहाप्रवेशदर्शनात्, इतरस्य विषयभोजनशीलस्य तु कर्मपारवश्यगृहाप्रवेशभोक्तृत्वावगमात् उभयोश्छायातपवद्वैलक्षण्यं बोध्यम्; अतोऽत्र न बुद्धिजीवावभिहितौ। यदुक्तं नारायणस्य न भोक्तृत्वं तदुक्तप्रकारेणायुक्तम्। सिद्धान्ते तु जीवनारायणावेव। यदुक्तं तयोर्न वैलक्षण्यमिति तत्र यतो

'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ. २-२-१३ / श्वेता. ६-१३) इत्यादिश्रुत्या नित्यत्वचेतनत्वादिना जीवनारायणयोः साम्येऽपि वैषम्यमनादिमलसंबन्धभावाभावाभ्यां संभवति।

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता. १-९)

इत्यादिश्रुत्या ज्ञत्वाज्ञत्वस्वातन्त्र्यास्वातन्त्र्यादिधर्मवैषम्यं चावगम्यते। ननु कथमेतयोः शरीरसंबन्धे समानेऽपि कस्यचिदज्ञत्वादिकानर्थसंबन्धः कस्यचिदनर्थाभाव इति न शङ्क्यम्; सुखदुःखयोर्नैकाश्रयत्वं प्रयोजकम्, किन्तु स्वातन्त्र्याऽस्वान्त्र्यमेव। तथाहि श्रुतिः

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः,

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोक' (मुण्डक. ३-१-२) इति,

अस्याः सांप्रदायिकोऽर्थः-जीवोऽयमनादिना कर्मनिगडेन बद्धस्तत्तत्फलभोगानुगुणमायामय-बहुकलेवरप्रविष्टो दुर्वारतापसंघातमनुभवन्ननीशया पारवश्येन तद्व्यपोहितुमकुशल एव मुह्यमानः शोचति-महामोहनिबन्धनशोकजलधिमग्नो वर्तते; जुष्टं महामुक्तैः सेवितमन्यं क्षराक्षरपुरुषभिन्नम् ईशं सर्वनियन्तारं राधालक्ष्मीपतिं यदाऽस्य प्रसादेन पश्यति-अपरोक्षेण जानाति तदाऽस्य महिमानं निरतिशयम् अपहतशोकः प्राप्नोति। अतःस्वतन्त्रस्य नारायणस्यानादिमुक्तस्य शरीरसंबन्धेऽपि जीववत् न तद्गतदोषापत्तिः। तस्माज्जीवनारायणौ गुहागताविति निश्चीयते।

सूत्रार्थस्तु-आत्मानौ आत्मशब्दवाच्यौ जीवात्मपरमात्मानौ स्थितिकाले ब्राह्मणादिदेहे हृदयगुहां नियन्तृनियम्यभावेन प्रविष्टौ। तत्र परमात्मा दिव्यमूर्त्या स्वधामस्थः सन् हृदयगुहां प्रविष्टे जीवे विकसितान्तर्यामिशक्त्या प्रविष्टः सन्नियमयति; स्वयं तु ब्रह्माण्डगुहायां स्वभक्तसुखार्थे रामकृष्णादिरूपैरपि विचरति;, प्रलये तु तयोर्मध्ये एकः स्वभक्तैः सह ब्रह्मपुररूपां गुहां प्रविष्टः सन् महामायोदररूपां गुहां इतरस्मिन् संकुचितान्तर्यामिशक्त्या प्रतीयते, इति तात्पर्यार्थेन तौ गुहां प्रविष्टौ; तद्दर्शनात्-तयोः ऋतं पिबन्तौ सुकृतस्येति तं दुर्दर्शं गूढमनुप्रविष्टमित्यादिषु गुहाप्रवेशदर्शनादिति। पुनस्तमेव निर्णयमाह-

## विशेषणाच्च ॥१-२-१२॥

तयोर्विशेषणात् पृथक्पृथग्विशेषणदर्शनात् जीवनारायणावस्मिन् प्रकरणे भिन्नविशेषणैर्विशिष्येते

'न जायते म्रियते वा विपश्चित् (कठ.१-२-१८) इत्यादिना जीवः,

'अणोरणीयान् (कठ.१-२-२०/श्वेता.३-२०)

इत्यादिना नारायणः। एतद्विशेषणद्वयं जीवबुद्धिपक्षे कथं संभवति ? ततो जीवनारायणावेव गृहां प्रविश्य प्रेर्यप्रेरकभावेन शरीरशरीरिभावेन च परस्परमाश्रिताविति निर्णयः। हृदयगुहान्तर्वर्तितयोपास्यस्य नारायणस्य इहोपासनस्थानान्तरमुच्यते -

अन्तराधिकरणम् ॥१-२-४॥

## अन्तर उपपत्तेः ॥१-२-१३॥

छान्दोग्ये श्रूयतेऽस्य विषयः,

'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्म'(छां. ४-१५-१) इत्यादि। इहामृतत्वादिलक्षणोऽक्ष्यन्तः श्रूयमाणः पुरुषो नारायणो वान्यो वेति संशये नारायणादन्यः श्रुतो न नारायण इति वदामः। नारायणस्य

'दहरोऽस्मिन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्यम्' (छां. ८-१-१)
इत्यादिषु हृदयाकाशे एव सन्निधानश्रवणात्, जीवस्य तु विविधरूपग्रहणाय चक्षुरिन्द्रियप्रवेशोऽस्ति मनः संबन्धात्; स एवाक्षिपुरुषः अथवा छायापुरुष एवाक्षिपुरुष इति प्राप्ते निरूपयामः नारायण एवाक्ष्यन्तः पुरुष इति निरुपाधिकामृतत्वाभयत्वादीनामस्मिन्नेवोपपत्तेः । यदुक्तमत्यन्तः स्थितिर्नारायणस्य न श्रुतेति तत्राह-

## स्थानादिव्यपदेशाच्च ॥१-२-१४॥

'यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरः यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयति एष त आत्मान्तर्याम्यमृतः' (बृ. ५-७-२२)

इति श्रुत्या चक्षुः स्थितिनियमनादिकं नारायणस्य व्यपदिश्यते। अतो नारायण एवायमक्षिपुरुषो विज्ञायते; छायापुरुषपक्षे पुनरनुपपत्तिमाह-

## सुखविशिष्टाभिधानादेव च ॥१-२-१५॥

'कं ब्रह्म खं ब्रह्म' (छां. ४-१०-५)

इति पूर्वमस्य सुखविशिष्यतयाभिधानादेवायं नारायणः ।
नहि छायापुरुषे सुखसंभवः । यदुक्तमक्षिपुरुषस्य जीवरूपत्वं तत्राह-

## अत एव च स ब्रह्म ॥१-२-१६॥

यत एव भवभयभीताय उपकोसलाय ब्रह्मजिज्ञासवे कं ब्रह्म खं ब्रह्मेत्युपक्रम्योपदिष्टम्;
'यद्वाव कं तदेव खं यदेव खं तदेव कम्' (छां. ४-१०-५) इति;
अत एव खशब्दाभिधेयः आकाशः परमेव ब्रह्म; किमीदृशोपपत्तिरस्ति जीवस्य ? नहि जीवे निरतिशयसुखसंभवः । अतो यदेव पूर्वमपरिछिन्नसुखरूपतया प्रकृतं ब्रह्म तदेवाक्ष्याधारतया प्रतिपाद्यत इति अक्ष्यन्तः पुरुषो नारायणः । पूर्वपक्षे पुनरियमप्यनुपपत्तिरित्याह-

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥१-२-१७॥

श्रुतमुपनिषदि कं आनन्दमयं ब्रह्म यैस्तेषां श्रुतब्रह्मस्वरूपाणामधिगन्तव्या या अर्चिरादिगतिस्तदाख्यमार्गस्याक्षिपुरुषं श्रुतवतः

'अर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न' (छा. ४-१५-५) इत्यारभ्य

'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमम्मानवमावर्तन्नावर्तन्ते' (छा. ४-१५-५)

इत्यन्तेऽभिधानात् नासौ जीवश्छायापुरुषो वा किन्तु नारायण एव ।

## अनवस्थितेरसंभवाच्च नेतरः ॥१-२-१८॥

अनवस्थितेः अक्षिणि प्रतीयमानानां प्रतिबिंबादीनां नियमेन तस्मिन्ननवस्थानात् तेषु निरुपाधिकानाममृतत्वादिधर्माणां असंभवाच्च नेतरः- नारायणादितरः छायापुरुषो जीवश्च देवताविशेषश्चाक्षिपुरुषो भवितुं नार्हति; प्रतिबिम्बभूतस्य छायापुरुषस्याक्षिणि न नियमेन स्थितिसंभवः, जीवस्यापि सकलेन्द्रियव्यापारयोग्यत्वाय समस्तेन्द्रियकन्दरूपे स्थाने स्थितिरस्ति; अत एकस्मिन्नक्षिणि सदैव नियता नावस्थितिः निद्रादिषु तदभावात्; देवताविशेषस्य च

'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' (बृ. ७-५-१)

इति किरणद्वारेणावस्थानवाक्यात् स्थानान्तरे स्थितस्यापीन्द्रियाधिष्ठानोपलब्धिः, न च तस्य साक्षादक्षिण्यवस्थितिः, किन्तु किरणद्वारेणैव । एतेषां सर्वेषां निरुपाधिका अमृतत्वादयो न घटन्ते; तस्मादक्षिपुरुषो नारायण एवेति सिद्धम् ।

तस्यादित्यमण्डलपुरुषहृदयादिषूपासनार्थमवस्थानं प्रतिपादितम्; पुनस्तत्सर्वत्र प्रतिपादयन्निदम-धिकरणमवतारयति-

### अन्तर्याम्यधिकरणम् ॥१-२-४॥

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥१-२-१९॥

अन्तर्यामिब्राह्मणेऽन्यत्र चास्य विषयः श्रूयते,

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' (बृ. ५-७-७)

इत्यादिश्रुतिभिः काण्वमाध्यन्दिनवाजसनेयिनां प्रतिपक्षमुदितेषु पृथिव्यादिसर्ववस्तुष्वन्तर्यामितया श्रूयमाणः परब्रह्माख्यनारायणो वा जीवो वा वैराजाभिधेश्वरो वा प्रधानप्रकृतिर्वा मूलप्रकृतिर्वाऽक्षरं ब्रह्म चेति सन्देहः । स्वोपार्जितविचित्रकर्मविचित्रफलभोगाय सकलभूतेन्द्रियानुप्रवेशो जीवस्य युज्यते, सकलचराचरकारणतया सर्वभूतानुप्रवेशो वैराजपुरुषस्य युक्तः अथवा महदादिरूपेण परिणतत्वात् प्रधानस्य सर्वव्यापकत्वमुचितम् ।

'महानव्यक्ते लीयतेऽव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते' (सुबा. उ. २)

इत्यादिना महत्तत्वाव्यक्ताख्यप्रधानाक्षराख्यपुरुषाणां तमःशब्दवाच्यायां मूलप्रकृतौ लयोऽभिहितः। तस्माद्धेतोस्तस्या एव तेषामुत्पत्तिः श्रुतिस्मृतिषु प्रदर्शिता । अतस्तस्या मूलप्रकृतेः सर्वत्रानुप्रवेशो युक्तः ।

'अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः,
प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम्' (भा. ३-२६-३) इति,
'लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः' (भा. ३-११-४०),

'तदाहुरक्षरं ब्रह्म सर्वकारणकारणमिति स्मरणेन' (भा. ३-११-४१),

'तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना।

सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि' ॥ (वा. मा. २४ - ५)

'तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने' (वा. मा. २४ - ६) इति स्कान्दोक्त्या च

'तमःपरे'(सुबा.उ.२)

इति श्रुत्या चाक्षरब्रह्मणो मुख्यतया सर्वकारणत्वोक्तेस्तस्य सर्वानुप्रवेशः संघटते एव।

'अक्षरात्परतः परः' (मुण्ड.२-१-२) इति,

प्रकृतिपुरुषयोः परस्य (भा.११-६-१४)इति,

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः'(गी.१५-१८)

इत्यादिवाक्यैः सर्वोत्कृष्टत्वादस्पृष्टसकलविकारस्य परब्रह्माख्य-नारायणस्य विकाररूपप्रपञ्चानुप्रवेशो न घटते। ततो नारायणमन्तरेण जीवादिष्वेकतमः स्यादन्तर्यामीति पूर्वपक्षे प्राप्ते ब्रूमः-पृथिव्याद्यन्तर्यामितया श्रूयमाणो नारायण एव सर्वान्तरात्मत्वादितद्धर्मव्यपदेशात्।

'अन्तः प्रविष्टः शास्ता जनानाम्' (तै.आर. ३-११-१,२) इति,

'तत्सृष्ट्वा तदनुप्राविशत्' (तै. उ.आन.अनु. ६-२) इति,

'पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु य' (भा. १०-८७-१७)

इत्यादिषु श्रुतिस्मृतिषु चापि नारायणस्यैव सर्वात्मतयानुप्रवेशदर्शनात्

'स त आत्मान्तर्याम्यमृत' इति प्रतिश्रुत्यभ्यस्यमानः सर्वात्मा नारायण एवामृत इत्युच्यते।

'ज्ञः कालकालो' (श्वेता. ६-१६) इति,

'एतदमृतमभयम्' (छा. ४-१५-१) इति, श्रवणात्

'नारायणः परं ब्रह्म आत्मा नारायणः परः' (तै.महा. ११-४)

इत्यादिना समस्तचेतनाचेतनपरत्वं नारायणस्यैव श्रूयते। नारायण एवेदं सर्वमित्यादिषु सर्वविकारिवस्तुप्रवेशे कथितेऽपि तस्य विकारस्पर्शलेशोऽपिनास्ति; अतः सर्वात्मा नारायण एवेति सिद्धान्तः। सूत्रार्थस्तु अधिदैवशब्देन भूम्यादितत्वाभिमानिनो देवा ग्राह्याः। अधिलोकशब्देन भूम्यादयश्च। आदिशब्देन तत्स्थजनाश्च। तेषु अधिदैवाधिलोकादिषु

'यः पृथिव्यां तिष्ठन्' (बृ. ५-७-७)

इत्यादिश्रुतिभिः पृथिव्यादिष्वधिदैवादिपदाभिहितेषु गदितो योऽन्तर्यामी स नारायणः। कुतः, तद्धर्मव्यपदेशात् तस्य धर्माणां सकलान्तरत्वसमस्तवस्तुविलक्षणत्वसर्वशरीर-त्वसर्वनियमनत्वसर्वात्मत्वामृतत्वादीनां व्यपदेशादिति। जीवादीनामन्तर्यामित्वमुचितमिति यच्छङ्कितं तत्परिहरन् सूत्रत्रिकं निगदति-

त्मनोंतरोयमात्मानवेदेतिश्रुतेः सर्वभूतानां हृद्देशेर्जुन तिष्ठतीति मयाततमिदंसर्वंजगदव्यक्तमूर्त्तिनेति यतःप्रवृ
त्तिर्भूतानांयेनसर्वमिदंततमित्यादिवाक्येर्जीवादेनंतर्यामिणांभेदेनाधीयते। अतोनारायणस्यैवसर्वांतर्यामि
त्वंनामैषांजीवादीनामितिसिद्धं इत्थंजीवादिषुचतुर्षुपूर्वपक्षाडुपगतमंतर्यामित्वंनिषिध्येदानीमक्षरब्रह्मण
पगतंतन्निषेद्धुंतृतीयमधिकरणमवतारयति।। अदृश्यत्वादिगुणको धर्मोक्तेः। २१। अथपरायया तदक्षरम
धिगम्यतेयत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मंतदव्ययंयद्भूतयो
निंपरिपश्यंतिधीराइत्यादिश्रूयतेस्यविषयः अत्राक्षरशब्देननिर्दिष्टमक्षरब्रह्मवापरब्रह्मसंज्ञोनारायणोवेति
संदेहः अक्षरब्रह्मेतिपूर्वःपक्षः कुतः अदृश्यत्वादिधर्माणांनिरवयवेतस्मिन्नेवसंभवात्। अतोऽक्षरशब्द
वाच्यमक्षरंब्रह्मैवेतिप्राप्तेब्रूमः।। अदृश्यत्वादिगुणकमक्षरब्रह्मभवतुनामतथापितदक्षरमधिगम्यते●स्य
नेनमुमुक्षुभिरधिगम्यंप्राप्यंज्ञेयंचयद्भूतयोनिंपरिपश्यंतिधीराइतिधीराधीमतामग्रेसराःसंकर्षणादिनिर्मु
क्ताःशुकादयोमहामुक्ताश्चभूतयोनिंसर्वकारणंयत्पश्यंतीतितात्पर्यार्थेनतेषामुपास्यतयाप्राप्यंज्ञेयंदर्शनीयं
चसर्वकारणंपरब्रह्मैवेतिसिद्धांतः।। आत्मावारेद्रष्टव्यःश्रोतव्योनिदिध्यासितव्यइतिश्रवणात्अक्षरब्रह्मपर

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥१-२-२०॥

सांख्यस्मृत्या प्रोक्तं स्मार्त्तं स्मार्तशब्देनाभिहिता प्रधानप्रकृतिर्मूलप्रकृतिश्चैतद्द्वयमन्तर्यामीति न श्रुतं, कुतः "अतद्धर्माभिलापात्" -तस्य परमात्मनो ये धर्मास्तेषाभिलपनं श्रुतिभाषणं स्मार्ते नास्ति, अतोऽन्तर्यामी नारायण एवेति विज्ञायते। शारीरो विराट् शरीराभिमानी पुरुषोऽपि नान्तर्यामी; तस्मिन्, सर्वाण्डनियामकत्वादिपरमात्मधर्मानुपलब्धेः। जीवश्च न भवतीत्याह-

## उभयेऽपि हि भेदेनैनमधीयते ॥१-२-२१॥

उभये काण्वा माध्यन्दिनाश्चोभयशाखिनः अथवा उभये एते श्रुतिपाठकाः स्मृतिकाराश्चेति केचित्

'यो विज्ञाने तिष्ठन् विज्ञानमन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं विज्ञानमन्तरो यमयती'ति, 'य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद'(बृ. ५-७-२६) इति,
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (गीता. १८-६१) इति,
'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' (गीता. ९-४) इति,
'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्' (गीता. १८-४६)

इत्यादिवाक्यैर्जीवादेनमन्तर्यामिणं भेदेनाधीयते; अतो नारायणस्यैव सर्वान्तर्यामित्वं नान्येषां जीवादीनामिति सिद्धम्। इत्थं जीवादिषु चतुर्षु पूर्वपक्षादुपगतमन्तर्यामित्वं निषिध्येदानीमक्षरब्रह्मण्युपगतं तन्निषेद्धुं तृतीयमधिकरणमवातारयति-

### अदृश्यत्वादिगुणकाधिकरणम् ॥१-२-५॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥१-२-२२॥

'अथ परा यया तदक्षरमधिगम्यते', यत्तदद्दश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'(मुण्डक. १-१-५,६) इत्यादि श्रूयतेऽस्य विषयः। अत्राक्षरशब्देन निर्दिष्टमक्षरब्रह्म वा परब्रह्मसंज्ञो नारायणो वेति सन्देहः। अक्षरब्रह्मेति पूर्वः पक्षः। कुतः, अदृश्यत्वादिधर्माणां निरवयवे तस्मिन्नेव संभवात्। अतोऽक्षरशब्दवाच्यमक्षरं ब्रह्मैवेति प्राप्ते ब्रूमः - अदृश्यत्वादिगुणकमक्षरब्रह्म भवतु नाम, तथापि

'तदक्षरमधिगम्यते' (मुण्डक. १-१-५)

इत्यनेन मुमुक्षुभिरधिगम्यं प्राप्यं ज्ञेयं च

'यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्डक. १-१-६)

इति धीरा धीमतामग्रेसराः संकर्षणादिनित्यमुक्ताः शुकादयो महामुक्ताश्च भूतयोनिं सर्वकारणं यत्पश्यन्तीति तात्पर्यार्थेन तेषामुपास्यतया प्राप्यं ज्ञेयं दर्शनीयं च सर्वकारणं परब्रह्मैवेति सिद्धान्तः।

मोपास्यतयाज्ञेयाष्टमिति विज्ञायते ॥ अदृश्यत्वादयोगुणाः परब्रह्मण्यपि संभवति तथा हि अणोरणीयान्महतो
महीयानिति योऽक्षरे तिष्ठन्नक्षरमंतरो यमक्षरं न वेद यस्याक्षरं शरीरं योऽक्षरमंतरो यमयति स त आत्मांतर्याम्यमृत इ
त्यादिना परब्रह्मसंज्ञस्य परमात्मनः अदृश्यत्वादिगुणकेतस्मिन्नक्षरब्रह्मणि तन्नियमनार्थमतिशायसूक्ष्मस्व
पेणास्थितस्तुक्तेस्तस्मादप्यधिकतया अदृश्यत्वादिगुणकं परब्रह्म विज्ञायते अचक्षुःश्रोत्रं तदपाणिपादमित्युक्ति
स्तु प्राकृतावयवनिषेधपरा दिव्यावयवप्रतिपादनपरा च ॥ नन्वेवं सत तयुक्तास्ते भक्ता स्त्वापर्युपासते ये चा
प्यक्षरमव्यक्तमित्यादिना अक्षरब्रह्मणोऽप्युपासनविधानोक्तेस्तज्ज्ञेयं प्राप्यं चाप्यवगम्यते अतः कथं तस्त्राप्य
त्वाद्यनर्हमिति चेच्छृणु निरवयवाक्षरब्रह्मोपासकास्तु ब्रह्मस्वरूपभूते तस्मिन्निरवयवतया तदेकेन स्थिताः
अतस्तत्र सदा स्थितस्य दिव्यविग्रहस्य परब्रह्माभिधपुरुषोत्तमस्यानवधिकातिशयस्वरूपानंदं निरतिशयं पार्थि
द्रलक्षणं चैतेनानुभवंति अतस्ते कैवल्यार्थिनो मंदभाग्याः तथा हि श्रूयते ततो भूय इव ते तमो य उ विद्यायां रता
इति अस्याः सांप्रदायिकोऽर्थः इति वितर्केयेन रा ॥ ततो ऽन्यस्यां विद्यायां निरवयवाक्षरात्मज्ञाननिष्ठायां रताः आ
सक्ताः केवलं निरवयवाक्षरात्मस्वरूपमुपासते इत्यर्थः ते परमात्मैकांतोपासनहीनाः अमानित्वादिसाधनयु

'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' (बृ.४-४-५/६-५-६) इति श्रवणान्नाक्षरब्रह्म परमोपास्यतया ज्ञेयाद्यर्हमिति विज्ञायते । अदृश्यत्वादयो गुणाः परब्रह्मण्यपि संभवन्ति । तथाहि

'अणोरणीयान्महतो महीयान्'(कठ.१-२-२०/श्वेता.३-२०) इति

'योऽक्षरे तिष्ठन्नक्षरमन्तरो यमक्षरं न वेद यस्याक्षरं शरीरं योक्षरमन्तरो यमयति स त

'आत्मान्तर्याम्यमृत' (सुबा.उ.७)

इत्यादिना परब्रह्मसंज्ञस्य परमात्मनः अदृश्यत्वादिगुणके तस्मिन्नक्षरब्रह्मणि तन्नियमनार्थमतिशय-सूक्ष्मरूपेण स्थित्युक्तेस्तस्मादप्यधिकतयाऽदृश्यत्वादिगुणकं परब्रह्म विज्ञायते ।

'अचक्षुःश्रोत्रं तदपाणिपादम्' (मुण्ड.१-१-६)

इत्युक्तिस्तु प्राकृतावयवनिषेधपरा दिव्यावयवप्रतिपादनपरा च । ननु

'एवं सततयुक्तास्ते भक्तास्त्वां पर्युपासते, ये चाप्यक्षरमव्यक्तम्'(गी.१२-१)

इत्यादिनाऽक्षरब्रह्मणोऽप्युपासनविधानोक्तेस्तज्ज्ञेयं प्राप्यं चाप्यवगम्यते । अतः कथं तत्प्राप्यत्वाद्यनर्हमिति चेच्छृणु निरवयवाक्षरब्रह्मोपासकास्तु ब्रह्मसुषुप्तिभूते तस्मिन्निरवयतया तदैक्येन स्थिताः, अतस्तत्र सदास्थितस्य दिव्यविग्रहस्य परब्रह्माभिधपुरुषोत्तमस्यानव-धिकातिशयस्वरूपानन्दं निरतिशयं पार्षदत्वसुखं च ते नानुभवन्ति। अतस्ते कैवल्यार्थिनो मन्दभाग्याः । तथाहि श्रूयते

'ततो इव ते तमो य उ विद्यायां रताः' (ईशा. ९) इति;

अस्याः सांप्रदायिकोऽर्थः-उ इति; वितर्के ये नराःततोऽन्यस्यां विद्यायां निरवयवाक्षरात्मज्ञाननिष्ठायां रताः आसक्ताः केवलं निरवयाक्षरात्मस्वरूपमुपासते इत्यर्थः, ते परमात्मैकान्तोपासनहीनाः अमानित्वादिसाधनयुक्ताः केवलात्मज्ञानवन्तः भूयो बहुतरं तम इव जीवेश्वरब्रह्मपरब्रह्मणां परस्परात्यन्तोत्कृष्टत्वनिकृष्टत्वविवेकाभावादज्ञानसदृशं निरवयवं घनतेजोमयं ब्रह्म सुषुप्तिभूतमक्षरात्मस्वरूपं-प्रविशन्ति निरवयवतया तदैक्येन स्थिता भवन्ति; नतुतत्रस्थपरमेश्वरपार्षदत्वमुपगता इति । स्मर्यते च

'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्' (भा. १-५-१२)

इत्यादिवचनैः अक्षरब्रह्मोपासकानां कनीयस्त्वं परब्रह्मोपासकानां श्रेष्ठत्वं चाभिहितम्; अतोऽत्र प्रकृतमक्षरशब्दाभिधेयं परब्रह्मैव विज्ञायते । सूत्रार्थस्तु अदृश्यत्वादिगुणकः परब्रह्मसंज्ञः परमात्मैव, नाक्षरब्रह्म; कुतः धर्मोक्तेः अदृश्यत्वादिगुणवाक्यादुत्तरत्र यस्सर्वज्ञः सर्वविदित्यादिना तस्यैव सर्वज्ञत्वादिधर्माणामुक्तेः । तथान्यत्रापि श्रुतिस्मृतिषु मुमुक्षुणां मुक्तानां चापि ज्ञेयत्वप्राप्यत्वोपास्यत्वदर्शनीयत्वादिपरमात्मधर्माणामुक्तेः । तथाहि श्रूयते स्मर्यते च

'यतो वा इमानि भूतानीत्यारभ्य तद्विजिज्ञासस्व तद्ब्रह्म' (तै.उ.भृ.अनु.१) इति,

तं ह आत्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं प्रपद्ये (श्वेता. ६-१८) इति,

क्ताः केवलात्मज्ञानवंतः भूयोबहुतरंतमश्ववजीवेभ्यःब्रह्मपरब्रह्मणांपरस्परासंतोत्कृष्टत्वनिकृष्टत्वविवेकाभावा
द्ज्ञानसहस्रांनिरवयवंघनतेजोमयंब्रह्मकश्रुतिभूतमक्षरात्मस्वरूपंप्रविशंतिनिरवयवतयातदैक्येनस्थितामवं
तिनतुतत्रस्यपरमेश्वरपार्षदत्वमुपगताइतिस्मर्यतेचनैष्कर्म्यमप्यच्युतभाववर्जितंनशोभतेज्ञानमलंनिरंजनमि
त्यादिवचनैः अक्षरब्रह्मोपासकानांकनीयस्त्वंपरब्रह्मोपासकानांश्रेष्ठत्वंचाभिहितं अतोत्रप्रकृतमक्षरशब्द
ह्वाभिधेयंपरब्रह्मैवविज्ञायतेसूत्रार्थस्तुअदृश्यत्वादिगुणकःपरब्रह्मसंज्ञःपरमात्मैवनाक्षरब्रह्मकुतःधर्मोक्तेः
अदृश्यत्वादिगुणवाक्यउत्तरत्रयःसर्वज्ञःसर्वविदित्यादिनातस्यैवसर्वज्ञत्वादिधर्माणामुक्तेःतथान्यत्रापिश्रुति
स्मृतिषुमुमुक्षूणांमुक्तानांचापिज्ञेयत्वप्राप्यत्वोपास्यत्वस्तुत्यत्वादिपरमात्मधर्माणामुक्तेःतथाहिश्रूयतेस्म
र्यतेचयतोवाइमानिभूतानीत्यारभ्यतद्विजिज्ञासस्वतद्ब्रह्मेतितंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्येइति
तमात्मस्थंयेनुपश्यंतिधीरास्तेषांशांतिःशाश्वतीनेतरेषामितियोमामेवमसंमूढोजानातिपुरुषोत्तमंससर्ववि
तिमामेवयेप्रपद्यंतेमायामेतांतरंतितेइतितमेवचाद्यंपुरुषंप्रपद्येइतिमांचयोव्यभिचारेणभक्तियोगेनसेवतेस
तिआत्मारामाश्चमुनयोनिर्ग्रंथाअप्युरुक्रमेकुर्वंत्यहैतुकींभक्तिमित्थंभूतगुणोहरिरितिब्रह्मभूतःप्रसन्नात्मान

'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरषाम् (कठ. २-२-१३) इति,
'यो मामेवमसंमूढो जानाति पुरुषोत्तमम्' (गीता. १५-१९),
'स सर्वविद्' (बृह.५-७-४) इति,
'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' (गीता. ७-१४) इति,
'तमेव चाद्यं पुरुषं प्रपद्ये' (गीता. १५-४) इति,
'मां च योऽव्यभिचारेण भक्तियोगेन सेवते' (गीता. १४-२६) इति,

'आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरूक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' ॥ (भा. १-७-१०) इति,
'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' ॥(गीता. १८-५४) इति,

अत्र किमागतं परमात्मोपासनेन । प्राप्तान्तर्यामित्वधर्मलेशेऽक्षरपुरुषे वैराजपुरुषे च न स्वतोऽन्तर्यामित्वधर्मः, अतस्तौ नान्तर्यामिणौ स्यातां किन्तु स्वतंत्रतया तु सर्वान्तर्यामी परमात्मैवेति सिद्धम् । पुनरत्र जीवाक्षरब्रह्मणोरनुपत्तिमाह-

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥१-२-२३॥

परमात्मनः सकाशात् जीवाक्षरब्रह्मणोर्यौ विशेषणभेदौ तयोः श्रुतिस्मृतिषु व्यपदेशाभ्यां हेतुभ्यां इतरौ परमात्मनोऽन्यौ जीवात्मा क्षरब्रह्म च तावुपास्यतया ज्ञेयत्वप्राप्यत्वादिधर्मकौ न स्तः । तथाहि

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता. १-९)

इत्यादिना सर्वज्ञत्वेशत्वादिगुणवतो नारायणादज्ञस्य कर्मपरवशत्वेनानीशस्य जीवस्याज्ञानीशादिविशेषणभेदव्यपदेशश्रवणात् ।

'परात्परतरो ब्रह्म तत्परात्परतो हरिरि'ति,
'अक्षरात्परतः परः' (मुण्ड.२-१-२)

इत्यादिनाऽक्षरपरतयाभिहितान्नारायणात् अक्षरब्रह्मसंज्ञस्य ब्रह्मपुरस्थानस्य ब्रह्माक्षरादिविशेषणभेदव्यपदेशश्रवणाच्च ताभ्यामुत्तमो ज्ञेयत्वादिधर्मकश्च परमात्मान्य एवेति निश्चीयते । तथाहि स्मर्यते

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (गी.१५-१७) इति,
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तम' (गी.१५-१८) इति ।

इदानीं प्रकृतस्य परमात्मनोऽप्राकृतपुरुषाकृतिं प्रतिपादयितुमधिकरणमारभ्यते-

रूपोपन्यासाधिकरणम् ॥१-२-६॥

## रूपोपन्यासाच्च ॥१-२-२४॥

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१) इति,

'तमाहुरग्र्यं पुरुषं पुराणम्' (श्वेता. ३-१९) इति,

'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' (कठ.१-३-११)

इत्यादिश्रुतिवाक्यकलापः श्रूयतेऽस्य विषयः।

अत्रानादिसिद्धप्रकृतिजन्याकाररहितदिव्याकारतया श्रूयमाण आत्मशब्दवाच्यः पुरुषः किं परमात्मवासुदेवादिनामाभिधेयो नारायणो वा प्रकृत्यधिष्ठाता पुरुष इति सन्देहः।

पूर्वपक्षन्याये तु प्रकृत्यधिष्ठाता पुरुष इत्युच्चते; कुतः, येनेक्षितायाः प्रकृतेर्विराडादिसकलचराचरोत्पत्तिश्रवणात्। अतोऽनादिसिद्धदिव्यपुरुषाकारः प्रकृत्यधिपतिः पुरुष एवाभिहित इति प्राप्ते सिद्धान्तं ब्रूमः, प्रकृत्याधिष्ठातुः पुरुषस्य सप्रकृतिकस्य तु परमात्मतेजसि लीनत्वात् अनादिसिद्धाप्राकृतदिव्याकृतिः पुरुषः परमात्मवासुदेवादिनामाभिधेयो नारायण एव न त्वन्य इति विज्ञायते। तथाहि

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६-२-१) इति श्रवणात्।

'यदा च मायापुरुषौ कालोऽत्त्यक्षरतेजसि।
तदिच्छया तिरोयान्ति स त्वेको वर्तते प्रभुः'॥ (वा. मा. २५ – ५९) इति,

'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' (वि.पु. ६-४-३९) ॥

'परमात्मा च सर्वेषामाधारः पुरुषोत्तम' (वि.पु. ६-४-४०) इति,

'वासुदेवः परं ब्रह्म बृहत्यक्षरधामनि।
आदावेकोऽद्वितीयोभून्निर्गुणो दिव्यविग्रहे' (वा. मा. २४ – २) इति

'तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमवकृष्य शयीत यदा' (भा.१०-८७-२४)

इति स्कान्दवैष्णवपुराणभागवतस्मरणाच्च। सूत्रार्थो विविच्यते-रूपस्य अनादिसिद्धाप्राकृतदिव्यपुरुषाकारतया श्रुतिस्मृतिप्रतिपादितस्य स्वरूपस्य उपन्यासात् सृष्टेः पूर्वकालेऽभिधानात् दिव्यपुरुषाकृतिः परमात्मैवेति सिद्धम्।

प्रथमपादे प्राणाधारत्वेनोपास्यतयोक्तस्य पुनरिह जाठराग्निरूपेणोपास्यत्वमाह-

वैश्वानराधिकरणम् ॥१-२-७॥

## वैश्वानरः साधारणशब्दविशेषात् ॥१-२-२५॥

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छा. ५-१८-१)

इत्यादिवचनं छान्दोग्येऽस्य विषयः श्रूयते। अत्रोपास्यतयोक्तौ वैश्वानरशब्दवाच्यो नारायणोऽन्यो वेति सन्देहः। पूर्वपक्षन्याये तु वैश्वानरशब्देन जाठराग्निरुच्यते।

'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति' (बृ. ७-९-१)

इति वैश्वानरशब्दस्य जाठराग्नौ प्रयोगदर्शनात्, महाभूततृतीयोऽग्निर्वास्यात् एष वा अग्निर्वैश्वानर इत्यादौ वैश्वानरशब्दस्य तत्र प्रसिद्धत्वात्, अग्निर्देवता वा स्यात् 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात' इति; अस्या अर्थः-पुत्रे जाते सति वैश्वानरमग्निदेवतां प्रति द्वादशकपालेषु संस्कृतं पुरोडाशं निर्वपेज्जुहुयादिति, इत्यादिषु इष्टिदेवतात्वेन तस्य फलदातृत्वश्रवणात् नतु वैश्वानरशब्दावाच्यो नारायणः, प्रादेशमात्रमिति परिच्छेदावगमात्; अत्रोच्यते नारायण एव वैश्वानरः पूर्वोक्तेषु त्रिषु वैश्वानरशब्दस्य साधारण्येऽपि अस्मिन्प्रकरणे

'को न आत्मा किं ब्रह्म' (छा. ५-११-१),

'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषितमेव नो ब्रूहि' (छा. ५-११-६)

इत्यादिषु नारायणस्यासाधारणब्रह्मशब्दादिविशेषणैर्विशेष्यमाणत्वात् न जाठराग्न्यादिषु तद्विशेषणवृंदं संभवति; अतो नारायण एव वैश्वानरशब्दवाच्यः। सूत्रार्थस्तु वैश्वानरः - वैश्वानरशब्दाभिहितो नारायणः। कुतः, साधारणशब्दविशेषात्-विशेष्यते इति विशेषः जाठराग्न्यादित्रिषु साधारणस्य वैश्वानरशब्दस्य परब्रह्मासाधारणैर्ब्रह्मात्मादिभिर्विशेषणै-र्विशेष्यमाणत्वादिति। नारायणपक्षे प्रमाणान्तरं वदति-

## स्मर्यमाणमनुमानं स्यादिति ॥१-२-२६॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथ्वी ह्येष सर्वभूतान्तरात्मा' (मुण्ड. २-१-४)

इत्यादौ नारायणस्य द्युलोकादिपृथिव्यन्तरूपत्वमुक्तम्। इतिशब्दः प्रकारवचनः। तदित्थं रूपं स्मर्यमाणं प्रत्यभिज्ञायमानं अनुमीयतेऽनेनेत्यनुमानं स्मर्यमाणं वैश्वानरस्य नारायणत्वे लिङ्गं स्यादित्यर्थः। पुनरत्रोपगतामनिर्णयशङ्का परिहरन् सूत्रमाह-

## शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न, तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥१-२-२७॥

'स एषोऽग्निर्वैश्वानरः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः आस्यमाहवनीयः तद्यद् भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्' (अग्निरहस्यम्)

इत्यादिषु प्रतिपन्नेभ्यः प्राणाहुत्याधारभूतगार्हपत्यादिवह्नित्रयवाचकेभ्यः शब्देभ्यो हेतुभ्यः

'स यो हैनमेवमग्निवैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' (अग्निरह.१०-५-६-११)

इति श्रुतात्पुरुषेऽन्तः प्रतिष्ठितत्वलिङ्गाच्च जाठरोऽग्निरेव नासौ नारायण इति चेन्न; जाठराग्निरूपतयोपास्यस्य तदन्तर्यामिण उपासनोपदेशात् केवलस्य जाठराग्नेः पूर्वोक्तत्रैलोक्यशरीरात्मत्वासंभवाच्च। किञ्च

'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' (अग्निरहस्यम्. १०-५-६-११) इत्येनं वैश्वानरं पुरुषमधीयते वाजसनेयिनः। अतो निरुपाधिकपुरुषशब्दवाच्य वैश्वानरस्तु नारायण एव;

'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वेता. ३-९)

इति श्रवणादतो नारायण इति युक्तम्। सूत्रितशब्दानामर्थो विविच्यते - शब्दादिभ्यः- शब्दस्तावदग्निबोधकशब्दो वैश्वानरस्तदादयो हृदयादिस्थानतयोक्ताग्निवाचका ये गार्हपत्यादयः शब्दास्तेभ्यो हेतुभ्यः पुरुषेऽन्तः प्रतिष्ठितमिति पुरुषस्यान्तः प्रतिष्ठानाच्च हेतोः अस्मिन्प्रकरणे साधारणाग्निशब्दाभिधेयो जाठराग्निरेव नासौ नारायण इति चेन्न; तथा 'दृष्ट्युपदेशात्' उपास्यो दृश्यतेऽनया सा दृष्टिरुपासना तथा वैश्वानरशब्दाभिहितपरमात्मनो जाठराग्निशरीरत्वप्रकारेण उपासनोपदेशात्। कथमिदमवगम्यते इति चेदसंभवात्; केवलजाठराग्नेस्त्रैलोक्यशरीरात्मत्वासंभवात्। अतो नारायण एव वैश्वानरशब्दाभिहित इति निश्चीयते। अपि च किं च एनं वैश्वानरशब्दाभिहितं पुरुषमधीयते वाजसनेयिनोऽन्ये च; पुरुषस्तु अनादिसिद्धाप्राकृतदिव्यपुरुषाकारौ ब्रह्मपुरस्थो नारायणः

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१) इति,

विज्ञानमयादन्योन्तर आत्मानन्दमयः स वा एष पुरुषविध इति, यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित' इत्यादिषु प्रसिद्ध एवेति सूत्रतात्पर्यार्थः।

## अत एव न देवता भूतं च ॥१-२-२८॥

यतोऽयं वैश्वानरस्त्रैलोक्यशरीरकः पुरुषशब्दवाच्यश्च भवति अत एव न देवता अग्निर्न तृतीयं भूतं च। इह जाठराग्निशब्दवाच्यत्वे तद्योजनाया भेदमाचार्यान्तराणां मतेषु दर्शयति-

## साक्षादप्यविरोधं जैमिनिः ॥१-२-२९॥

हरेरग्निरूपतयोपास्यत्वात्तेन पूर्वोक्तमग्निशब्दसामानाधिकरण्यं नावश्यम्; कुतः,

यज्ञनारायणोपासनायामनलाग्ननयनादियोगेन नारायणे एवाग्निशब्दस्य साक्षाद्वृत्तित्वसंभवादिति पूर्वोक्तसामानाधिकरण्याभावे सत्यपि तस्याग्निशब्दवाच्यत्वे विरोधाभावं जैमिनिरुवाच ।

## अभिव्यक्तेरित्याश्मरथ्यः ॥१-२-३०॥

'यस्त्वेतमेवं प्रादेशमात्रम्' (छा. ५-१८-१) इत्यत्रापरिच्छिन्नस्य तस्य प्रादेशमात्रप्रमाणेन परिच्छिन्नत्वम् अभिव्यक्तेरुपासकाभिव्यक्तयेऽस्तीत्याश्मरथ्यमुनिः ।

## अनुस्मृतेरिति बादरिः ॥१-२-३१॥

द्युप्रभृतिपृथिव्यन्तस्य वस्तुवृन्दस्य मूर्द्धादिपादान्तावयवत्वकल्पनं हृदयाद्यल्पस्थानयोगेन प्रादेशमात्रत्वं च अनुस्मृतेः-सर्वव्यापकत्वाच्चेतनाचेतनात्मकानन्तकोटिब्रह्माण्डशरीरकस्या-प्राकृतदिव्यविग्रहस्य नारायणस्यानुस्मृतये उपासकस्मृत्यर्थमिति बादरिराचार्यो मन्यते ।

## संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥१-२-३२॥

'उर एव वेदि लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय'

(छा. ५-१८-२)

इत्युपासकस्योरःप्रभृतीनां वेद्यादित्वकल्पनं विद्याङ्गभूतायाः संपत्तेः प्राणाहुतेरग्नि-होत्रकल्पनार्थमिति जैमिनिः । तथा दर्शयति च श्रूतिः

'अथ य एवं विद्वानग्निहोत्रं जुहोति' (छा. ५-२४-२) इति ।

## आमनन्ति चैनमस्मिन् ॥१-२-३३॥

एनं ब्रह्मपुरस्थं दिव्यविग्रहं वासुदेवादिनामाभिधेयं पुरुषोत्तमं वैश्वानरशब्दाभिहितं द्युभ्वादित्यादिशरीरकं अस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति प्राणशरीरकपरमात्मोपासका ऋषयः चकारोऽवधारणार्थः ।

'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ' (छा. ५-१८-२)

इत्यादिना उपासकस्य मूर्द्धादिपादान्तेष्ववयवेषु द्युप्रभृतयः परमपुरुषस्य मूर्द्धादयः सन्तीति प्राणाग्निहोत्रवेलायामनुसन्धेयमित्यर्थः ।

इति

श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने प्रथमाध्यायस्य



द्वितीयपादः समाप्तः ॥२॥

## प्रथमाध्याये तृतीयपादः ।

अस्मिन् तृतीयपादे स्पष्टतया परब्रह्मस्वरूपप्रतिपादकानामुपनिषद्वाक्यानां मीमांसाप्रसंगादधिकारिवर्णनं च विधीयते

### द्युम्याद्यधिकरणम् ॥१-३-१॥

### द्युभ्वाद्यायतनं स्वशब्दात् ॥१-३-१॥

'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' (मुण्ड. २-२-५)

इति अस्य विषयः श्रूयते मुण्डकोपनिषदि। अत्र श्रुतौ द्युभ्वाद्याधारतया श्रूयमाणो नारायणोऽन्यो वेति संशयः। नारायणादन्यो वायुरेव द्युभ्वाद्याधार इति पूर्वः पक्षः।

'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' (बृ. ३-७-२)

इति श्रुतौ तस्य सर्वाधारत्वप्रसिद्धेः इति। सिद्धान्तं ब्रूमः- द्युभ्वाद्यायतनं द्युक्षिति प्रभृतीनां श्रुतिप्रसिद्धानां आयतनं सर्वाधारतया स्थानभूतं परं ब्रह्म, कुतः, स्वशब्दात्-स्वस्य परब्रह्मणो वाचकासाधारणात्मादिशब्दात् इति सूत्रार्थः। ननु

'तमेवैकं जानथ आत्मानम्' (मुण्ड. २-२-५)

इत्यात्मशब्दात् सूत्रात्मनो वायोरप्यात्मशब्दवाच्यत्वे सति द्युभ्वाद्यायतनं वायुरिति ज्ञाते को दोष इत्यत आह-

### मुक्तोपसृप्यव्यपदेशाच्च ॥१-३-२॥

'यदा पश्यः पश्यते रुक्मवर्णं, कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय, निरञ्जनः परमं साम्यमुपैति'॥ (मुण्ड. ३-१-३)
'यथा नद्यः स्यन्दमानाः समुद्रे, अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद्विमुक्तः, परात्परं पुरुषमुपैति दिव्यम्'॥ (मुण्ड-३-२-८)

इति पुण्यापुण्यप्राकृतनामरूपविनिर्मुक्तैरूपगता प्राकृतदिव्यरूपनन्दसुनन्दनादिनामभिरसंख्यमुक्तपुरुषैः उपसृप्यः प्राप्यः परपुरुषो यो नारायणस्तस्यैव श्रुतौ व्यपदेशाच्च, स एवात्र मुमुक्षुप्राप्यतया व्यपदिश्यते; वायोरेतत्कथं संभवेत्, अतो न वायुरिति निर्णयः।

### नानुमानमतच्छब्दात् प्राणभृच्च ॥१-३-३॥

अनुमानगम्यं प्रधानमेव द्युभ्वाद्यायतनं तस्य सर्वोपादानत्वादिति न वाच्यम्; अतच्छब्दात्-अस्मिन् प्रकरणे तस्य प्रधानस्य वाचकः शब्दस्तच्छब्दस्तस्याभावात्-

प्रधानवाचिशब्दाभावादित्यर्थः, प्राणभृज्जीवश्चापि न भवति परमात्मधर्मानुपपत्तेरिति ।

## भेदव्यपदेशात् ॥१-३-४॥

अत्र जीवाद्भेदेन कृष्णस्य व्यपदेशो विद्यते

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः,

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोक' (मुण्ड-३-१-२) इति ।

अतः स्वयं नारायण एव द्युभ्वाद्याधारः ।

## प्रकरणात् ॥१-३-५॥

'अथ परा यया तदक्षरमधिगम्यते' (मुण्ड. १-१-५) इति परविद्योक्तस्य परस्य खल्विदं प्रकरणम्; अतश्च नारायणः ।

## स्थित्यदनाभ्यां च ॥१-३-६॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते,

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' (मुण्ड-३-१-१ / श्वेता. ४-६)

इति जीवस्य कर्मफलादनात् अनश्नत एव दीप्यमानस्यान्यस्य शरीरान्तः स्थितिमात्रत्वाच्च जीवादर्थान्तरभूतो नारायण एव द्युभ्वाद्यायतनमिति निर्णयः । मुक्तप्राप्यतयेह प्रतिपादितस्य नारायणस्य प्राप्तेः प्रयोजनं निरतिशयसुखं दर्शयति-

भूमाधिकरणम् ॥१-३-२॥

## भूमा संप्रासादादध्युपदेशात् ॥१-३-७॥

छान्दोग्ये श्रूयतेऽस्य विषयः । छान्दोग्येऽपि

'भूमैव सुखम्' (छा. ७-२३-१) इत्युक्त्वा भूम्नः स्वरूपमाह

'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा. ७-२४-१)

इति तत्र सन्देहः । भूमशब्दनिर्दिष्टो नारायणस्तदन्यो वेति । नारायणादन्यः प्राण एव भूमा पूर्वेषु नामादिषु तत्त्वेष्वस्ति

'भगवो नाम्नो भूय' (छा. ७-१-५) इत्यादौ नारदप्रश्ने सनत्कुमारो

'वाग्वाव नाम्नो भूयसि' (छा. ७-२-१)

इत्यादीना वागादीनि निर्दिश्य तेषां परस्परप्रश्नप्रत्युक्तिभ्यां तत्र प्राणस्यैव भूयस्त्वं प्रसक्तमाह, न नारायणस्य, अतो भूमा प्राण इति प्राप्ते ब्रूमः- नारायण एव भूमशब्दनिर्दिष्टः संप्रसादादध्युपदेशात् संप्रसादो जीव उच्यते;

'अथ य एष संप्रसाद' (छा. ८-३-४) इति श्रुतेः ।
स चात्र प्राणशब्देन निर्दिश्यते तस्मादूर्ध्वमात्मान्तरत्वेन भूमोपदिश्यते;
'एष तु वा अतिवदति यः सत्येनातिवदति' (छा. ७-१६-१) इत्यादिना ।
अत्र हि पूर्वं
'स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् अतिवादी भवति' (छा. ७-१५-४)
इति प्राणवादिनोऽतिवादित्वमुक्त्वा तदनन्तरमेष तु वेति तुशब्देन पूर्वस्मात्प्राणातिवादिनः सकाशात् सत्यातिवादिन आधिक्यप्रदर्शनात् पूर्वातिवादनिमित्तात् प्राणशब्दोक्ताज्जीवादेतदतिवादनिमित्तस्य सत्यशब्दाभिधेयस्य हरेराधिक्यमवसीयते; स एवाग्रे भूमा विपुलगुणसंयुक्त उच्यते । अयं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते । तथाहि पृथ्वादिषु बहुशब्दपाठात्
'पृथ्वादिभ्य इमनिज्वा' (अष्टा. ५-२२-२) इति बहुशब्दादिमनिच्च् प्रत्यये कृते
'बहोर्लोपो भू च बहोः' (अष्टा-६-४-२५८) इति प्रकृतिप्रत्ययोर्विकारे बहोर्भावो भूमेति सिद्धम्; भूमा बहुत्वमित्यर्थः । अत्र चायं बहुशब्दो वैपुल्यपर्यायमहत्त्ववाची न संख्यावाची ।
'अथात आत्मादेशः' (छा. ७-२५-२)
इत्यात्मत्वेनाप्यग्रे वर्ण्यते । अतः प्राणशब्दनिर्दिष्टाज्जीवादधिक आत्मा भूमा । सूत्रशब्दार्थमात्रं वर्ण्यते संप्रसादशब्दाभिहिताज्जीववृंदाद् यस्याध्युपदेशः- योऽधिकत्वोपदेशोऽस्ति तस्माद्धेतोः भूमा विपुलगुणविशिष्टो नारायण एवेति निश्चीयते, इति तत्प्रतिपादयितुं सूत्रान्तरमारभ्यते-

## धर्मोपपत्तेश्च ॥१-३-८॥

'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि (छा.७-२४-१) इति,
'आत्मैवेदं सर्वम् (छा. ७-२५-२),
'आत्मनः प्राणा आत्मन आदेशे'त्यादिना स्वमहिमप्रतिष्ठितत्वसर्वात्मसर्वकारणत्वादयो धर्मा उपदिश्यन्ते; तेषां नारायण एवोपपत्तिः न प्राणशब्दोदिते जीवे; ततो नारायण एव भूमा नापर इति सिद्धम् । ननु 'मुक्तोपसृप्य' (ब्र.सू. १-३-२) इति सूत्रे
'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. ३-१-३)
इति मुक्तानां ब्रह्मसादृश्यमभिहितम्; ततो ब्रह्मणः सायुज्यमुपगता मुक्तात्मानस्तत्पृथग्भूता वर्तन्त इति सिद्धम्; यत्र
'नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा. ७-२४-१) इति भूमशब्दवाच्ये ब्रह्मणि दृष्टे तन्निष्ठभेददर्शनादिनिषेधः क्रियते; तस्य कथमिह साङ्गत्यमिति चेत् भूम्निप्रत्यक्षे जाते सति नान्यत्पश्यतीत्यादेरयमभिप्रायः निरतिशयसुखस्वभावे यस्मिन्साक्षात्कृते सुखान्तराभिलाषेण रूपादिविषयदर्शनादौ न प्रवर्तते यन्मग्नः पुरुषः स भूमा ब्रह्मेत्युक्तौ

ब्रह्मानन्दलवपरमाणूनां विषयसुखविशेषजनकत्वं श्रूयते-

'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ. ४-३-३२) इति;

तस्मादिह ब्रह्मणि न द्वैतनिषेधप्रसक्तिः । प्रपञ्चे सत्येव कथं मुक्तात्मनां अपुरुषार्थस्य तस्य दर्शनं निषिध्यत इति न विचार्यम्; नहि मुक्तात्मनां प्राकृतप्रपञ्चे दर्शनविषयः, किन्त्वतिगाढस्थित्या परमानन्दमये परब्रह्मण्यारूढानां तेषां निरवधिकातिशयानन्दस्वरूपं परब्रह्मैव तन्निष्ठमुक्तवृंदं च दृष्टिविषयो नान्यत् : यथा लोकालोकाचले सदोपगतस्थितीनां देवानां न भूतलस्थलं मेरुपर्वतादिवस्तुमात्रमाभाति, किन्तु लोकालोकाचलस्थमेव तथेति संबन्धः । तथाहि श्रुतिः

'एतत्ततो भवति आकाशशरीरं ब्रह्म सत्यात्म प्राणारामम्' (तै. शि. ६-२) इति

'आप्नोति स्वाराज्यं आप्नोतिमनसस्पतिम्' (तै. शि. ६-२)

इत्यादिना मुक्तात्मा प्रसक्तस्तस्य तु वाक्पतिरित्यादिश्रुतिवचनेन वाधीनाप्राकृतविशुद्धवागिन्द्रियादिसंबन्ध उक्तः । तस्य पुनस्तादृशावस्थाप्राप्त्यनन्तरं एतत्दृश्यमानं प्राकृतप्रपञ्चजाले व्याप्तं आकाशशरीरं चिदम्बरप्रकाशशरीरं ब्रह्मैव भातीति रहस्यार्थः । ततो मुक्तानां ब्रह्मणा सादृश्यं सत्यप्रपञ्चादर्शनेन प्रपञ्चो मिथ्येति वाचकत्वं प्रपञ्चो मिथ्येति दर्शित्वं चेति सर्वं समंजसमिति।

अक्षराधिकरणम् ॥१-३-३॥

## अक्षरमम्बरान्तधृते: ॥१-३-९॥

श्रूयतेऽस्य विषयो बृहदारण्यके

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्स्वमदीर्घमलोहितमस्नेहमच्छायम्'(बृ. ५-८-७) इत्यादि ।

अत्राक्षरशब्दवाच्यस्त्रेधा संदिह्यते प्रणवो नारायणो वेति, प्रणवजीवयोरन्यतर एवाक्षरशब्दवाच्यः, अक्षरशब्दस्य वर्णपर्यायत्त्वात् प्रणववाचकत्वमुचितम्;

'पुरुषोऽक्षरमुच्यते' इति पुरुषस्यापि तदभिधेयत्वमुक्तम्; अतस्तावेवाक्षरशब्दवाच्याविति प्राप्ते ब्रूमः अत्राक्षरशब्दवाच्यं नारायणाख्यं परं ब्रह्मैव; कुतः, अम्बरान्तधृतेः -

'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाशे एव तदोतं च प्रोतं च (बृ. ५-८-४)

इति सर्वविकाराधारतया निर्दिष्ट आकाशः कस्मिन्नोतश्चेति गार्ग्या पृष्टे

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' (बृ. ५-८-७) इत्यादिना

'एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' (बृ. ५-८-१०)

इत्यन्तेन याज्ञवल्क्यवचनेन निर्दिष्टस्याक्षरस्याम्बरान्तप्रपञ्चधृतिरवगम्यते । कथमेतदन्यत्र नारायणात्संभवति ? ननु

'दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ।

लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः' ॥ (भा.३-११-४०)
'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्।
विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः' ॥ (भा.३-११-४१)

इति स्मृतिस्थाक्षरपदेनाम्बरान्तप्रपञ्चधारकं ब्रह्मपुराख्यं परमात्मस्थानमक्षरब्रह्मैवोक्तम्; तदेवात्र प्रतीयते न परमात्मेति चेन्न;

'यस्याक्षरं शरीरं', 'अक्षरमन्तरो यमयति' (सुबा. उ. ७) इति,
'अक्षरात्परतः परः' (मुण्ड.२-१-२) इति,
'आकाशशरीरं ब्रह्म (तै. शि. ६-२) इति,
एष सर्वभूतान्तरात्मा' (सुबा.उ.७/मुण्ड.२-१-२)

इत्यादिभिरक्षराख्यचिदम्बरान्तसर्वनियन्तृतया तद्व्यापकतया चाक्षरपरतया च सर्वात्मतया च नारायण एवाभिहितः। एतस्मिन्नक्षरेऽक्षरशब्दाभिधेये परब्रह्मणि नारायणे हे गार्गि आकाशश्चिदम्बराख्यमक्षरं ब्रह्म ओतः प्रोतश्चेत्युक्तम्। अतः स एवाक्षरशब्दाभिधेयः।

## सा च प्रशासनात् ॥१-३-१०॥

सा चाम्बरान्तस्य धृतिशब्दाभिधेया स्थितिः

'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.५-८-८) इत्यादिप्रशासनाद्धरेः प्रकृष्टाज्ञाधीनावगम्यते। सा बद्धमुक्तोभयावस्थस्यापि जीवात्मनो न संभवति; अतोऽत्र प्रशासिता नारायण एवाक्षरशब्दाभिहित इति निश्चीयते ॥

## अन्यभावव्यावृत्तेश्च ॥१-३-११॥

अन्यभावोऽर्थान्तरत्वम्;

'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ' (बृ. ५-८-१०) इति वाक्यशेषः नारायणात् अक्षरशब्दस्य प्रणवाद्यर्थान्तरत्वं व्यावर्तयति; प्रणवजीवपक्षयोरदृष्टत्वादिविशेषितद्रष्टृत्वाद्यसंभवात्। अतोऽत्र प्रकरणे नारायणोऽक्षरमिति निर्णयः प्रत्यक्षादिप्रमाणातीतस्यापि नारायणस्य परमकरुणावशादुपासकप्रत्यक्ष-त्वमुपपादयितुमेतदधिकरणमारभ्यते-

ईक्षत्यधिकरणम् ॥१-३-४॥

## ईक्षतिकर्मव्यपदेशात्सः ॥१-३-१२॥

अस्य विषयः श्रूयतेऽथर्वणि

'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा

पादोदरस्त्वचा विनिर्मुच्यते एव हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत' (प्रश्न. ५-५) इति ।

अत्रेक्षतिकर्मत्वेन श्रूयमाणः परः पुरुषः पुरुषोत्तमोऽन्यो वेति सन्देहः । नासौ पुरुषोत्तमः अण्डाधिपतिस्त्रिगुणात्मकविधिरुद्रादिकारणम्; 'वैराजरूपो हिरण्यगर्भ एव स सामभिरुन्नीयते ब्रह्मलोकमि'ति तल्लोकप्राप्तिश्रवणात् । परशब्दस्य विधिरुद्रादिजीवोत्कृष्टे तस्मिन्संभावच्च अथवा प्रकृत्यधिपतिः पुरुषः, तस्य पुरुषशब्दवाच्यत्वात् जीवघनात्पराद्वैराजरूपहिरण्यगर्भात्तत्कारणतया परत्वोपपत्तेश्च तस्मिन्नेव प्रणववाच्यत्वप्रसिद्धेश्च,

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वेता. ४ -१०) इति,

'अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः' (भा. ३-२६-३)

इति तस्यैव प्रकृतिपरत्ववचनाच्चेति प्राप्ते सिद्धान्तं ब्रूमः- ईक्षतिधातुकर्मत्वेन कथितः सः पुरुषोत्तमशब्दाभिधेयो नारायण एव । उत्तरत्र

'तमोंकारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च' (प्रश्न. ५ -७) इति तदसाधारणशान्तत्वादिधर्मव्यपदेशात्; नहि हिरण्यगर्भे शान्तत्वादिकमस्ति । ब्रह्मलोकमित्यनेन परब्रह्मवासुदेव पुरुषोत्तमादिनामकस्य नारायणस्य ब्रह्मपुराख्यलोकः प्राप्यतयाऽवगम्यते; जीवघन इति जीवसमुदायाधारभूतो हिरण्यगर्भस्तस्मात्परात्परं हि ध्येयं श्रूयते । ततो हिरण्यगर्भपक्षो न युक्तः । प्रकृत्यधिपतिः पुरुष इति यदुक्तं तदपि न समीचीनम्;

'अमृतमभयं परं च' (प्रश्न. ५ -७)

इति सदामृतत्वमभयकारणत्वं च प्रकृतिपुरुषोत्कृष्टतया परत्वं च प्रकृतिपतौ कथमुपपद्यते ? 'यज्जीवघनाद्धिरण्यगर्भादपि परादुत्कृष्टतरात् प्रकृत्यधिपपुरुषात्परमुत्कृष्टतमं पुरिशयं आत्मनि तिष्ठन् अक्षरे तिष्ठन् प्रकृतौ तिष्ठन् सर्वभूतेषु तिष्ठन्नित्यादिनाऽऽरभ्यमाणाभिः

'स त आत्मान्तर्याम्यमृतः' (बृ. ५-७-७)

इत्यन्ताभिः श्रुतिभिरुक्तविधासु पुरीषु शयानमन्तर्यामितया वर्तमान अत एव पुरुषं पुरुषोत्तमशब्दवाच्यं नारायणं तदुपासकः साक्षात्पश्यतीति निरूपितम् ।

'प्रकृतिपुरुषयोः परस्य' (भा. ११-६-१४) इति,

त्वत्तः पुमान् समधिगम्य ययाऽस्य वीर्यम् (भा. ११-६-१६) इति,

मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय' (गीता. ७-७) इति,

प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी,

पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' (वि.पु. ६-४-३९),

परमात्मा च सर्वेषामाधारः पुरषोत्तमः' (वि.पु. ६-४-४०)

इत्यादिषु सर्वोत्कृष्टतया नारायणस्यैव परतत्वस्मरणाच्च ईक्षतिधातोः कर्मत्वेन पुरिशयं पुरुषमीक्षत इति व्यपदेशात् स नारायण एव ओमित्यक्षरवाच्यः पुरुषशब्दाभिहित इति सूत्रार्थेन

निश्चीयते। तस्य पुरि शयनमुपासनं च प्रकटयितुमिदमधिकरणं प्रस्तूयते –

दहराधिकरणम् ॥१-३-५॥

## दहर उत्तरेभ्यः ॥१-३-१३॥

छान्दोग्ये श्रूयतेऽस्य विषयः,

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्यम्' (छा.८-१-१)

इत्यादिवाक्यम् । दहरशब्देन इह भूताकाश उच्यते उत जीवो नारायणो वेति संशयः । आकाशशब्दस्य वियति रूढतया भूताकाशो दहरः अथवा जीवो दहरः स्वल्पपरिमाणत्वात् तस्य दहरशब्दस्याणुभूतेऽस्मिन् संभवात् न सर्वव्यापी नारायणो दहर इति प्राप्ते ब्रूमः– नारायण एव दहराकाशः, कुतस्तस्मिन् उत्तरेभ्योऽपहतपाप्मत्वादिधर्मेभ्यः,

'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छा.८-७-१) इति वाक्यशेषसिद्धेभ्यः ।

एते कथमचेतने भूताकाशे तथा संसारिणि जीवे संभवन्ति ? तस्मान्नारायण एव दहराकाशोऽपहतपाप्मत्वादिगुणक इति ब्रह्मपुरे ब्रह्मणः परब्रह्मणः पुरे पुररूपे अस्मिन्नुपासकशरीरे पुण्डरीकं पद्माकारं यदिदमुपासकावयवभूतं दहरं हृदयान्तर्वर्ति सुसूक्ष्मं वेश्म ध्येयस्य परब्रह्मणः स्थानम्; अथवा परमात्मनो लोकरूपेऽक्षरसंज्ञे ब्रह्मपुरे दहरं सूक्ष्मतरं वेश्म परब्रह्म संज्ञ नारायणस्य मन्दिरमस्ति; अस्मिन्नुपासकहृदयान्तरवर्तिनि परमात्मवेश्मभूते पुण्डरीके ब्रह्मपुरान्तर्वर्तिनि सूक्ष्मतरे स्वमन्दिरे चेत्युभयस्मिन् यो दहरः सूक्ष्मतमःअन्तराकाशः अन्तरो विलक्षणतया स्थितो य आकाशस्तद्वन्निर्लेपः सर्वाधारभूतश्च परमात्मा दिव्यविग्रहोऽस्ति; तस्मिन् यदन्तः अन्तःस्थितमपहतपाप्मत्वादि यद्गुणवृंदं तदन्वेष्टव्यम् । तच्छब्देन परब्रह्म तत्स्थापहतपाप्मत्वादिगुणवृंदं च परामृश्यते; तदुभयं मार्गणीयं तद्वा विजिज्ञासितव्यम्; तदुभयं वा ज्ञातुमेष्टव्यमिति श्रुतिरहस्यार्थेन दहराकाशशब्दाभिहितोऽपहतपाप्मत्वादिगुणगणवान् वासुदेवसंज्ञो नारायण एव निश्चित इति विज्ञायते ।

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥१-३-१४॥

वाक्यशेषे प्रजानामहरहरस्मिन् दहराकाशे या गतिः श्रूयते, यश्चात्र ब्रह्मलोकशब्दास्ताभ्यामपि

'तद्यथापि हिरण्यनिधिं निहितं क्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा' (छा. ८-३-२) इति

दहराकाशो नारायणः । तथाहि श्रुत्यन्तरेण नारायणे एवं एवं रूपं गमनं दृष्टम्;

'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपश्यामहे' (छा. ६-९-२)

इति ब्रह्मलोकशब्दश्च तस्मिन् दृष्टः ।

'एष ब्रह्मलोकः सम्राडिति होवाच' (बृह. ६-३-३३ / बृह. ६-४-२३)

इति ब्रह्मण्यक्षरपदे लोक्यते मुक्तैरिति व्युत्पत्त्या ब्रह्मलोकशब्दस्तद्वाचकः । अतो माभूद्गतिशब्दयोरन्यत्र दर्शनम् । अस्मिन्प्रकरणे सर्वासां प्रजानामहरहः श्रूयमाणं गमनं ब्रह्मलोकशब्दश्च नारायणस्य दहराकाशत्वे पर्याप्तं प्रमाणम् ।

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१-३-१५॥

धृतेश्च 'अथ य आत्मे'ति दहरविद्यान्तर्गतं दहराकाशं निर्दिश्य

'स सेतुर्विधृतिरेषां लोकानामसंभेदाये'त्यनतिक्रान्तप्रकरणे जगद्विधारणोपदेशादपि हेतोर्दहराकाशः परमात्मा । सेतुशब्दावगतं वर्णाश्रमाद्यसंकरहेतुत्वमपि तस्यैव संभवति, नतु तद्व्यतिरिक्तरस्य अस्य जगद्विधारणलक्षणस्य महिम्नः अस्मिन्परमात्मनि श्रुत्यन्तरेषु उपलब्धेरपि तन्महिमाश्रयो दहराकाशः परमात्मा । तथाहि

'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय'

(बृह. ६-४-२२) इति,

'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' (बृह. ५-८-८) इति ।

## प्रसिद्धेश्च ॥१-३-१६॥

'को ह्येवान्यात् कः प्राण्यात् यदेषः आकाश आनन्दो न स्यात्' (तै. उ. आन. अनु.७),

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छा. १-९-१)

इत्यादिषु आकाशशब्दस्य परब्रह्मणि नारायणे प्रसिद्धेः । आकाशशब्द एव नारायणस्यापहतपाप्मत्वादिधर्मविशिष्टतया भूतादिव्योमशङ्कां व्यावर्तयतीत्यर्थः ।

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥१-३-१७॥

'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' (छा. ८-३-४)

इति श्रूयमाणस्य इतरस्य बद्धमुक्तोभयावस्थस्य जीवकलापस्य परामर्शो ग्रहणम्; तस्मात् स एव दहराकाशोऽस्तीति चेन्न, उक्तानामपहतपाप्मत्वादीनां तस्मिन्नसंभवात् । अतो नारायण एव तदाश्रय इति युक्तम् ।

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१-३-१८॥

उत्तरत्र प्रजापतिवाक्ये

'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' (छा. ८-७-१)

इति जीवस्यापहतपाप्मत्वादिकं श्रूयते, जीवत्वलक्षणमवस्थात्रयवर्तित्वं च श्रूयते ।

'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' (छां. ४-१५-१) इति,

'य एष स्वप्ने महीयमानश्चरति एष आत्मेति होवाच' (छा. ८-१०-१) इति,

'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच'(छा. ८-११-१)

इति ततोऽवस्थात्रयवर्ती जीव एवापहतपाप्मत्वादि गुणविशिष्ट आत्मा भवितुमर्हतीति चेत् न सारमेतत्; निजानादिकर्मरूपाऽविद्यासंबन्धघटितासंख्यकलेवरः अनुपगतापहतपाप्मत्वादिगुणको जीवसमुदायः परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति, अत्र

'परं ज्योतिः'(छा. ८-३-४)इति,

'एका मूर्तिरनिर्द्देश्या शुक्लां पश्यन्ति तां बुधाः, ज्वालामालोपरुद्धाङ्गी'(मार्क. पु. ४-४४)

इति, मार्कण्डेयपुराणस्थवाक्येनोक्तं प्रकाशबहुलावृतमतिकमनीयावयवमाश्रितजन-वात्सल्यौदार्यादिगुणजलधिं साक्षान्नारायणस्वरूपं उपसंपद्य स्वेन रूपेणाप्राकृतदिव्यावयविना भागवतीतनुसंज्ञेन निजस्वरूपेणाभिन्निष्पद्यते संपन्नो भवति ।

एवं परब्रह्मप्राप्त्यनन्तरमाविर्भूतस्वरूपः आविर्भूतापहतपाप्मत्वादिगुणकश्चात्र प्रतिपाद्यते नतु दहराकाशशब्देन संसारी जीवसमुदायः । ननु तर्हि मुक्तजीवकलाप इति चेन्न, तस्यानादिसिद्धापहतपाप्मत्वादिगुणविशिष्टपरमात्मस्वरूपप्राप्त्याऽऽविर्भूततद्गुणवत्त्वात् । अतोऽनादिसिद्धगुणगणविशिष्टः परमात्मैव दहराकाशशब्दाभिहितो न बद्धो मुक्तो वा तच्छब्दाभिहितो नाप्यनादिसिद्धापहतपाप्मत्वादिगुणवानिति निश्चीयते ।

## अन्यार्थश्च परामर्शः ॥१-३-१९॥

'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. ८-३-४)

इति जीवस्य दहराकाशशब्दनिर्दिष्टेन परवस्तुना सह संपद्य स्वरूपाविर्भावोऽभिधीयते । तत्र तादृक् तन्माहात्म्य-प्रतिपादनार्थपरामर्शः, जीवकलापस्य स्वरूपाविर्भावग्रहणं अपहतपाप्मत्वादिगुणगणाविर्भावग्रहणं चोच्यते । अतो न विरोधः ।

इदानीं सूत्रशब्दार्थौ विविच्यते-अन्यार्थः अन्यो जीवलक्षणाद्विलक्षणः परमात्ममाहात्म्यप्रतिपादनरूपः अर्थः प्रयोजनं यस्य एवंभूतः परामर्थः जीवकलापस्य स्वरूपाविर्भावादिग्रहणमिति ।

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥१-३-२०॥

'दहरोऽस्मिन्नन्तराकाश' (छा. ८-१-१)

इत्यत्र अल्पश्रुतेरल्पत्वश्रवणात् दहराकाशशब्दाभिहितो जीवः । कुतः ? अल्पस्थानाश्रयत्वादल्पस्वरूपप्रतीतेर्नायं परमात्मेति चेत्तदुक्तम् इति शङ्कायाः पूर्वमुक्तमेवोत्तरं निचाय्यत्वादेवं व्योमवच्चेति ।

## अनुकृतेस्तस्य च ॥१-३-२१॥

तस्य परमात्मस्वरूपं प्राप्तस्य जीवस्य अनुकृतेः तत्समानधर्मत्वोपपत्तेः, अनुकृतिरनुकारस्तत्समानधर्मत्वमिति यावत्; परमात्मोपासनबलेन तदनुकारात् आविर्भूतस्वरूपत्वमाविर्भूतापहतपाप्मत्वादिगुणकत्वं च भवति; अतोऽनुकृतिं प्राप्तुर्जीवादनुकरणीयः परब्रह्मभूतो दहराकाशोऽर्थान्तरभूत एव । अनुकाररूपा तत्साम्यापत्तिर्हि श्रूयते

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्,
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मुण्ड-३-१-३) इति ।

## अपि स्मर्यते ॥१-३-२२॥

स्मर्यते च तदुपासनात्तत्साम्यापत्तिरूपानुकृतिर्जीवस्य-

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥ (गीता. १४-२) इति,

तथा स्कान्देऽपि

'अक्षराख्याः पुमांसस्ते श्वेतद्वीपेऽत्रधामनि ।
सेवितुं वासुदेवं तं स्थिता देवर्षिणेक्षिताः ॥ (वा. मा. ४ – २२)
प्राप्ते प्रलयकाले तु पुनश्चाक्षरधामनि ।
स्थास्यन्ति ते स्वतन्त्राश्च कालमायाभयोज्झिताः' (वा. मा. ४ – २३)

इति, एवमन्यार्थश्चेत्यादिसूत्रचतुष्टये परं ज्योतिरिति पदेनोक्तं प्रकाशबहुलावृतमतिकमनीयावयवं दहराकाशशब्दाभिहितं ब्रह्मपुरान्तर्वर्तिमन्दिरस्थ स्वाभाविकापहतपाप्मत्वादिगुणविशिष्टं स्वसाधर्म्यमुपगतैर्मुक्तगणैर्निषेव्यमाणं जनकल्याणायेहाविर्भूतं नारायणस्वरूपं मुमुक्षुजनोपासनीयमिति सिद्धम् ।

अथ मुमुक्षुजनोपास्यं नारायणस्य रूपान्तरमभिधीयते-

प्रमिताधिकरणम् ॥१-३-६॥

## शब्दादेव प्रमितः ॥१-३-२३॥

श्रूयतेऽस्य विषयः कठवल्ल्याम्
'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति,
ईशानो भूतभव्यस्य न ततो विजुगुप्सते' (कठ. २-१-१२)
इत्यादि; इहाङ्गुष्ठमात्रतया श्रूयमाणः पुरुषः नारायणो जीवो वेति सन्देहः। जीव इति वक्तुं युक्तं
'स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः' (श्वेता. ५-७),
'मध्य आत्मनि तिष्ठति' (कठ.२-१-१२)
इति देहान्तरवर्तित्वावगमाच्च न तु नारायणो व्यापक इति प्राप्ते वदामः-नारायण एवाङ्गुष्ठमात्र इति युक्तम्; ईशानो भूतभव्यस्येत्यादिना नारायणस्य सर्वेश्वरत्वश्रवणात्, नात्र ( अङ्गुष्ठमात्र इति श्रुतौ ) जीवोऽभिहितः। सूत्रार्थस्तु-शब्दादेव- 'ईशानो भूतभव्यस्य' (कठ. २-१-१२) इति श्रुतिवचनादेव नारायणः प्रमितः अङ्गुष्ठमात्रतया प्रमाणीकृत इति कथमपरिच्छिन्नस्याङ्गुष्ठमात्रत्वमिति सन्दिह्याह-

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥१-३-२४॥

अपरिच्छिन्नस्यापि नारायणस्याङ्गुष्ठमात्रत्वं हृद्यपेक्षया हृदि-उपासकाङ्गुष्ठमात्रहृदये उपासनापेक्षयाभिहितम्। जीवस्याप्यङ्गुष्ठमात्रत्वं हृदि वर्त्तनापेक्षया। नारायणोपासने मनुष्याणामधिकारत्वादुपासनशास्त्रविधावधिकारोक्तेरित्यर्थः। मनुष्याणां हृदयं यावत्प्रमाणं तदवच्छिन्नरूपं नारायणः परमकारुणिकः परिगृह्णाति, तेषां स्वोपासनासिद्धये। अतो नारायणः प्रकाशबहुलावृताङ्गुष्ठमात्ररूपेणोपासकानां हृदयमध्ये तिष्ठतीति निर्णयः।
मनुष्याधिकारत्वादित्यस्मिन् सूत्रे मनुष्याणामेव नारायोपासने अधिकारः सूचितः। ननु कथं तर्हि देवानां नारायणसंबंध्युपासनमिति चेत्तत्रेदमधिकरणमारभते-

देवताधिकरणम् ॥१-३-७॥

## तदुपर्यपि बादरायणस्संभवात् ॥१-३-२५॥

इह नारायणोपासने देवानामधिकारः संभवति नवेति संशयः। नेति पूर्वः पक्षः। अथ समर्थो विद्वान् शास्त्रेणापर्युदस्तो हि वैदिके कर्मण्यधिकारी प्रोक्तः। न च तेषां सामर्थ्यमस्ति। तेषां विग्रहाभावात्। विग्रहवन्तो हि स्तुतिध्यानादीनि कर्तुं कस्यचित्समर्थाः। तथा तेषामर्थित्वमपि नास्ति; सुखबहुले स्वर्गे सुखासक्त्या आध्यात्मिकादितापत्रयज्ञानाऽभावात्। स्वर्गभोगेषु कालकृतपराभवज्ञानाऽभावाच्च। नित्यानवधिकातिशयानन्दमयनारायण-

वर्तिनिरतिशयाचलसुखानुभवाभावाच्च। एवं सामर्थ्यार्थित्वाद्यभावे सति तेषामुपासनाधिकारो न संभवतीति प्राप्ते ब्रूमः सिद्धान्तः-

'इन्द्रो वृत्राय वज्रमुदयच्छत्' (ऐ.ब्रा. पञ्चिका. ४ अध्या.१४ खण्ड. २) इति,

'नताः स्म ते नाथ पदारविन्दम्' (भा. ११-६-७)

इत्यादिवाक्येषु क्षेपणनमनस्तवनादीनां करशिरोमुखादिव्यापाराणां प्रामाण्यात् देवानां विग्रहवत्त्वमस्ति। अतस्तेषामुपासनसामर्थ्यमपि संभवति; तथा वेदपुराणेतिहासेषु तेषां वेदाध्ययनं प्रसिद्धमेव; तस्मिन् सति वेदोक्ताध्यात्मादितापत्रयज्ञानसंभवात् तत्रोक्तपरमात्मोपासनोपलभ्य-निरतिशयसुखबोधाच्च तेषामर्थित्वं संभवत्येव।

एवं सामर्थ्यादिसंभवात्परदेवतोपासनाधिकारोऽस्ति इति सिद्धम्। सूत्रार्थस्तु - तदुपरि तेषां मनुष्याणामुपरि वर्तमानानां देवानामुपरि नारायणोपासनेऽधिकारोऽस्ति, कुतः, तेषां सामर्थ्यार्थित्वादिसंभवात् इति भगवान् बादरायणो मन्यते इति। पुनर्देवानां विग्रहादिमत्त्वे विरोधमाशङ्क्य परिहरति-

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥१-३-२६॥**

नानादेशवृतेषु तत्र तत्राहूतानां देवानां सर्वत्र युगपत्सान्निध्यमुचितम्। विग्रहादिमत्त्वे सति तन्न युज्यते; ततः कर्मणि विरोध इति चेन्न शङ्क्यमेतत्। विग्रहवत्त्वेऽपि सौभरिप्रभृतिषु युगपदनेकदेहप्रतिपत्तिर्दृष्टा। ततो न कश्चिद्विरोधः। ननु माभूत्कर्मणि विरोधः, वैदिकशब्दे तु स भवतीत्यत आह-

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥१-३-२७॥**

कर्मविरोधाभावेऽपि वैदिके शब्दे विरोधः प्रसज्यते; कथमिति चेत्तत्राह-प्राकृतदेहानां सावयवानां जीवनाऽवधित्वात् स्वाभाविकमनित्यत्वमेव।

अतः प्राकृतदेहवतां देवानामुत्पत्तिनाशावनिवार्यौ तथात्वे तदुत्पत्तेः प्राक् तद्विनाशात् परतश्च वैदिकेन्द्रादिशब्दानां तदाकृतिरूपार्थशून्यत्वम्, अनित्यत्वं वा स्यात्; अनित्यत्वेऽपि प्राकृतत्वेऽपि प्राकृतपुरुषजन्यत्वम्; तेन च विधिनिषेधवाक्यानामप्रामाण्यम्; अतस्तत्प्रयुक्तकर्मणां चासिद्धिरित्यनेकानर्थापत्तिः। ततो वैदिकशब्दविरोधस्य परिहाराय विग्रहवत्त्वं देवानामनङ्गीकार्यमिति चेन्न, अतो वैदिकादेवेन्द्रादिशब्दादिन्द्राद्यर्थसृष्टेः। यदीन्द्रादिशब्दा नष्टतदाकृतिवाचकाः स्युः तदा तु खल्विन्द्रादिनाशे तेषामर्थशून्यत्वमनित्यत्वं वा स्यान्न तथा; किन्तु गवादिजातिवाचकशब्दवदाकृतिवाचकत्वमेवेन्द्रादिशब्दानामुच्यते। तथाहि यथा कुलालो बुद्धिस्थान् घटादिशब्दान् मनसि स्मृत्वा तत्तदाकारं च स्मृत्वा घटादिकं सृजति तथा पूर्वस्मिन्निन्द्रादौ विनष्टे अनादिसिद्धाप्राकृतदिव्यपुरुषाकारनारायण-

मुखनिःसृताद्वैदिकादिन्द्रादिशब्दात् ब्रह्मा पूर्वेन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं तत्तच्छक्तियुक्तं प्रतिमन्वन्तरं सृजति ।

तत इन्द्रादिव्यक्तिविनाशेऽपि वैदिकेन्द्रादिशब्दस्थायास्तत्तदाकृतेरविनाशेन शब्दानां नित्यत्वादविरोधः । किमत्र प्रमाणमिति चेत् श्रुतिः स्मृतिश्च । तथाहि

'वेदेन नामरूपे व्याकरोत् सदसती प्रजापतिः' (तै.ब्रा. २-६-२-३) तथा

'स भूरति व्याहरत्' (तै.ब्रा.२-२-४-२),

स भूमिमसृजत' (तै. ब्रा. २-२-४-२) इत्यादिश्रुतिः

'सर्वेषां च स नामानि कर्माणि च पृथक् पृथक् ।

वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' ॥ (मनु. १-२०)

इति; संस्थाः संस्थानानि रूपाणीति यावत्, तथा

'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनं ।

वेदशब्देभ्य एवादौ देवादीनां चकार स' ॥ (वि.पु. १-५-६३) इत्यादिस्मृतिश्च ।

सूत्रार्थवर्णनम्-शब्दे इन्द्रादिवैदिके शब्दे विरोधः, देवानां नाशे तद्वाचक-शब्दानामर्थशून्यत्वमनित्यत्वं चेति बाधः । अतस्तेषामविग्रहवत्त्वमङ्गीकार्यमिति चेन्न, अतः वैदिकेन्द्रादिशब्दात् तमालम्ब्येत्यर्थः । तेषां प्रभवात् ब्रह्मादिद्वारोत्पत्तेः । कथमिदमवगम्यते, प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां प्रमाणाभ्यां करणभूताभ्यामिति ।

## अत एव च नित्यत्वम् ॥१-३-२८॥

अत एव मन्त्रकृतो वृणीते

'नमो ऋषिभ्यो मन्त्रकृद्भ्यो' (तै.आर. ७-१-७ / तै.आर. प्रपा.४ अनु.१-१),

'अयं साग्निरिति विश्वामित्रस्य सूक्तं भवति' (तै.यजु.काण्ड.५ प्रपाठक.२ अनु.३) इति; विश्वामित्रवसिष्ठादीनां मन्त्रकृत्त्वेऽपि वैदिकानां विश्वामित्रादिशब्दानां तत्तदाकृतिबोधनिमित्त-त्वादेवानादिसिद्धस्य मन्त्रब्राह्मणमयस्य वेदस्य नित्यत्वमुपपद्यते । यतो ब्रह्मा वैदिकान् शब्दार्थान् स्मृत्वा सृजति । कुतः, तस्य तपोयुक्तनारायणोपासनबलेनानधीतपूर्वसिद्धमन्त्रादिदर्शनशक्तत्वात्। तथाहि पूर्वविश्वामित्रादीनामाकृतिविशेषान् तत्तद्वैदिकशब्दैः स्मृत्वा तदाकारानेवापरान् तत्तच्छक्तिविशेषयुक्तान् ब्रह्मा नैमित्तिकप्रलये गते सृजति, ते चानधीत्यैव पूर्वसिद्धान् तान्मन्त्रानखिलान्पठन्ति अतस्तेषां मन्त्रादिकर्तृत्वमेव वेदनित्यत्वं च । ननु नैमित्तिकप्रलये भवत्वेवं परन्तु प्राकृतप्रलये ब्रह्मादौ वेदाख्यशब्दे च विनष्टे कथं वेदनित्यत्वमित्यत आह-

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥१-३-२९॥

सृज्यानां विधिवसिष्ठादिनामरूपसमाननामरूपत्वादेव प्राकृतप्रलयावृत्तावप्यविरोधः ।

तथाहि स सर्वज्ञो भगवान् कमनीयावयवपुरुषोत्तमशब्दाभिधेयो नारायणः प्रकृतिपुरुषाधिप आदिकर्ताऽक्षरपुरुषप्रविष्टः सन् पूर्वरचनाविशिष्टं जगत् स्मृत्वा

'बहु स्याम्' (तै.आन.अनु.६-२)

इति संकल्प्य भोग्यभोक्तृवर्गविशिष्टं संकुचितस्वान्तर्यामिशक्तियुतं प्रलीनत्वादविभक्तनामरूपं यदसंख्यकोटिब्रह्माण्डवृन्दमस्ति तत् महाप्रलयान्ते विकसितस्वान्तर्यामिशक्तिविशिष्टतया यथानामरूपविभागं सृजति, पूर्वक्रमविशिष्टान् वेदानपि संस्मृत्वा पुत्रभूताय ब्रह्मणे प्रयच्छति। कथमिदमवगम्यते, श्रुत्या स्मृत्या च;

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्,
दिवं च पृथिवीं चान्तरिक्षमथो (तै.महा. १-३८ (४६) इति,

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वेता. ६-१८)

इत्यादिश्रुतिरेव दर्शनं, स्मृतिरपि-

'अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ (मनु. १-८)
'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिन्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' ॥ (मनु. १-९)
'ब्रह्माणं विदधे पूर्वं वेदानस्मै प्रयच्छती' (श्वेता. ६-१८) ति ॥

तथा स्कान्देऽपि स्मर्यते

'वासुदेवः परं ब्रह्म बृहत्यक्षरधामनि।
आदावेकोऽद्वितीयोऽभून्निर्गुणो दिव्य विग्रहः ॥ वा. मा. २४ - २)
सकार्यमूलप्रकृतिः सकलाऽक्षरतेजसि।
प्रकाशेऽर्कस्य रात्रीव तिरोभूता तदाऽभवत् ॥ (वा. मा. २४ - ३)
सिसृक्षाथाभवत्तस्य ब्रह्माण्डानां यदा तदा।
सकालाविर्बभूवादौ महामाया ततो हि सा ॥ (वा. मा. २४ - ४)
तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना।
सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि ॥ (वा. मा. २४ - ५)
तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने।
युज्यन्ते स्म प्रधानैस्ते पुरुषाश्चेच्छया प्रभोः ॥ (वा. मा. २४ - ६)
पुमांसो निदधुर्गर्भांस्तेषु तेभ्यश्च जज्ञिरे।
ब्रह्माण्डानि ह्यसंख्यानि तत्रैकं तु विविच्यते' ॥ (वा. मा. २४ - ७) इत्यादि;

ततः प्राकृतप्रलयावृत्तावपि वेदानां नित्यत्वमेव। मतान्तरमाह-

मध्वधिकरणम् ॥१-३-८॥

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥१-३-३०॥

छान्दोग्ये 'असौ वा आदित्यो देवमधु' (छा. ३-१-१) इत्युपक्रम्य 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति' (छा. ३-६-१) इत्युक्त्वा 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति' (छा. ३-६-३)

इत्यादीवाक्यं ऋग्यजुःसामादिचोदितकर्म संपाद्य रसाधारतया मधुमयस्यादित्यस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वांशान् वसुरुद्रादित्यमरूत्साध्यनाम्नां देवगणानां भोग्यत्वेनाभिधाय तैर्भुज्यमानाकारेणादित्यांशानुपास्यानुपदिश्य तानेवादित्यांशांस्तथाभूतान् प्राप्यानुपदिशति' एवमादिषूपासनेषु वस्वादित्यानामधिकारोऽस्ति न वेति संशयः। नास्त्यधिकार इति जैमिनिमतमेव पूर्वः पक्षः। वस्वादीनामुपास्यान्तर्गतत्वेन कर्मकर्तुभावविरोधात् प्राप्यस्य वसुत्वादेः प्राप्तत्त्वाच्च।

सिद्धान्तस्तु वस्वादित्यादिसंज्ञक्षेत्रज्ञान्तरात्मनो नारायणस्यैवोपास्यत्वात् वस्वादित्यादिक्षेत्रज्ञानां स्वावस्थोपगतप्राप्यपरब्रह्मानुसंधानाविरोधात् कल्पान्तरे परब्रह्मात्मकवस्वादित्यत्वादेः प्राप्यत्वाविरोधाच्च वस्वादित्यादीनां मधुविद्यादिषूपासनेष्वधिकाराः सम्भवन्तीति बादरायणमतम्। सूत्रार्थस्तु-मध्वादिषु मधुविद्यादिषु उपासकानां वस्वादित्यादिदेवानां स्वोपास्यत्वमेव स्वप्राप्यत्वमेव च भवति; तस्माद्धेतोः तेषां स्वेषां स्वेष्वेवोपास्योपासकभावरूपविरोधेनोपास्यत्वासंभवात् वर्तमानैर्वस्वादित्यादिभिर्वस्वादित्यत्वं प्राप्तमिति प्राप्तस्य प्राप्यत्वासंभवाच्च मधुविद्यादिरूपोपासनेषु वस्वादित्यादीनामनधिकारं जैमिनिराचार्यो मन्यते इति।

## ज्योतिषि भावाच्च ॥१-३-३१॥

'तद्देवा ज्योतिषां ज्योतिरायुर्होपासते अमृतम्' (बृह. ६-४-१६) इति ज्योतिषि आदित्याद्यसंख्यज्योतिषां प्रकाशकेऽतिकमनीयावयवे मङ्गलमूर्तौ नारायणाभिधे परब्रह्मणि देवानां साधारण्येनोपासनप्राप्तत्वेऽधिकाराभाववचनादन्यत्र मध्वाद्युपासनेऽनधिकारो न्यायसिद्धो गम्यते इत्यपि जैमिनिमतम्।

## भावं तु बादरायणोऽस्ति हि ॥१-३-३२॥

मधुविद्यादिष्वपि वस्वादीनामधिकारभावं बादरायणो मन्यते। अस्ति हि वस्वादीनां विद्यमानानां सतां वस्ववस्थपरब्रह्मण उपास्यत्वसंभवः। कल्पान्तरे वसुत्वादेः प्राप्यत्वसंभवश्च। कार्यकारणोभयावस्थं ब्रह्मात्र समुपास्यम्। तत्र

'असौ वा आदित्यो देवमधु' (छा. ३-१-१)

इत्यारभ्य आदित्यवस्वादिनामरूपकृतियुक्त-कार्यविशेषावस्थं विकसितान्तर्यामिशक्तिरूपं परब्रह्मोपास्यमुपदिश्यते ।

'अथ तत उर्ध्वं उदेत्य नैवोदेता नास्तमेता' (छा. ३-११-१)

इत्यादिना नामरूपकृत्यरहितसूक्ष्मभावापन्नादित्ये संकुचितान्तर्यामितयावस्थितं कारणावस्थं परब्रह्मोपास्यमुपदिश्यते । तदुभयावस्थब्रह्मोपासनफलं कल्पान्तरे वस्वादित्वमुभयाधिकारावसाने ब्रह्मप्राप्तिश्च । तत्र

'स य एतदेवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति' (छा. ३-६-३)

इत्यादिना वस्वादित्वरूपं फलमुपदिश्यते ।

'न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद' (छा. ३-११-३)

इति ब्रह्मप्राप्तिरूपं फलमुपदिश्यते । ततो मध्वादिष्वपि देवानामधिकारोऽस्तीति सर्वथा देवा ब्रह्मविद्याधिकारिणोऽन्तर्यामिशक्त्याधारभूतदिव्यमङ्गलमूर्त्तिपरब्रह्मोपासकाश्चेति निर्णयः । अथ मनुष्याधिकारत्वादिति सामान्येन मनुष्याणामधिकारे प्राप्ते विशेषमाह-

अपशूद्राधिकरणम् ॥१-३-९॥

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥१-३-३३॥

अस्य विषयश्छान्दोग्ये श्रूयते,

'आजहारेमाः शुद्रानेनैव मुखेनालापयिष्यथाः' (छा. ४-२-५) इति ।

अत्राचार्यः शिष्यं शूद्रेत्यामन्त्रयते । अतः शुद्राणामपि ब्रह्मविद्यायामधिकारोऽस्ति नवेति सन्देहः। तेषामधिकारोऽस्ति अर्थित्वादिसंभवात् । नच त्रैवर्णिकानामेवेति नियमः । शूद्राणामग्निविद्यारहितत्वेऽपि मनोमात्रेण ब्रह्मविद्यारूपोपासनसंभवात् । एतेषां विद्वत्ता कथमिति न शङ्क्यम् । इतिहासपुराणश्रवणादिना तेषां बोधोपलब्धेः ।

'निषादस्थपतिं याजयत्' (आप.श्रौ.प्र.९ कं. १४-१२)

इति न्यायेन महावाक्यग्रहणेऽधिकारसंभवाच्च । तस्मादमीषामधिकारो ब्रह्मविद्यायामुचित इति प्राप्ते ब्रूमः-नास्ति शुद्राणां ब्रह्मविद्यायामधिकारस्तेषामध्ययनाभावेन ब्रह्मविद्याधिकारोपायभूतगुणोपास्य-देवताविशेषस्य तद्‌गुणादीनां च ज्ञानसंभवात् । इतिहासपुराणानि वेदोपबृंहणं कुर्वन्ति नतु ब्रह्मविद्याधिकारोपायभावं बोधयन्ति । किञ्च ब्राह्मणसान्निध्ये सति शुद्राणामितिहासपुराणश्रवणाज्ञा भवति नतु स्वातन्त्र्येण । सा चापि

पापक्षयादिफलार्था न तु ब्रह्मविद्यारूपोपासनार्था । ननु तर्हि विदूरधर्मव्याधादीनां कथं ब्रह्मविद्यानिष्ठत्वमिति चेद्ब्रूमः-तेषां जन्मान्तरसिद्धज्ञानस्मृतिभ्रंशाऽभावाद्ब्रह्मविद्यानिष्ठता भवत्येव । कथं ब्रह्मविद्योपदेशे शूद्रेत्यामन्त्रणमिति चेत् नात्र जातियोगेन शूद्रेत्यामन्त्रणं किन्तु ब्रह्मज्ञानाप्राप्त्या 'शुगस्य संजाते'ति दर्शनात् शुद्रेत्यामन्त्रणम् । एतत्सूत्रार्थेन स्पष्टीक्रियते-तदनादरश्रवणात् ब्रह्मविद्यारहिततया स्वात्मानं प्रति हंसोक्तानादरवाक्यश्रवणात् तदाद्रवणात् तदैव रैक्वमाचार्यं प्रत्याद्रवणादुपसर्पणाच्च अस्य शुश्रुषोर्जानश्रुतेः ब्रह्मविद्याऽनुपलब्ध्या संजाता शुक् शोकः सूच्यते रैक्वाचार्येण ज्ञाप्यते । हि शब्दो हेत्वर्थः । यतः शुद्रेत्यामन्त्रणं न जातियोगेन अतः शुद्रस्य ब्रह्मविद्याधिकारो नास्तीति । अतोऽपि शुद्रेत्यामन्त्रणं न जातियोगेनेत्याह-

## क्षत्रियत्वावगतेश्च ॥१-३-३४॥

शुश्रुषोर्जानश्रुतेः क्षत्रियत्वस्य अवगतिः प्राप्तिः अतश्च हेतोः न जातियोगेन शूद्रेत्यामन्त्रणम्; छान्दोग्यस्योपाख्यानोपक्रमे हि

'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह
सर्वत आवसथान् मापयांचक्रे सर्वत एव मेऽन्नमत्स्यन्ति' (छा. ४-१-१)

इति जानश्रुतेर्दानपतित्वं बहुतरपक्वान्नप्रदायित्वं चोक्तम्; मध्ये स च

'स ह संजिहान एव क्षत्तारमुवाच' (छा. ४-१-५)

इति क्षतृप्रेषणमुक्तम् । अन्ते च

'इयं जाया अयं ग्रामो यस्मिन्नास्से' (छा. ४-२-४) इति,
'ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास' (छा. ४-२-५)

इति बहुग्रामप्रदायित्वमुक्तम् । एतैर्लिङ्गैर्जानश्रुतेः क्षत्रियत्वमवगम्यते ।

## उत्तरत्र चैत्ररथेन लिङ्गात् ॥१-३-३५॥

उपरिष्टाच्चास्यां संवर्गविद्यायां ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते ।

'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी विभिक्ष' (छा. ४-३-५) इत्यादौ अभिप्रतारी चैत्ररथः क्षत्रियश्चेत्यवगम्यते । कापेयाख्ययाजकयोगात् चित्ररथपुरोहितेन कापेयेन याजकेन योगो हि चैत्ररथस्य श्रुतः,

'एतेन वै चैत्ररथं कापेया अयाजयन् तमेकाकिनं अन्नाद्यस्याध्यक्षमकुर्वन्'
(ताण्ड्य. ब्रा. २०-१२-५)

इति अभिप्रतारिणः संज्ञाभेदात् चैत्ररथत्वासिद्धावपि तद्वंशयत्वमेतेन वाक्येन सिद्ध्यति;

'समानान्वयानां हि समानान्वयाः प्रायेण याजका भवन्ती'ति न्यायात् चित्ररथवंशयत्वे सति क्षत्रियत्वं तस्मच्चैत्ररथो नामैकः क्षत्रपतिरजायते'ति तद्वाक्यशेषेण सिद्ध्यति। एवं चोत्तरत्र ब्राह्मणेन कापेयेन युक्तोऽभिप्रतारी क्षत्रिय इति निश्चितं तद्वत् ब्राह्मणेन रैक्वेन युक्तो जानुश्रुतिरपि क्षत्रिय इति गम्यते। अतः क्षत्रिय एव शुद्रेत्यामन्त्रितः। सूत्रार्थस्तु -अस्यां संवर्गविद्यायां चैत्ररथेन अभिप्रतारिनाम्ना क्षत्रियेण सह उत्तरत्र अग्रे लिङ्गात् कापेययाजकयोगसूचनात् रैक्वब्राह्मणयोगेन जानश्रुतेः क्षत्रियत्वं प्रतीयते; अतः क्षत्रियस्य जानश्रुतेः शूद्रेत्यामन्त्रणमिति। यदुक्तं निषादस्थपतिन्यायेन शूद्रस्य महावाक्यश्रवणमात्रेऽधिकार इति तत्राह-

## संस्कारपरामर्शात् तदभावाभिलापाच्च ॥१-३-३६॥

ब्रह्मविद्याधिकारे संस्कारपरामर्शात्
'उप त्वा नेष्ये तं होपनिन्ये' (छा. ४-४-५)
इत्यादिप्रदेशेषु उपनयनसंस्कारग्रहणात्
'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' (मनु. १०-१२६),
'शूद्रश्चतुर्थो वर्ण एकजातिः' (गौतमधर्म सू. १०-५१ / मनु. १०-४)
इत्यादिस्मृतिषु शूद्रस्य तदभावाभिलापाच्च तस्य उपनयनसंस्कारस्याभावस्तस्याभिलापात् कथनाच्च तस्य ब्रह्मविद्यायामनधिकारः। यतो
'निषादस्थपतिं याजयेत्' (आप.श्रौ.प्र.९ कं. १४-१२)
इति विधिः उपनयनाभावेऽप्यस्ति; अतो ब्राह्मणद्वारा याजने शूद्रस्य स्वयमितिहासपुराणोक्त-कृष्णोपासने च न विरोधः।

'अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यगव्यवसितो हि सः' (गीता. ९-३०) ॥
'मामुपाश्रित्य कौन्तेय येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्' (गीता. ९-३२) ॥

इत्यादिस्मरणात् श्रीकृष्णोपासनाधिकारोऽस्ति शूद्रस्य। महावाक्यश्रवणे तु कुत्रापि विधिर्नैव दृष्टः।

## तदभावनिर्धारणे च प्रवृत्तेः ॥१-३-३७॥

'नैतदब्राह्मणो विवक्तुमर्हति समिधं सौम्याहरोप त्वा नेष्ये न सत्यादगाः' (छा. ४-४-५)
इति सत्यवचनेन जाबालस्य शुद्रत्वाभावनिर्धारणे सत्येव तदुपनयनानुशासनविद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः। ननूपनयनाभावे ब्रह्मोच्चारणेनिषेधः क्वचित्कः सार्वत्रिको वा? न सार्वत्रिकः शिशोरुपनयनाभावेऽपि 'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्' (गौतम स्मृ.अ.२)

इति स्वधानिनयने ब्रह्मोच्चारणविधानात्तेन क्वचित्क इति युज्यते; अतो यज्ञोपवीतसंस्कारवर्जितस्य शुद्रस्य संबन्धिनीषु पाकयज्ञादिक्रियासु ब्राह्मणानामपि वेदोच्चारणे निषेधोऽस्ति, नतु तस्य ब्रह्मविद्यायामित्याशङ्कयामाह-

श्रवणाध्ययनार्थप्रतिषेधात् ॥१-३-३८॥

शूद्रस्य वेदवाक्यश्रवणादि निषिध्यते; तस्माच्छूद्रसमीपे नाध्येतव्यमिति अनुपश्रृण्वतः कुतोऽध्ययनादिप्रसक्तिः ॥

स्मृतेश्च ॥१-३-३९॥

स्मर्यते च शूद्रस्य वेदश्रवणादौ दण्डः,

'अथ ह्यस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्; उदाहरणे जिह्वाच्छेदो धारणे शरीरभेद' (गौतम स्मृ. अ. १२) इति।

एवं श्रुतिस्मृतिभ्यां शूद्रसमीपाध्ययनादिनिषेधात्कुतस्तेषां वेदार्थविचारादिकम् । सर्वथाष्टवर्षादियुक्तब्राह्मणाद्युपयुक्तोपनयनसंस्कारमन्तरेण वेदाध्ययनप्राप्तिर्न कुत्रापि कस्यचित्। अतः शूद्रा वेदविद्यायमनाधिकारिण एव। एवं प्रासङ्गिकमधिकारिनिरूपणं कृत्वा प्रकृतमनुसरति।

कम्पनाधिकरणम् ॥१-३-१०॥

कम्पनात् ॥१-३-४०॥

श्रूयतेऽस्य विषयः कठवल्लीष्वंगुष्ठप्रमितपुरुषप्रकरणे

'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं
य एतद्विदुरमृतास्ते भवन्ति' (कठ. ६-२) इति।

तत्र कम्पनहेतुः नारायणोऽन्यो वेति संशयः। अत्र प्राणशब्दनिर्दिष्टपदार्थाज्जनितभयेन सकलजगत्कम्पनमुच्यते। नारायणस्य सकलजगदभयप्रदानेन मधुस्वभावस्य परमकारुणिकस्य जगत्कम्पनहेतुत्वमयुक्तम् । तस्माद्वज्रमुद्यतमिति श्रूतेरशनिः कम्पनहेतुः, यद्वा प्राणवायुः कम्पनहेतुः, प्राण एजतीति श्रुतेः । प्राणवायोः देहचलनहेतुत्वेन प्राणे निमित्ते सर्वमिदं जगच्छरीररूपं चलतीति

'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्' (कठ. ६-२) इत्यस्य तत्रोपपत्तेः ।

'विद्युत्स्तनयित्नुर्वृष्टिश्च महाभयहेतुरशनिरपि
एतत्सर्वं वायुनिमित्तमेव विवर्तते (हिरण्यकेशीय ध.सू. ३ - ७७) इति ।

'महद्भयं वज्रमुद्यतम्' (कठ. ६-२) इति अस्यापि तत्रोपपत्तेः

'वायुरेव व्यष्टिर्वायुरेव समष्टिरप पुनर्मृत्युं जयति य एवं वेद'

इति श्रुतेर्वायुविज्ञानादमृतत्वोपपत्तेश्चेति प्राप्ते नारायण एव कम्पनहेतुरिति ब्रूमः- नारायणस्य सकलजगत्कम्पनहेतुत्वं शासकत्वाद्भवति; यस्य शासनभयेन सर्वे वयं निषिद्धविमुखा विहितेषु कर्मसु प्रवर्त्तामहे, यच्छासनभयादेव वाय्वादीनां स्वस्वाधिकारप्रकारप्रवृत्तिः

'भीषास्माद्वातः पवते' (तै.उ.आन. ८-१) इत्यादिष्ववगम्यते ।

कल्याणमूर्तिरपि नारायणः शासकतया भयदर्शनो भवति । तत् श्रूयते

'तस्माद्राजमुखं भीष्मं भावुकम्' (तै.ब्रा. ३-८-२३-१)

इति तस्मात्स्वामितया । सकलजगद्भयहेतुर्नारायण एव । दहरादिषूपास्यतया निर्दिष्टस्य नारायणस्य प्राप्यत्वमुपपादयितुमधिकरणान्तरमारभ्यते-

ज्योतिरधिकरणम् ॥१-३-११॥

## ज्योतिर्दर्शनात् ॥१-३-४१॥

श्रूयतेऽस्य विषयश्छान्दोग्ये प्रजापतिविद्यायाम् ।

'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुष' (छा. ८-३-४)

इति मुक्तप्राप्यतया श्रूयमाणं परं ज्योतिः वासुदेवाभिधो नारायणः किं वा अक्षरं ब्रह्मेति संशयः। अक्षरं ब्रह्मेति पूर्वः पक्षः । यतः मुक्तप्राप्यस्य परज्योतिषोऽक्षरब्रह्मशब्दवाच्यतयावगमात् । परं ज्योतिरितिशब्दोऽक्षरब्रह्मण्येव रूढ इति प्राप्ते सिद्धान्तं ब्रूमः- 'मुक्तप्राप्यं यत्परं ज्योतिः स उत्तमपुरुष' इति वाक्यशेषे तच्छब्देनाभिहित उत्तमपुरुषः स एव

'अक्षरात्परतः परः' (मुण्ड. २-१-२)

इति श्रुत्यन्तरेऽक्षरपरतयाभिहितः परमात्मसंज्ञनारायण एवेति निश्चीयते । अतः उत्तमपुरुषशब्दः पुरुषोत्तमशब्दवाच्ये परमात्मन्येव रूढ इति सिद्धम् । तथाहि स्मर्यते-

'कूटस्थोऽक्षर उच्यते' (गीता. १५-१६),

'उत्तमः पुरषस्त्वन्यः परमात्मेत्युदाहृतः' (गीता. १५-१७),

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' (गीता. १५-१८) इति ।

एवं च सति परं ज्योतिरितिशब्देन वाच्यः परमात्मैवावगम्यते नत्वक्षरं ब्रह्म; कुतः, वाक्यशेषे स उत्तमपुरुष इति दर्शनात् -

## अर्थान्तरत्वाधिकरणम् ॥१-३-१२॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥१-३-४२॥

श्रूयतेऽस्य विषयश्छान्दोग्ये

'आकाशो ह वै नामरूपयोनिर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा. ८-१४-१)

इति अत्र श्रूयमाण आकाशो नारायणो वा भूतादिमं व्योम वा जीवो वेति सन्देहः। सकलस्थावरजंगमभूतावकाशप्रदातृत्वेन नामरूपयोर्निर्वाहकत्वस्य भूतादिमे व्योम्नि संभवात्। भूतादिमं व्योमेहाकाशः अथवा जीवः।

'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा. ६-३-२)

इति तस्य नामरूपव्याकरणसम्बन्धदर्शनात्; इत्येवं प्राप्ते ब्रूमः अत्राकाशब्देन नारायण एव नामरूपनिर्वाहकः श्रूयते अर्थान्तरत्वादिव्यपदेशात्। तस्यैवार्थान्तरत्वादिभिरर्थान्तरसूचकत्वेन प्रथमपठितैरमृतत्वादिधर्मैर्व्यपदेशात् नहि भूतादिमाकाशे जीवे वा अमृतत्वादिकं संघटते; अतो नारायण एवात्राकाशशब्दाभिहित इति निश्चीयते। ननु

'अहं ब्रह्मास्मि' (बृ. ३-४-१०)

'तत्त्वमसि' (छा.६-८-७)

इत्यादिवाक्यैरेकत्वव्यपदेशाद्बद्धमुक्तोभयावस्थजीवात्मवृंदान्नार्थान्तरभूतो नारायणोऽस्तीत्याशङ्क्याह-

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥१-३-४३॥

'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ. ६-३-२१),

'प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति' (बृ. ६-३-३५)

इति सुषुप्त्यवस्थायां प्राज्ञेन अतिशायिप्रज्ञावता आत्मना जीवान्तर्यामिशक्तिरूपेण परमात्मांशेन सह संपरिष्वक्तः अविद्यामयकारणशरीरावृतः सन् संलग्नः जीवात्मा बाह्यं पुत्रधनादि किञ्चन न वेद, आन्तरं स्वप्नविषयकलापं च उत्क्रमणसमये प्राज्ञेनात्मना स्वान्तर्यामिणा अन्वारूढः संयुक्त इत्यर्थः। सः उत्सर्जन् देहं त्यजन् तं त्यक्त्वेत्यर्थः याति यदा गच्छति तदा बाह्यमान्तरं च न किञ्चन वेद, इति श्रुतितात्पर्यार्थे सुषुप्त्युत्क्रान्त्योः सुषुप्तौ उत्क्रान्तिर्मरणकालस्तस्यां च बाह्याभ्यन्तरपदार्थज्ञानवर्जिताज्जीवात्तदानीमपि प्राज्ञस्यान्तर्यामिणो भेदेन निर्देशात् परमात्मा जीववादर्थान्तरभूतोऽस्ति; अतोऽत्र प्रकरणे आकाशब्दाभिहितः स एवेति विज्ञायते।

## पत्यादिशब्देभ्यः ॥१-३-४४॥

उक्ते सर्वज्ञे परमात्मनि श्रुत्यभिहितेभ्यः पत्यादिशब्देभ्यो हेतुभ्यः जीवकलापादयमितर एवेति विज्ञायते;

'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' (बृ. ६-४-२२)

इत्यादिकमसाधारणमैश्वर्यं यदुत्तरत्र श्रूयते तदेव परब्रह्मशब्दवाच्ये नारायणे विद्यते इति सर्वत्र प्रसिद्धम्; एतच्च नारायणादन्यत्र जीवादिषु न श्रुतम् -

अतो बद्धमुक्तोभयावस्थजीवकलापान्नित्यमुक्ताक्षरब्रह्मणः सकाशाच्चेतरो नारायण एवात्र प्रकरणे आकाशशब्दाभिहितः ।

इति
श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
प्रथमाध्यायस्य तृतीयपादः ॥ ३॥



## प्रथमाध्याये चतुर्थपादः ॥

तृतीयपादे स्पष्टाऽस्पष्टत्वेन परब्रह्मस्वरूपबोधकान्युपनिषद्वाक्यानि मीमांसितानि । अत्र चतुर्थपादे त्वस्पष्टतया परब्रह्मलिङ्गप्रतिपादकानि कतिपयानि वेदान्तवचनानि मीमांस्यन्ते ।

आनुमानिकाधिकरणम् ॥१-४-१॥

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीते र्दर्शयति च ॥१-४-१॥

श्रूयतेऽस्य विषयः कठवल्ल्याम्-

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः'॥ (कठ. १-३-१०, ११) इति,

अत्र महतः परत्वेन श्रूयमाणमव्यक्तशब्दाभिहितं कपिलस्मृतिप्रोक्तं प्रधानं स्थूलसूक्ष्माभिन्न-कारणशरीरं वेति सन्देहः पूर्वपक्षन्यायस्तु प्रधानमिति । कुतः, सांख्यशास्त्रे महदव्यक्तपुरुषाणामेव विख्यातेः त एवेह श्रुतौ ज्ञापिताः । नात्र कश्चिच्छरीरस्य प्रसङ्गः । तस्मात्सांख्योक्तं प्रधानमत्राभिहितमिति प्राप्ते शरीरमिति सिद्धान्तं ब्रूमः- पूर्वत्र

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्'॥ (कठ.१-३-३,४)

इत्यात्मशरीरादिषूपासनसाधनभूतेषु तद्वशीकरणीयत्वार्थं रथिरथादिरूपकतया विन्यस्तेषु रथरूपकत्वेनाभिहितस्य शरीरस्याव्यक्तशब्देन गृहीतेः

'इन्द्रियेभ्यः परा ह्यर्थाः' (कठ. १-३-१०) इत्यारभ्य
'काष्ठा सा परा गतिः' (कठ. १-३-११)

इत्यन्तेन वाक्यनेन्द्रियादीनां वशीकरणीयत्वार्थं ह्युत्तरोत्तरतया परत्वमुच्यते; तदेतदुत्तरत्र श्रुतिरेव दर्शयति तथाहि

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञान आत्मनि। ज्ञानमात्मनि महति
'नियच्छेत्तद्यच्छेच्छान्त आत्मनि' (कठ. १-३-१३)

इति; वाङ्मनसी इति वाक्शब्दे द्वितीयायाः 'सुपां सुलुक्' (अष्टा.पा.सू. ७-१-३९) इति लुक्, मनसी इति सप्तम्याश्छान्दसो दीर्घः । प्राज्ञः अतिशयविवेकयुतबुद्धिमान्नरः वाक् वाचं तदुपलक्षितानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च मनसि यच्छेद्वशीकुर्यात्; तन्मनश्च ज्ञाने बुद्धौ कार्याकार्यविवेकवत्यां बुद्धौ यच्छेत्; तां च महति आत्मनि यच्छेत्; ज्ञानं बुद्धिं च आत्मनि

शुद्धजीवात्मनि यच्छेत्; तत्तं जीवात्मानं शान्ते निरतिशयानन्दमये आत्मनि परमात्मनि यच्छेदिति श्रुतितात्पर्यार्थः। एवं सामर्थ्ययुतो रथी वैष्णवं पदं पश्यति; तस्मादत्राव्यक्तशब्देन शरीरमेव प्रतिपादनीयं न प्रधानम्। सूत्रपदार्थो विविच्यते एकेषां कठानां शाखापठितायामिन्द्रियेभ्यः परा ह्यर्था इत्यारभ्य, 'सा परा गति'रित्यन्तायां श्रुतावव्यक्तशब्देन आनुमानिकं प्रधानमेवोक्तमिति चेन्न; कुतः, शरीररूपकविन्यस्तगृहीतेः पूर्वत्र शरीरस्य रूपकेन रथरूपेण विन्यस्ते कल्पनायां गृहीतेर्ग्रहणात्। अतोऽत्राव्यक्तशब्देन शरीरमेवोपादेयम्। यदर्थादीनां परत्वं तत्विन्द्रियादिनियमनार्थम् इममेवार्थम्

'यच्छेद्वाङ्मनसी प्राज्ञः' (कठ. १-३-१३) इति श्रुतिर्दर्शयति।

नन्वव्यक्तशब्दवाच्यं प्रधानमेव प्रसिद्धमतोऽत्र शरीरं कथमुच्यते इति सन्दिह्य वदति-

## सूक्ष्मं तु तदर्हत्वात् ॥१-४-२॥

तु शब्दोऽवधारणार्थः सूक्ष्मं भूतसूक्ष्ममेवाव्यक्तशब्दाभिहितमस्ति। तदेवावस्थान्तरापन्नं स्थूलादिशरीरं प्रतीयते। कुतः, तदर्हत्वात् - तस्याव्यक्तस्यार्हत्वात् - अवस्थान्तरापन्नत्वे योग्यत्वात्। अतस्तस्याव्यक्तशब्दाभिधेयत्वमुचितमेव। यदि रथिरथादिरूपकविन्यस्त आत्मादय इन्द्रियादिनियमनाय

'इन्द्रियेभ्यः परा ह्यर्थाः' (कठ. १-३-१०) इत्यादिनोपादीयन्ते तर्हि

'अव्यक्तात्पुरुषः परः' (कठ. १-३-११)

'पुरुषान्न परं किञ्चित्सा काष्ठा सा परागतिः' (कठ. १-३-११)

इति पुरुषोपादानं किमर्थमिति चेत्तत्र सूत्रमाह-

## तदधीनत्वादर्थवत् ॥१-४-३॥

रथिरथादिरूपकविन्यस्तमात्मशरीरादिकं पुरुषाभिधनारायणाधीनत्वेनार्थवत् तदुपासनासिद्धये सप्रयोजनं भवति। नारायणोऽन्तर्यामितया सर्वमात्मादिकं प्रतितिष्ठन्नेवोपासनासाधनत्वेन वशीकरणीयेष्विन्द्रियहयादिषूत्तरोत्तरं वशीकरणीयतया परेषु व्याप्तः ततो व्यतिरिक्ततया स्वधाम्नि दिव्यमूर्त्त्या पृथक् स्थितोऽस्ति। एवंभूतस्य तस्योपासकेष्वनुग्राहकत्वात् त्रिगुणातीतपरमानन्ददायकत्वाच्च प्राप्यत्वेन

'सा परा गतिः' (कठ. १-३-११) इति चाभिधीयते।

तस्माद्धेतोरप्यत्राव्यक्तं शरीरमेवाभिहितम्।

## ज्ञेयत्वावचनाच्च ॥१-४-४॥

यदि सांख्यशास्त्रोक्तं प्रधानमत्राव्यक्तशब्दोक्तं स्यात्तर्हि तस्य ज्ञेयत्वमुच्येत। अस्यामुपनिषदि

तु प्रधानज्ञेयत्वस्य अवचनाद्धेतोः न च तदस्ति; अतोऽत्र कपिलस्मृत्यभिहितमव्यक्तं न ज्ञेयम्। नन्वस्यापि ज्ञेयत्वमभिहतं भवतीत्याशङ्क्य परिहरति-

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥१-४-५॥

'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते'॥ (कठ. १-३-१५)

इत्यग्रेतनमन्त्रोऽस्यापि ज्ञेयतां वदतीति चेन्न,

'तद्यच्छेच्छान्त आत्मनि' (कठ. १-३-१३)

इति श्रुत्या यस्मिन्परमात्मनि जीवस्य वशीकरणमुक्तं स एव प्राज्ञः परमात्मा 'परं ध्रुवं निचाय्य तमि'त्यत्र ज्ञेयत्वेनाभिहितः। कुतः, प्रकरणात् -

'एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः'॥ (कठ. १-३-१२)

इति तस्यैव पूर्वं प्रकृतत्वात्; अतो व्यक्तं शरीरमेव, प्रधानस्य प्रसंगो नास्तीत्याह-

## त्रयाणमेव चैवमुपन्यासः प्रश्नश्च ॥१-४-६॥

त्रयाणामुपास्योपासनोपासकानामेवात्र प्रकरणे ज्ञेयत्वेनोपन्यासः प्रश्नश्च क्रियते न प्रधानादेः यथा -

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति'॥ (कठ.१-२-१२)

इत्यादिरुपन्यासः।

'येयं प्रेते विचिकित्सा मनुष्य अस्तीत्येके नायमस्तीति चैके,
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' (कठ.१-१-२१)

तूपासकजीवविषयप्रश्नः।

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृतात्
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' (कठ. १-२-१४) इति चोपास्यप्रश्नः।
'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्' (कठ.१-१-१३)

इति चोपासनप्रश्नः। एवं तस्याप्रकृतत्वादपि शरीरमेवाव्यक्तं न प्रधानम्। किञ्च प्रमाणान्तरमप्यस्तीत्याह-

## महद्वच्च ॥१-४-७॥

यथात्र 'बुद्धेरात्मा महान् परः' (कठ. १-३-१०)

इति श्रुतौ कापिलतन्त्रोक्तं महत्तत्त्वं न भवति तस्यात्मशब्दविशेषणत्वात् तथाऽत्राव्यक्तशब्दादपि प्रधानं न ज्ञेयमिति सिद्धान्तः । अप्रकृतत्वात्; अतोऽत्र न प्रधानप्रसंगः । एवं चात्र भवतु, अन्यत्र प्रधानमेव कारणत्वेन श्रूयत इत्याशङ्क्याधिकरणमिदमारभ्यते -

चमसाधिकरणम् ॥१-४-२॥

## चमसवदविशेषात् ॥१-४-८॥

श्रूयतेऽस्य विषयः श्वेताश्वतरोपनिषदि-

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य'॥ (श्वेता. ४-५) इति

इह सर्वप्रपञ्चकारत्वेन जन्मरहितत्वादजेति श्रूयमाणा प्रकृतिः सांख्यसिद्धा परा वेति संशये सांख्यसिद्धेति वक्तुं युक्तम्; अजामिति जन्माभाववचनात् सर्वप्रजाकारणत्वाच्च, लोहितशुक्लकृष्णामिति वर्णोपलक्षितगुणत्रयावगमाच्च तदन्यस्याः कस्याश्चिदेवंविधत्वं न युक्तमिति प्राप्ते सिद्धान्तः- न विधिपुत्रकपिलतन्त्रसिद्धा प्रकृतिरिह कारणत्वेनोच्यते न हि जन्माभावमात्रेण तस्या एव प्रतीतिः सूत्रार्थो वर्ण्यते 'चमसवदविशेषात्' यथाऽर्वाग्बिलश्चमस इति मन्त्रे भक्षणसाधनत्वयोगेन चमसाख्ये पदार्थे प्रवृत्तस्य चमसशब्दस्य शिरसि प्रवृत्तौ

'इदं तच्छिर एष ह्यर्वाग्बिलश्चमसः' (बृ. ४-२-३)

इति वाक्यशेषे विशेषदर्शनं तथाऽजामेकामित्यजाशब्दस्य कापिलतन्त्राभिहितप्रधाने प्रवृत्तौ अविशेषाद्विशेषदर्शनाभावात् केवलया शब्दप्रवृत्त्या नायमजाशब्दः कपिलतन्त्रोक्तप्रधानविषयः। ननु तन्त्रसिद्धायाः प्रकृतेरन्याजा कीदृशीत्यत्राह-

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥१-४-९॥

ज्योतिः शब्देन परब्रह्मसंज्ञो नारायण उच्यते । ज्योतिः परब्रह्म उपक्रमः कारणं यस्या एवंभूतेयमजा प्रकृतिरेवोच्यते । तुशब्दोऽवधारणार्थः । तथाहि तेनैव प्रकारेण नारायणकारणिकायाः प्रकृतेः प्रतिपादकं मन्त्रं अधीयते एके तैत्तिरीयशाखिनः ।

'अणोरणीयान्महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः' (श्वेता. ३-२०) इति परब्रह्मोपक्रम्य

'सप्त प्राणाः प्रभवन्ति तस्मात्' (तै.महा.अनु.१०-२)

इत्यादिना सप्रकृतिपुरुषस्य समस्तचेतनाचेतनविशिष्टस्य नारायणप्रकाशरूपसंकुचितान्तर्यामिशक्तौ तिरोभूतस्य प्रपञ्चस्य ततः पुनरुत्पत्तौ सत्यां तस्य विकसितान्तर्यामिशक्तिरूपब्रह्मात्मकप्रतिपादनसमये तां ह्यजामिति पठन्ति, अतस्तत्प्रत्यभिज्ञानादियं परब्रह्मकारणिकेति निश्चीयते; अतो न तन्त्रसिद्धेयमिति वादो युक्तः । ननु इयमजा नारायणकारणिकेत्यस्याः

नारायणकार्यत्वमुच्यते कथमस्यास्तादृश्या अजामित्यजन्मत्ववाद इत्याशङ्क्याह –

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१-४-१०॥

कल्पनाशब्देन सृष्टिरुच्यते ।

'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' ॥ (श्वेता. ४-९)

'माया तुं प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वेता. ४-१०)

इति कल्पनोपदेशात् जगत्सृष्ट्युपदेशात् प्रकृतेः सूक्ष्मत्वस्थूलत्वोभयावस्थाभ्यामजत्व-परब्रह्मकार्यत्वयोरविरोधः । तथाहि- प्रलयकाले नामरूपे विहायाचिद्वस्तुरूपा प्रकृतिसंज्ञा मायापि स्वधामस्थस्य दिव्यविग्रहस्य नारायणस्य संकुचितान्तर्यामिशक्तिरूपप्रकाशे सूक्ष्मरूपेण संलग्नाऽभवत् । अतः संकुचितान्तर्यामिशक्तिरूपस्य नारायणस्य शरीरतया तदानीमवतिष्ठते । इत्थं

'यस्य प्रकृतिः शरीरमि'ति श्रुतिर्हि वदति । एवं रीत्याऽस्या अजात्वं सृष्टिसमये नारायणविकसितान्तर्यामिशक्त्या नामरूपोपेतत्वं हि कार्यत्वं नारायणस्य च कारणत्वमविरोधेन निश्चीयते । तथाहि स्कान्दे स्मर्यते-

'सकार्यमूलप्रकृतिः सकालाक्षरतेजसि ।
प्रकाशेऽर्कस्य रात्रीव तिरोभूता तदाभवत् ॥ (वा.मा.२४-३)
सिसृक्षाथाभवत्तस्य ब्रह्माण्डानां यदा तदा ।
सकालाविर्बभूवादौ महामाया ततो हि सा' ॥ (वा.मा.२४-४)

इति मध्वादिवत् । यथा आदित्यस्य सृष्टिसमये वस्वादिभोग्यरसाधारत्वेन मधुत्वं कार्यत्वं च तस्य पुनः प्रलयकाले मध्वादिव्यपदेशानर्हात्यन्तसूक्ष्मरूपेणावस्थानादकार्यत्वं च मधुविद्यायां प्रतीयते

'असौ वा आदित्यो देव मधु' (छा. ३-१-१),

'नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' (छा. ३-११-१) इति श्रूतेः ।

एवं प्रकृतेरजात्वं परब्रह्मकारणत्वेन कार्यत्वं चाविरुद्धम् । तस्मादजा न तन्त्रसिद्धा । पुनरन्यत्र कपिलतन्त्रसिद्धानि पञ्चविंशतिसंख्यानि तत्त्वानि श्रूयन्त इत्याशङ्क्य तत्परिहर्तुमधिकरणान्तरमारभ्यते-

### संख्योपसंग्रहाधिकरणम् ॥१-४-३॥

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥१-४-११॥

वाजसनेयिशाखाध्ययने श्रूयतेऽस्य विषयः,

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोमृतम्' ॥ (बृ. ६-४-१७) इति,

अत्र पञ्च पञ्चजनाः किं सांख्यसिद्धानि तत्वानि श्रुतिप्रसिद्धानि वेति संशयः । पञ्चविंशतिसंख्यायास्सांख्यशास्त्रप्रसिद्धत्वात् अत्र तदवभासात् सर्वथा पञ्च पञ्चजना इति तान्येव प्रतिपाद्यानीति प्राप्ते ब्रूमः- पञ्च पञ्चेति पञ्चविंशतिसंख्योपसंग्रहादपि न तांत्रिकानि तत्त्वानि यस्मिन्निति यच्छब्दनिर्दिष्टनारायणाधारत्वममीषां प्रतीयते इति तेभ्य एषां नानाभावात् पृथग्भावात् आकाशस्य पृथक्निर्देशेन तत्त्वातिरेकाच्च तत्रातिरेकस्तत्त्वानामधिकसंख्यात्वम्; अतोऽत्र न सांख्योक्तपञ्चविंशतितत्त्वप्रसंगः- किञ्च पञ्चविंशतिसंख्योपसंग्रहोऽपि न युक्तः

'दिक्संख्ये संज्ञायाम्' (अष्टा.पा. सू. २-१-५०)

इति संज्ञाविषयो ह्ययं समासः । तस्मात्पञ्चजना नाम केचित्ते पञ्चेति पञ्च पञ्चजना इत्युच्यन्ते सप्त सप्तर्षय इतिवत् । अतो न सांख्यतत्वप्रसक्तिः । के पुनरेत इत्यत आह-

## प्राणादयो वाक्यशेषात् ॥१-४-१२॥

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः'

(बृ. ६-४-१८ पाठभेदः (मा.पा.))

इति वाक्यशेषात् पञ्चजनसंज्ञकाः प्राणादयः पञ्चेति गम्यन्ते । अतो न तान्त्रिकतत्वप्रसक्तिः । पुनरुपपत्तिरुच्यते ।

## ज्योतिषैकेषामसत्यन्ने ॥१-४-१३॥

एकेषां काण्वानां पाठे असत्यन्ने अन्नस्यान्नमिति शब्दाभावे सति

'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृह. ६-४-१६)

इत्युपक्रमगतेन ज्योतिषां ज्योतिः शब्देन पञ्च पञ्चजना इन्द्रियाणीति ज्ञायन्ते । ज्योतिषां ज्योतिः प्रकाशकानामिन्द्रियाणामपि प्रकाशकं ब्रह्मेत्युक्त्वा ततः 'पञ्च पञ्चजना' इत्युक्ते सति तानि शब्दादिप्रकाशकानि पञ्चेन्द्रियाणीति गम्यन्ते ।

## कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥१-४-१४॥

आकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदान्तवाक्यकलापे

'असद्वा इदमग्र आसीत् (तै.उ.आन. अनु. ७-१) इति,

'सदेव सौम्येदमग्र आसीत् (छा.६-२-१) इति,

'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ. ३-४-७)

इत्यादिके ज्ञातविशेषणे ह्यज्ञातविशेषपदार्थे च

'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. १-१) इति,

'आत्मैवेदमग्र आसीत् पुरुषविधः' (बृ. ३-४-१)

इत्यादिभिर्विशेषपदार्थसूचकवाक्यैर्यथा व्यपदिष्टस्य निर्दिष्टस्यात्मशब्दाभिहितस्याप्राकृतदिव्य-मनोहरमङ्गलमूर्तेः पुरुषाकृतेर्नारायणस्यैवोक्तेः न तान्त्रिकप्रधानसंज्ञाव्याकृतग्रहणं तथात्र विशेषवाक्यदृष्टानामिन्द्रियाणामेवोक्तेः न तान्त्रिकतत्त्वग्रहणम्। तत्र तान्त्रिकतत्त्वग्रहणायोगः कथमित्यत आह-

## समाकर्षात् ॥१-४-१५॥

'सोऽकामयत बहुस्याम्' (तै. आन. अनु. ६-२)

इति पूर्वनिर्दिष्टस्य सर्वज्ञस्यैव

'असद्वा इदमग्र आसीत्' (तै.उ.आन.अनु.७-१)

इति वाक्ये समाकर्षात् पूर्वत्राव्याकृतशब्देनोक्तस्यैव

'स एष इह प्रविष्ट आनखाग्रेभ्यः' (बृ. ३-४-७)

इति वाक्येन सर्वान्तर्यामिपुरुषाकारनारायणे समाकर्षाच्च यथा स एवावगम्यते तथात्रापि समाकर्षात्पञ्चजनानामिन्द्रियत्वावगतिरिति न विरोधः। गतः सांख्यतत्त्वाशङ्काप्रसंगः। पुनरपि जीवान्नारायणस्यान्यभावमुपपादयति-

बालाक्यधिकरणम् ॥१-४-४॥

## जगद्वाचित्वात् ॥१-४-१६॥

श्रूयतेऽस्य विषयः कौषीतकिब्राह्मणोपनिषदि

'ब्रह्म ते ब्रवाणि' (कौषी. ४-४) इत्युपक्रम्य

'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्यः' (कौषी.४-२६)

इत्यादि वाक्यम्। इह वेद्यत्वेन श्रुतो नारायणो जीवो वेति संशयः।

'य एवैष आदित्ये पुरुषः तमेवाहमुपासे य एवैषश्चन्द्रमसि पुरुषो य एवैष विद्युति'

(कौषी. ४-५,७,८(३,४,५))

इत्यादिपूर्ववाक्यसंदर्भे प्रकृतादित्यादिसकलपुरुषकर्तृत्वस्य जीवेऽपि विद्यमानत्वात् कर्मशब्दस्य शुभाशुभकर्मवाचित्वेन जीवसंबन्धात् सकलकर्मसंबन्धातीते नारायणे तदभावाच्च जीव एवायमिति पूर्वः पक्षः। सिद्धान्तस्तु कर्मशब्दस्यैतच्छब्दसामानाधिकरण्येन क्रियत इति व्युत्पत्त्या च जगद्वाचित्त्वात् जगत्कार्यवान्नारायण एवात्र प्रतिपाद्यः न हि जीवे सूर्यचन्द्रादिपुरुष-संयुक्तसकलजगत्कर्तृत्वसंभवः। पुनराशङ्क्य परिहरति-

## जीवमुखप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥१-४-१७॥

'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' (कौषी. ४-४४) इति

'यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन्प्राण एवैकधा भवति' (कौषी.४-३९) इति जीवमुख्यप्राणलिङ्गदर्शनात् नासौ नारायण इति न वाच्यम्। पूर्वत्र प्रतर्दनविद्यायां व्याख्यातत्वात् इहापि पूर्वापरपर्यालोचनया ब्रह्मपरत्वे प्रकरणे स्थिते तदनुरूपतयान्यानि लिङ्गानि नेतव्यानि। पूर्वत्र हि उपक्रमे

'ब्रह्म ते ब्रवाणि' (कौषी. ४-४)

इति ब्रह्मोपक्षिप्तं मध्ये च यस्य चैतत्कर्मेति सकलजगत्कर्तृत्वमुक्तम्। परत्र चोपसंहारे

'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' (कौषी. ४-४५)

इति ब्रह्मोपासनैकान्तं सर्वपाप्मापहतिपूर्वकं स्वराज्यं फलमुक्तम्; एवमस्य प्रकरणस्य ब्रह्मपरत्वनिश्चये जीवमुख्यप्राणलिङ्गानि तत्परतयैव नेतव्यानि। सूत्रार्थस्तु-जीवमुख्यप्राणलिङ्गात् तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते इत्यादो भोक्तृत्वरूपजीवलिङ्गात् अथास्मिन् प्राण एवैकधा भवतीत्यत्र मुख्यप्राणलिंगाच्च प्राणो भोक्ता जीव एवास्मिप्रकरणेऽभिहितो न परमात्मेति चेत् इति सन्दिह्यते चेत् तद्व्याख्यातं परमात्मैवात्रोक्त इति तस्य सन्देहस्योत्तरं पूर्वत्र प्रतर्दनविद्यायां व्याख्यातम्।

'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते' (कौषी. ४-४४)

इत्यादिकायाः श्रुतेरयमर्थः यथा लोके श्रेष्ठी मुख्यः पुरुषः स्वैः स्वकीयैर्भृत्यैर्भोगोपकरणभूतैः साकं तत् लोकप्रसिद्धं भृत्यार्पितचतुर्विधान्नं भुङ्क्ते यथा वा यथैव स्वाः स्वकीया भृत्या अपि श्रेष्ठिनं मुख्यं पुरुषं भुजन्ति भोजयन्ते, अन्तर्भावितणयर्थोऽयं धातुः, नानारससंस्कृतान्नाच्छदनादिनोपजीवयन्तीत्यर्थः, एवमेव श्रेष्ठिवदेव एषः शरीरान्तर्वर्त्ती प्रज्ञात्मा इन्द्रियादिभ्यः प्रकृष्टज्ञाता जीवोऽपि एतैरात्मभिः शरीरान्तर्वर्त्तिचक्षुरादीन्द्रियाधिष्ठातृभिरादित्यादिदेवैः शब्दादि विषयप्रकाशादिना भोगोपकरणभूतैः साकं तदर्पितांस्तत्तद्विषयान् भुङ्क्ते सेवते, एवमेव भृत्यवदेव एते आत्मानः इन्द्रियाधिष्ठातारः सूर्यादिदेवाः एतमात्मानं शरीराभिमानवन्तं क्षेत्रज्ञं भुञ्जन्ति इतस्तत आनीयार्पितान् शब्दादिविषयान् भोजयन्ते; दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि पक्षयोरेतदुक्तं भवति -यथा स्वामिभृत्ययोः स्वस्वकर्मफलभागिनोः परस्परसापेक्षवैषयिकसुखादिप्राप्तो तत्तत्कर्मानुगुणप्रापितकरणकलेवरस्तत्तदन्तर्यामिरूपः परमात्मैव हेतुर्नान्यथा तत्सिद्धिस्तथा करणाधिपक्षेत्रज्ञचक्षुरादिकरणाधिष्ठातृसूर्यादिदेवानामप्यन्योन्यसापेक्षवैषयिकसुखादिप्राप्तौ तत्तदन्तर्यामिरूपः परमात्मैव हेतुर्नान्यथा तत्सिद्धिरिति तच्छ्रुतौ परमात्मनस्तत्तच्चिदचिदन्तर्यामित्वानुसंधानं प्रतिपिपादयिषितमिति यथाश्रुतोऽयं

सांप्रदायिकोऽर्थः। पक्षान्तरं वदति-

## अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१-४-१८॥

'तौ ह सुप्तं पुरुषमाजग्मतुस्तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोमराजन्निति स इह तूष्णीमेव शिष्ये तदुह एनं यष्ट्या व्याचिक्षेप स तत एव समुत्तस्थौ' (कौषी.४-३०/३४)

इत्यत्र स प्राणदेहनामाभिरामन्त्रणे कृतेऽपि तदश्रुतम्; ततः परं यष्टिधाते सत्युत्थानेन प्राणाद्यतिरिक्त यष्टिधात ज्ञातृजीवसद्भावप्रतिपादनम् तदतिरिक्तं तदन्तर्यामिनारायणप्रज्ञापनार्थमिति

'क्वैष एतत् बालाके पुरुषोऽशयिष्ट क्वा एतदभूत् कुत एतदागात्'(कौषी.४-३५) इति प्रश्नात्

'यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति' (कौषी.४-३९)

इति प्रतिवचने,

'सता सौम्य तदा संपन्नो भवति' (छा.६-८-१)

इत्यादिश्रुत्यन्तरसमानार्थात् तत्प्रतिवचनाच्चावगम्यते। तथा एके वाजसनेयिनो विस्पष्टमस्मिन्बालाक्यजातशत्रुसंवादे एतत्समानार्थमधीयते। तत्र हि

'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदा भूः कुत एतदागात्' (बृ.४-१-१६)

इति प्रश्नः।

'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिंछेते' (बृ.४-१-१७) इति प्रतिवचनम्;

तस्मान्निखिलजगत्कर्मा सकारणशरीरजीवस्य सुषुप्तावाश्रयभूतान्तर्यामिशक्तिरूपो नारायण एवात्र प्रतिपाद्योऽस्तीति सिद्धम्। पुनरिममेवार्थं सूत्रपदार्थेन स्पष्टयति-जैमिनिराचार्यस्तु अन्यार्थं जीवेतरपरब्रह्मसद्भावप्रज्ञापनार्थं श्रुतौ जीवनिरूपणमस्तीति प्रश्नव्याख्यानाभ्यां प्रश्नप्रतिवचनाभ्यां मन्यते; अपि चैवं तथैव एके वाजसनेयिनः बालाक्यजातशत्रुसंवादान्तर्गतप्रतिवचनवाक्यं नारायणबोधकमस्तीति स्पष्टं पठन्ति। मैत्रेयी-ब्राह्मणे सर्वत्र जीवब्रह्मणोरेकशब्दविषयत्वे प्रतीयमाने सति कथं तयोर्वैलक्षण्यमिति प्रश्नपरिहारायेदमधिकरणमारभ्यते-

### वाक्यान्वयाधिकरणम् ॥१-४-५॥

## वाक्यान्वयात् ॥१-४-१९॥

बृहदारण्यके'

न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति'

(बृ. ४-४-५ / बृ. ६-५-६) इत्यारभ्य

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. ४-४-५ / ६-५-६) इत्यादि श्रूयते । इहात्मनस्तु कामायेत्यादिवाक्यैर्भोगप्रीतियुक्ततया संसारित्वावगमात् अत्र प्रतिपाद्यमानो जीव इति पूर्वपक्षे प्राप्ते सिद्धान्तयामः- नारायण इति; कुतः,

'अमृतत्वस्य तु नाशास्ति वित्तेन' (बृ. ६-५-३)

'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' (बृ. ६-५-६),

'इदं सर्वं यदयमात्मा (बृ. ६-५-७) इत्यादेः

'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृ. ४-४-१४)

इत्यवसानस्य कृत्स्नस्य वाक्यस्य मोक्षज्ञानप्रदातरि सर्वज्ञे नारायणेऽन्वयात् । भोगप्रीतियुक्तस्यानाद्यविद्यायुतस्य नारायणज्ञानमन्तरा मोक्षानर्हस्य जीवस्यानुवादेन तदन्तर्यामिनारायणप्रतिपादनाविरोधः । कथमिह सर्वत्र जीवशब्देन नारायणाभिधानमिति चेत्तदिदं मतान्तरेणोपपादयति-

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥१-४-२०॥

'आत्मनि खल्वरे दृष्ट' (बृ. ६-५-६) इत्यादिनोक्तमेकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञायाः सिद्धेः सिद्धये जीवस्य परमात्मकार्यतया तदव्यतिरिक्तत्वं ज्ञापयितुं जीवशब्देन नारायणस्य लिङ्गमभिधानमित्याश्मरथ्यो मेने ।

## उत्क्रमिष्यत् एवंभावादित्यौडुलोमिः ॥१-४-२१॥

'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. ८-३-४)

इति एवमुक्तप्रकरणे उत्क्रमिष्यतः शरीरं विहाय गमिष्यतो मुक्तजीवस्य ब्रह्मभावाज्जीवशब्देन ब्रह्माभिधानमित्यौडुलोमिराचार्यो मेने ।

## अवस्थितेरिति काशकृत्स्नः ॥१-४-२२॥

'य आत्मनि तिष्ठन्' (बृ. ५-७-२६ (मा.पा.))

इत्यादिश्रुतौ शरीरभूते जीवात्मनि नारायणस्यात्मतयावस्थानश्रवणाज्जीवशब्दवाच्यत्वं नारायणस्तेति काशकृत्स्नो मेने । इदमेव मतं सूत्रकारस्य त्रयाणां जैमिनिप्रभृत्याचार्याणां मतेषु परस्परं किञ्चिद्विरोधात् सूत्रकारमतानुसारिकाशकृत्स्नमतमेव सिद्धान्ततयाऽवगन्तव्यं तदेव श्रुतिस्मृत्याभियुक्तसंमतमस्ति । पूर्वम्

'जन्माद्यस्य यतः' (भा.१-१-१) इति द्वितीयाधिकरणे

'यतो वा इमानि भूतानि' (तै.उ.भृ.अनु.१-१)

इति पञ्चमीविभक्तिविशिष्टश्रुत्युदाहरणेनान्तर्यामिशक्तिरूपनारायणस्य जगदुपादानत्वं सामान्येन सूचितं तद्विशेषतः समर्थयितुमिदमधिकरणमारभ्यते-

प्रकृत्यधिकरणम् ॥१-४-६॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥१-४-२३॥

'अस्मान्मायी सृजते विश्वमेतत्' (श्वेता. ४-९) इति,

'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुः' (तै.उ.आन.अनु.१-१) इति,

'सोऽकामयत बहु स्याम्' (तै. आन. अनु. ६-२) इति,

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्', (छा.६-२-१०)

'तदैक्षत बहु स्याम्' (छा.६-२-३)

इत्यादीनि वाक्यान्यस्य विषयः। एतेषु प्रसिद्धं निमित्तोपादानोभयकारणत्वं ब्रह्मणो युक्तं नवेति सन्देहः। सन्देहस्य बीजं तु लोके निमित्तस्य कुलालादेरुपादानमृत्पिण्डादिभावादर्शनेनोपादानस्य मृत्पिण्डादेर्निमित्तकुलालादिभावादर्शनेन च प्रतीयमानस्तयोरत्यन्तभेद एव।

अत्र पूर्वपक्षः प्रवर्तते-यद्यपि तदैक्षतेत्यादिश्रुतिभिः सर्वज्ञं परब्रह्मैव प्रपञ्चकारणत्वेन प्रतिपादितं तथापि

'गौरनाद्यन्तवती सा जनित्री भूतभाविनी' (मन्त्रि.१-५)

इत्यादिश्रुत्तिभिः प्रपञ्चोपादानत्वेन तु प्रधानमेव प्रतिपाद्यते इति प्रतीयते; नहि श्रुतयः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुस्तस्याधिष्ठेयादचेतनात्परिणामिनः प्रधानादृते प्रपञ्चकारणत्वं प्रतिपादयन्ति। तथाहि

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरजनम् (श्वेता.६-१९);

स वा एष महानज आत्माऽजरोऽमर' (बृ. ६-४-२५) इति,

'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्।

ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः॥ (मन्त्रि - १-३)

सूयते पुरुषार्थांश्च तनैवाधिष्ठिता जगत्'॥ (मन्त्रि.१-४) इति

तथा प्रकृतिमुपादानतयाधिष्ठायैव परमात्मा निमित्तभूतः सन् प्रपञ्चं सृजति इति, श्रूयते स्मर्यते च-

'अस्मान्मायी सृजते विश्वमेतत्' (श्वेता. ४-९) इति,

'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' (गीता. ९-१०) इति।

अतः प्रपञ्चसर्जने परब्रह्म निमित्तकारणमेव नोपादानम्। उपादानम् तु तदधिष्ठितं प्रधानमेव। कुतः, असंभवात्; असंभवो हि घटं कुर्वाणः कुलालः स्वयमेव मृत्पिण्डीभूय घटं न निर्मिमीते; तथा पटं निर्मिमाणः कुविंदः स्वयमेव तूलतन्तुरूपीभूय पटं न करोति;

यदि स्वव्यतिरिक्तेनोपादानकारणभूतेन मृत्पिण्डादिना निमित्तभूतः स्वयं कुलालादिः कर्तुमीहते तदा तु घटादिनिर्माणं संभवत्येव; एवं च सति नैकस्मिन्संभवति निमित्तत्वमुपादानत्वं च जगत्कार्यं प्रतीतीति । किञ्च लोके ईक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृश्यते; बहुकारकपूर्विका च क्रियाफलसिद्धिर्हि दृश्यते; अतः

'स ईक्षाञ्चक्रे (प्रश्न -६-३),

स प्राणमसृजत' (प्रश्न-६-४)

इत्यादिश्रुतिषु परब्रह्मण ईक्षापूर्वकप्रपञ्चकर्तृत्वावगमादनेककारकसाध्यत्वाच्च कार्यस्य निमित्तभूतस्यैकस्य ब्रह्मण उपादानत्वं न संभाव्यते । निष्प्रयोजनं च निमित्तस्य ब्रह्मण उपादानत्वकल्पनम्; विनापि तत्कलपनमुपादानभूतप्रकृतितो विश्वरूपकार्यनिष्पत्तेः कुलालादिकस्य मृत्पिण्डादेः पृथक्त्वेऽपि घटादिकार्यनिष्पत्तिदर्शनादिति प्राप्ते सिद्धान्त उच्यते- जगतः प्रकृतिरुपादानकारणं चकारान्निमित्तकारणं च ब्रह्मैवाभ्युपगन्तव्यं नतु केवलं निमित्तकारणमेवेति निश्चीयते । कुतः प्रतिज्ञादृष्टान्तानुपरोधात्; प्रतिज्ञा तावत्

'स्तब्धोस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्'

(छां. ६-१-३)

इति श्रूयमाणस्यादेशशब्दाभिहितस्यैकस्य परमात्मनो विज्ञानेन सर्वचिदचिद्वस्तुविज्ञानविषया दृष्टान्तश्च

'यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वमिदं मृण्मयं विज्ञातं स्यात् यथा सौम्यैकेन लोहमणिना विज्ञातेन यथा सौम्येकेन नखनिकृंतनेन' (छा.६-१-४,५,६)

इति मृत्पिंडादेरुपादानकारणस्य विज्ञानात् घटादिसर्वकार्यविज्ञानविषयः । यदि ब्रह्मणो निमित्तकारणमात्रत्वं तदा तद्विज्ञानेन सकलप्रपञ्चविज्ञानं न संभवति; नहि कुलालादिज्ञानेन घटादिकार्यं विज्ञायते; अतो निमित्तभूतस्य ब्रह्मण उपादानत्वे तूपादानभूतमृत्पिण्डादिविज्ञानेन घटादितत्कार्यविज्ञानवत् सूक्ष्मभावापन्नचिदचिद्वस्तुविशिष्टान्तर्यामिरूपोपादानभूते ब्रह्मणि विज्ञाते सर्वं कार्यं जगद्विज्ञातमेव भवति । कारणमेवावस्थान्तरमापन्नं कार्यं न द्रव्यान्तरमिति कार्यकारणयोरभेदतयावस्थितमृत्तिकादितद्विकाररूपदृष्टान्तानुपरोधदर्शनेन तदुपपादकप्रतिज्ञा समर्थनान्निमित्तभूतं ब्रह्मैवोपादानमुच्यते । यत्तु प्रतिवादिना निमित्तोपादानयोरसामानाधिकरण्यं श्रुत्यादिना प्रतीयते इत्युक्तं तदसत्; प्रतिज्ञाविषयकश्रुतौ तयोः सामानाधिकरण्यावगमात् ।

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६-२-१) इति जगत्सर्गात् पूर्वमेकत्वावधारणादद्वितीयपदेनाधिष्ठात्रन्तरप्रतिषेधाच्च । प्रतिज्ञाविषयकश्रुतेरयमर्थः:- आरुणिः स्वपुत्रं श्वेतकेतुं प्रत्याह, किं, हे श्वेतकेतो त्वं स्तब्धोसि उत तथापि तमादेशं आदिश्यते प्रशिष्यतेऽनेनेत्यादेशः करणे घञ्

'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसो विधृतौ तिष्ठतः' (बृह. ५-८-८)

इत्यादिश्रुतेः घञः करणविहितत्त्वेऽपि कर्ता विवक्षितः, तमादेष्टारं अप्राक्ष्यः गुरुं प्रति पृष्टवानसि; स कीदृग्विध इत्यपेक्षायां तं विशिनष्टि येन आदेष्ट्रा निमित्तभूतेन अधिष्ठात्रोपादानभूतेन परमात्मना विज्ञातेन तच्छरीरभूतमविज्ञातं सर्वं चिदचिद्रूपं जगद्विज्ञातं भवतीति निमित्तोपादानत्वयोः सामानाधिकारण्यमवगम्यते; अन्यत्स्पष्टार्थमिति। नन्वेवं च सति

'गौरनाद्यन्तवती सा जनित्री भूतभाविनी' (मन्त्रि. १-५),

'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' (मन्त्रि-१-३)

इत्यादयः श्रुतयः प्रकृतेराद्यन्तवदभावेन नित्यत्वजगदुपादानत्वयोर्बोधिका विरुध्यन्त इति चेत्तत्रोच्यते-तत्राऽपि प्रलये सूक्ष्मभावापन्नाविभक्तनामरूपकारणावस्थ-चिदचिद्विशिष्टान्तर्यामिरूपं ब्रह्मैव प्रकृतिशब्देनाभिधीयते;

'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' (बृह.२-४-६),

'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं विजानीयात्' (बृह. २-४-१४)

इत्यादौ तदन्वयातिरिक्तिवस्त्वन्तराभावेन ब्रह्मात्मकत्वश्रवणात्।

'सर्वं खल्विदं ब्रह्मैतदात्म्यमिदं सर्वम्' (छा. ३-१४-१)

इत्यादौ कार्यावस्थस्य कारणावस्थस्य च समस्तस्य जगतः शरीरशरीरिवदपृथक्तया ब्रह्मात्मकत्वश्रवणाच्च। यदुक्तं नैकस्मिन् संभवति निमित्तत्वमुपादानत्वं च जगत्कार्यं प्रति; कार्यस्यानेककारकसाध्यत्वान्निमित्तस्यैकस्य ब्रह्मण उपादानत्वं न सम्भाव्यत इत्यादि; अत्रोच्यते-स्वरूपस्वभावगुणविभूतिभिः क्षराक्षरविलक्षणस्यानवधिकातिशयासंख्येकल्याण-गुणगणस्याधिष्ठातुः सत्यसंकल्पस्याचिन्त्यपरिमेयशक्तेर्युगपत्साक्षात्सदा स्वतः सर्वज्ञस्यैकस्य परब्रह्मण एवोभयकारणत्त्वमनेककारकसाध्यविचित्रकार्यनिर्माणपटुत्वं चोपपद्यते।

'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी' (तै.ब्रा. २-८-९-६,७)

इत्यादौ निमित्तभूतस्य ब्रह्मणः स्वसंकल्पेन विकसितान्तर्यामिशक्तिविशिष्टविभक्त-नामरूपस्थूलचिदचिद्वस्तुरूपशरीरतया परिणामश्रवणात् मृत्पिण्डादेरचेतनस्य तु ज्ञानेक्षणादिधर्मायोगेनाधिष्ठातृत्वासंभवात् ज्ञानादिधर्मवतोऽधिष्ठातुः कुलालादेरपि सत्यसंकल्पत्वादिगुणायोगेन विचित्रपरिणामपूर्वकसृष्टिनिर्माणासंभवाच्च तथात्वं नोपपद्यते। एवं च सति ब्रह्मणो जगतो निमित्तत्वोपादानत्वप्रकारः स्पष्टतया वर्ण्यते।

स्वधामस्थो दिव्यमनोहरमङ्गलमूर्तिः परमात्मा चिदचिद्व्यतिरिक्तः सन् स्वेच्छया संकुचितान्तर्यामिशक्तिरूपस्वप्रकाशे सूक्ष्मभावेन संलग्नमन्तर्यामिशक्तिविशिष्टत्वात्तच्छरीरभूतं नामरूपविभागानर्हं प्रकृतिपुरुषादिसकलचेतनाचेतनरूपविश्वं प्रलयकाले यदस्ति तत् सर्वं सृष्टिसमये विकसितान्तर्यामिशक्तिविशिष्टतया स्थूलभावार्हं विभक्तनामरूपं करोतीति तस्य जगन्निमित्तकारणत्वं विज्ञायते; प्रलयकाले सूक्ष्मभावापन्नाविभक्तनामरूपकसकल-चेतनाचेतनशरीरकं अत एव चेतनाचेतनशरीरि चेतनाचेतनविशिष्टं संकुचितान्तर्यामिरूपं

कारणावस्थं मृत्पिण्डसुवर्णादिस्थानीयं परब्रह्मणो यत् स्वरूपं तज्जगत उपादानकारणम् । तदेव सृष्टिकाले ततो व्यतिरिक्तनिमित्तभूतदिव्यविग्रहपरमात्मेच्छया विभक्तनामरूप-प्रकृतिपुरुषादिसकलचिदचिद्वस्तुशरीरकं स्थूलभावापन्नचिदचिद्वस्तुशरीरि स्थूलचिदचिद्वस्तु-विशिष्टं स्थूलचिदचिद्वस्तुयथार्हप्रकाशकं घटकुण्डलादिस्थानीयं निमित्त भूतस्य परब्रह्मणो विकसितान्तर्यामिरूपं कार्यावस्थं भवतीति विज्ञायते । परब्रह्मणोऽन्तर्यामिरूपेण कार्यानुस्यूतत्वे ततः पृथग्भूतत्वे च श्रुतिः-

'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च'॥ (कठ. २-२-९)

इत्येवं परब्रह्मणो निमित्तस्य चिदचिद्वस्तुविशिष्टान्तर्यामिशक्तेः संकोचविकासाभ्यां जगतः प्रलयोत्पत्तिस्थितयो भवन्ति । एवं च सति स्वधामस्थं परमात्मस्वरूपं जगतो निमित्तकारणं तस्यैव परमात्मनः सूक्ष्मचिदचिद्वस्तुविशिष्टन्तर्यामिरूपमुपादानकारणमिति विवेकः। ननु कार्यावस्थस्य शरीरिणोऽन्तर्यामिरूपस्य ब्रह्मणः शरीरभूतचिदचिद्वस्तुगतविकारवत्त्वं संभवतीति चेन्नैवं शङ्क्यम्:- कुतः, चिदचिद्वस्तुशरीरस्यान्तर्यामिशक्तिरूपस्य परब्रह्मण एवोपादानत्वेऽपि चेतनाचेतनगतविकाराणामस्पर्शदर्शनाय

'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' (श्वेता. ४-९)

इति व्यपदेशात् । ननु निरीश्वरसांख्यतन्त्रसिद्धयोः प्रकृतिपुरुषयोर्जगत्कारणत्वे को दोष इति चेत्तत्र ब्रूमः- अत्र पक्षे पुरुषस्योदासित्वमकर्तृत्वं चोक्तं जडायाः प्रकृतेश्च जगत्कर्तृत्वं सर्वात्मसर्वनियामकपरब्रह्मणस्तयोरुभयोर्नियम्यत्वात्मत्वहीनत्वं चोक्तम् । एवं साख्यतन्त्रोक्तौ परब्रह्मनियम्यत्वात्मत्वरहितयोरुदासिजडयोः प्रकृतिपुरुषयोर्जगत्कर्तृत्वासंभवात् तदुक्तौ श्रुतिस्मृतिविरोधाच्च कारणत्वासंभवः । अतो निरीश्वरसांख्यतन्त्रोक्तयोस्तयोर्जगत्कारणत्वं श्रुतिस्मृतिविरुद्धमिति सिद्धान्तः । सेश्वरसांख्यतन्त्रोक्तयोः परब्रह्मान्तर्यामिशक्तिविशिष्टयोः प्रकृतिपुरुषयोर्जगदुत्पत्त्यादिकं परब्रह्मेच्छया संभवति, अतो न विरोधः ।

निरीश्वरसांख्यतन्त्रोक्तप्रकृतिपुरुषस्वरूपमुक्तं धन्वंतरिसूत्रे
'उभावप्यनादी उभावप्यनन्तावुभावप्यलिङ्गावुभावपि नित्यावुभावप्यपरावुभावपि सर्वगतौ' (धन्वंतरिसूत्र) इति ।

न विद्यते परो याभ्यां तावपरौ इति निरीश्वरसांख्यतन्त्रसिद्धान्तः ।

सेश्वरसांख्यतन्त्रोक्तप्रकृतिपुरुषयोः परमात्माधीनत्वं तस्मादुत्पत्त्यादिकं च श्रीमद्भागवते भगवद्गीतायां स्कान्दे च स्मर्यते-

'कालवृत्त्यानुमायायां गुणमय्यामधोक्षजः,
पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्' (भा. ३-५-२६) इति,
'त्वत्तः पुमान् समधिगम्य ययास्य वीर्यम्' (भा. ११-६-१६) इति,

'स एष प्रकृत्तिं सूक्ष्मां दैवीं गुणमयीं विभुः,
मदिच्छयैवोपगमतामभ्यपद्यत लीलया' (भा.३-२६-४) इति,
'नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात्' (भा. ३-२५-४२) इति,
प्रकृतिपुरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य' (भा.११-६-१४) इति,
'पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः ।
शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहात्' (भा. ६-१२-११) इति,
'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' (गीता. १०-८) इति,
'यदा च मायापुरुषौ कालोऽत्यक्षरतेजसि ॥
तदिच्छया तिरोयान्ति स त्वेको वर्तते प्रभुः' (वा. मा. २५ – ५९) इति,
'सिसृक्षाथाभवत्तस्य ब्रह्माण्डानां यदा तदा ।
सकालाविर्बभूवादौ महामाया ततो हि सा ॥ (वा. मा. २४ - ४)
तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना ।
सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि ॥ (वा. मा. २४ - ५)
तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने' (वा. मा. २४ - ६) इति,

प्रभाप्रभावतोर्वा गुणगुणिनोरेकात्मन्यायेनोपादानस्यान्तर्यामिरूपस्य निमित्तेतरत्वं नास्तीति विज्ञापयितुं हेत्वन्तरं वदति-

## अभिध्योपदेशाच्च ॥१-४-२४॥

'सोऽकामयत बहु स्यां प्रजायेयेति' (तै. आन. अनु. ६-२),
'तदैक्षत बहुस्यां प्रजायेय' (छा.६-२-३)

इत्यादिषु संकुचितान्तर्यामिरूपेण नामरूपादिविभागशून्यसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थोऽहं विकसितान्तर्यामिशक्त्या संविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरकः स्यामिति निमित्तभूतस्य स्रष्टृरूपस्येक्षितुः सर्वज्ञस्य परब्रह्मण एव स्थावरजंगमविचित्रजगदाकारेण या अभिध्या बहुभवनचिंतनं तस्या उपदेशात् निमित्तकारणादन्यदुपादानकारणं नास्तीति ब्रह्मण एव जगत उपादानत्वं निमित्तत्वं च निश्चीयते, तदेव स्पष्टं दर्शयितुं सूत्रान्तरमाह-

## साक्षाच्चोभयाम्नानात् ॥१-४-२५॥

न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिरेवायमर्थो निश्चीयते किन्तु, साक्षात्प्रत्यक्षमेव वेदान्तवाक्येषु उभयाम्नानात्-उभयोः कारणयोः आम्नानादभ्यसनात् जगत उपादानं निमित्तं च ब्रह्मैव श्रूयते; तथाहि

'किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी 'त्यारभ्य

'यदध्यतिष्ठद्भुवनानि धारयन्' (तै.ब्रा. २-८-९-६)

इत्यन्तेन वाक्येनोपादाने निमित्ते च पृष्टे सति

'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो धावापृथिवी'त्यारभ्य

'ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' (तै.ब्रा. २-८-९-७)

इत्यन्तेन वाक्येन ब्रह्मैवोपादानं निमित्तं चास्तीत्युत्तरं साक्षादाम्नायते। उक्तेऽर्थे प्रमाणान्तरमस्तीत्याह-

## आत्मकृतेः ॥१-४-२६॥

'तदात्मानं स्वयमकुरुत' (तै.आन.अनु.७-१)

इति वाक्ये आत्मनः स्वस्य जगदाकारत्वेन नारायणस्य कृतिरवगम्यते; अतः स एवोपादानं निमित्तं च विज्ञायते। ननु स्वभावतोऽस्पृष्टसकलचेतनवर्तिदोषमात्रकलङ्कः निःसीममङ्गलगुणरत्नाकरो निरङ्कुशनित्यसिद्धवैभवः प्रपञ्चातीतः पुरुषोत्तमाभिधनारायणो विचित्रानन्त-पुरुषार्थास्पदविचित्रचिदचिन्मिश्रप्रपञ्चरूपेण कथं वर्तते इत्यत्राह-

## परिणामात् ॥१-४-२७॥

नित्यशुद्धानन्दस्य निरतिशयमङ्गलस्वभावस्य दिव्यमूर्त्त्या स्वधामस्थस्य जगन्निमित्तकारणभूतस्य परब्रह्मणः संकुचितान्तर्यामिशक्ति विशिष्टमविभक्तनाम-रूपातिसूक्ष्मचिदचिद्वस्तुरूपं शरीरमुपादानकारणभूतं आत्यन्तिकप्रलये सति स्वप्रकाशे सूक्ष्मत्वेनादृश्यमभूत् तद्रूपेण तस्यापि जगदाकारत्वं युक्तमेव; तच्छरीरकस्य परब्रह्मणः स्वसंकल्पेन विकसितान्तर्यामिशक्तिविशिष्टविभक्तनामरूपस्थूलचिदचिद्वस्तुरूपशरीरत्वेन परिणामात् सर्वमविरुद्धम्।

ननु कारणविकृतिरूपो हि परिणामः, पूर्वावस्थापरित्यागेनावस्थान्तरापत्तिः परिणाम उच्यते; एवं च सति परब्रह्म निर्विकारादेः स्वधर्मात्कथं न चलेदिति चेत् यथा तस्य निमित्तस्योपादानत्वेऽपि विकारादिस्पर्शो न स्यात्तथा तस्य परिणामोऽपि न संभवति। ननु कोऽयमपूर्वः परिणामः ? तच्छ्रवणे वयं कुतूहलिनः स्मः, अतः कथ्यतामिति चेच्छृणु, वयं ब्रूमः-

'पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तमः परे देव एकीभवति'

(सुबा.उ. २) इति,

सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६-२-१) इति,

'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी,
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ (वि.पु. ६-४-३९)
परमात्मा च सर्वेषामाधारः पुरुषोत्तम' (वि.पु. ६-४-४०) इति,
'एक एवाद्वितीयोऽभूतात्माधारोऽखिलाश्रयः' (भा. ११-९-१६) इति,
'यदा च मायापुरूषौ कालोऽत्यक्षरतेजसि ।
तदिच्छया तिरो यान्ति स त्वेको वर्तते प्रभुः' (वा. मा. २५ - ५९) इत्यादिश्रुतिस्मृतिषु
'न कर्माविभागादिति चेन्नानादित्वात्' (ब्र.सू. २-१-३५) इति वक्ष्यमाणसूत्रे च
कारणावस्थं सूक्ष्मं प्रकृतिपुरुषादिसकलचेतनाचेतनवस्तुपरात्मनोऽक्षररूपप्रकाशेऽव्यक्तभावेन संलग्नमभूदित्युक्तम्; अतः परमात्मानमेकमद्वितीयं वदन्ति बुधाः। नन्वेकत्राक्षरतेजसि लीनमित्युक्तमन्यत्र परमात्मनि लीनमिति च पृथक् पृथक् कथं लीनतेति चेत्तत्रोच्यते- अक्षररूपतेजः परब्रह्मणोः प्रभाप्रभावतोरिवाभेदविवक्षयाऽक्षरतेजसि लीनमपि तत् परमात्मनि लीनमिति वदन्ति; परमात्मन्येव तत्संलग्नमित्युक्तौ तु सकलदोषगन्धवर्जितस्यातिशुद्धस्य परमात्मनः समस्तचेतनाचेतनगतदोषसंबन्धापत्तिर्भवेदतो नैवं वाच्यम्; यतस्तस्य संकुचितान्तर्यामिशक्तिविशिष्टं यत्सूक्ष्मचिदचिद्वस्तु भवति अतस्तत्परमात्मशरीरभूतं वदन्ति । तदा दिव्यमूर्तिपरमात्मनश्चिदचिद्विशिष्टया अन्तर्यामिशक्तेरेव संकोचो नतु निमित्तभूतस्य स्वस्य; उत्पत्तिकाले च विभक्तनामरूपकस्थूलचिदचिद्विस्तुशरीरे आत्मतया स्थितायास्तस्यान्तर्यामिशक्तेरेव विकासरूपपरिणामो नतु स्वस्य; एवं तस्मिन् निर्विकारत्वादिधर्मक्षतिर्न स्यात्; स्वेच्छया परमात्मनोऽन्तर्यामिशक्तेः संकोचविकासाभ्यां चेतनाचेतनवस्तुवृंदस्य सूक्ष्मस्थूलभावौ भवतः । तदन्तर्यामिशक्तिविकासेन चेतनाचेनानां स्थूलभावप्राप्तिः श्रूयते

'सोऽकामयत बहुस्याम्' (तै.आन.अनु.६-२)

इति नामरूपादिविभागरहितः सूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थो नारायणोऽहं संविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरको भवेयमिति सः संकल्पमकरोत्

'ततश्चेदं सर्वमसृजत यदिदं किञ्च' (तै.उ.आन.अनु.६-२)

इति स्वशरीरभूतं सूक्ष्मचिदचिद्वस्तु स्वप्रकाशाद्विभज्य

'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. उ.आन.अनु. ६-२)

इति स्वतेजसो विभक्ते चिदचिद्वस्तुनि स्वयं विकसितान्तर्यामिशक्तिरूपात्मतया प्रविश्य सच्च त्यच्चाभवदित्यादिना सदसत्प्रपञ्चरूपेण बहुधा परिणतोऽभवदिति पुरुषस्य बालत्वयुवत्वादिवत् ब्रह्मणो जगच्छरीरिणः कारणत्वं कार्यत्वं च । पुनस्तदेव स्पष्टं दर्शयितुमिदं सूत्रमाह-

## योनिश्च हि गीयते ॥१-४-२८॥

'यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड. १-१-६),

'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (मुण्ड-३-१-३)

इत्यादिषु सकलस्य प्रकृतिपुरुषादिस्थावरजंगमान्तस्य भूतवर्गस्य परमात्मा योनित्वेनाधीयते; हि यस्माद्धेतोः स योनिरिति गीयते तस्मादुपादानमपि ब्रह्मैवेति विज्ञायते; योनिशब्दश्च उपादानकारणबोधक इति यथोर्णनाभिः सृजते गृह्णीते चेति वाक्यशेषाद् ज्ञायते; अतो जगत उपादानं निमित्तं च परब्रह्मैवेति सिद्धम्।

सर्वव्याख्यानाधिकरणम् ॥१-४-७॥

## एतेन सर्वे व्याख्याता व्याखाताः ॥१-४-२९॥

'जन्माद्यस्य यतः' (भा. १-१-१)

इत्यादिना एतेन एतदन्तेन व्याख्यानीकृतेन न्यायकलापेन सर्वे ब्रह्मस्वरूपाभिधायिन उपनिषद्वाक्यसमूहाः उपासनबोधकाः पुरुषसूक्तादयो मन्त्रब्राह्मणविभागाश्च स्मृतीतिहास-पुराणाभियुक्तसूक्तिविशेषाश्च व्याख्याता इति।

अध्यायसमाप्तिद्योतिका द्विरुक्तिः। वेदादिषु यत्र यत्र चेतनेऽथवाऽचेतने जगत्कारणत्वादि श्रूयते तत्र तत्र प्रमाणवचनेषु तदन्तर्यामी नारायण एव बोध्यः, यत्र यत्रापुरुषार्थविकाराज्ञत्वादिको धर्मस्तत्र तत्र नारायणस्य परब्रह्मणः शरीरं चिदचिद्वस्त्वेव बोध्यमिति सर्वं निरूपणं समञ्जसमेवेति सिद्धम्।

इति

श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिवरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
प्रथमाध्यायस्य चतुर्थपादः॥४॥ समाप्तश्चाध्यायः ॥



श्रीसहजानन्दस्वामिने नमो नमः ॥

## द्वितीयाध्याये प्रथमपादः ।

स्मृत्यधिकरणम् ॥२-१-१॥

### स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥ २-१-१॥

प्रथमेऽध्याये सच्चिदानन्दस्वरूपे सर्वज्ञत्वसर्वशक्तिकत्वादिगुणकृतस्वरूपलक्षणे सकलजगज्जन्मादिकृतोपलक्षणे सर्वचेतनाचेतनविलक्षणे समस्तदोषकलङ्कवर्जिते सर्वात्मनि स्वाभिमतानुरूपैकरूपाचिन्त्यनित्याऽद्भुतनिरवद्यनिरतिशयौज्ज्वल्यसौंदर्यसौगंध्यसौकुमार्य-लावण्ययौवनाद्यसंख्यस्वरूपगुणगणविशिष्टे हरिकृष्णवासुदेवपरमात्मपुरुषोत्तमादिनामके परमकारुणिके परब्रह्मणि नारायणे निखिलवेदान्तवाक्यानां तदनुगुणानां स्मृत्यादीनां च तात्पर्येण समन्वयोऽभिहितः । इदानीं द्वितीयेनाध्यायेन तस्य समन्वयस्य वेदान्तविरुद्धस्मृतितर्कादिभिः प्राप्तो विरोधः परिह्रियते । प्रथमं सांख्यस्मृतिविरोधः परिह्रियते । अस्मिन्सर्वत्र पूर्वोक्तसमन्वयो विषयः । इह वैदिकसमन्वयस्य सांख्यस्मृत्या संकोचोऽस्ति नवेति सन्देहः । कथमिति चेत्तत्रोच्यते-ब्रह्मणो जगत्कारणत्वं वेदोऽभिधत्ते, कपिलस्मृतिश्च प्रधानस्य । विरंचिसुतः कपिलो हि महातपस्वी ततस्तद्वचनमपि प्रमाणमेव; वेदोऽपि भगवानखिलप्रमाणसार्वभौमः स चाप्रामाण्यगन्धमपि न सहते-तस्मादनयोः कस्य केन बाध इति संशयप्राप्तिः ।

अत्र सांख्यस्मृतेर्धर्मादिप्रतिपादनेऽनवकाशत्वेन कारणवादे प्रबलत्वात् वेदस्य धर्मादिप्रतिपादने सावकाशतया कारणवादे दुर्बलत्वात् धर्मादिप्रतिपादनेऽनवकाशया सांख्यस्मृत्या कारणवादे वेदस्य संकोच उचित इति चेद् वदति पूर्वपक्षी-तर्हि वयं नेति वदामः । अन्यासां वेदाऽविरोधिनीनां मन्वादिस्मृतीनां वैदिके कारणवादान्वयेऽनवकाशदोषप्रसंगात् ।

'आसीदिदं तमोभूतम्' (मनु. १-५) इत्यारभ्य,

'ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदं,
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः'। (मनु. १-६)
सन्निधाय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्ज्जादो तासु वीर्यमुपासृजत्' (मनु. १-८) इति मनुः।

भगवद्गीतासु च

'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' (गीता. ७-६) ।
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तत' (गीता. १०-८) इति ।

स्कान्दे च

'यदा च मायापुरुषौ कालोऽत्यक्षरतेजसि ।
तदिच्छया तिरोयान्ति स त्वेको वर्तते प्रभुः'॥ (वा.मा.२५-५९) इति
सिसृक्षाथाभवत्तस्य ब्रह्माण्डानां यदा तदा ।
सकालाविर्बभूवादौ महामाया ततो हि सा ॥ (वा.मा.२४-४)
तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना ।
सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि ॥ (वा. मा. २४ - ५)
तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने' (वा.मा.२४-६)

इत्यादिभिः कारणवादिनीभिर्मन्वादिस्मृतिभिरनुमेयश्रुतिमूलायाः प्रधानकारणवादिन्याः सांख्यशास्त्राभिधकपिलस्मृतेरेव बाधः परमप्रामाणिकरामानुजप्रभृत्याचार्यैः परिगृह्यते ।

सूत्रार्थो वर्ण्यते-स्मृत्यनवकाशदोषप्रसंगः वैदिके परब्रह्मकारणवादान्वये प्रधानकारणवादिन्याः सांख्यस्मृतेः अनवकाशो योऽवकाशाभावः स एव दोषप्रसंगो मन्तव्य इति चेन्न, कुतः, अन्यस्मृत्यनवकाशदोषप्रसंगात्-अन्यासां वेदानुकूलानां मन्वादिस्मृतीनां वैदिके कारणवादान्वये योऽनवकाशो भवेत्स एष दोषप्रसंगो मन्तव्यः, स त्वत्र न प्रीतयते, अतस्ताभिः सांख्यस्मृतेर्बाधो युक्तः ।

## इतरेषां चानुपलब्धेः ॥२-१-२॥

इतरेषां मन्वादीनां परमप्रामाणिकानां सर्वज्ञानां स्मृतिषु विधिसुतकपिलस्मृत्यभिहितस्य प्रधानकारणत्वस्य अनुपलब्धेः प्रधानकारणवादिनी स्मृतिरवेदमूलैवेति वक्तुं युक्तम्; अतः सांख्यस्मृत्या वैदिकसमन्वयस्य न संकोचः ।

## एतेन योगः प्रत्युक्तः ॥२-१-३॥

अष्टाङ्गयोगप्रतिपादिनी विधिसूनोर्हिरण्यगर्भर्षेर्योगस्मृतिरपि प्रधानकारणत्वमेव वदति विधितनयकपिलस्मृतिवत्; यथा वैदिकसमन्वयस्य प्रधानकारणत्ववादिन्या सांख्यस्मृत्या विरोधात्तया तस्य संकोचो नाभवत् तथा चानया योगस्मृत्यापि वैदिकसमन्वयस्य संकोचो न भवति, भवति वेति सन्देहे संकोचो भवतीति पूर्वपक्षं ब्रूमः। कथमिति चेत्तत्रोच्यते- यद्यपि सांख्यस्मृतेरनुमेयश्रूतिमूलत्वे सति वैदिकसमन्वयसंकोचो न संभवति तथापि श्वेताश्वतरोपनिषदि ब्रह्मसाक्षात्कारहेतुतया योगविद्यायाः प्रपञ्चितत्वात्प्रत्यक्षश्रुतिमूलया हिरण्यगर्भयोगस्मृत्या प्रधानकारणवादिन्या परब्रह्मकारणवादिवैदिकसमन्वयस्य संकोच उचित इति प्राप्ते सिद्धान्तं वदामः - न योगस्मृत्या श्रुतिसमन्वयसंकोचः, कुतः योगस्मृतेः।

'योगश्चित्तवृत्तिनिरोधः' (पा.यो.सू. १-२)

इति सूत्रमारभ्य वैदिकाष्टांगयोगप्रतिपादने हि तात्पर्यमस्ति नावैदिके प्रधानकारणवादे । यदि योगस्मृतावपि सांख्यस्मृतिवत्तात्पर्यमस्ति चेत्तर्हि तस्या अपि प्रत्याख्यानं न्याय्यम् । ततो हिरण्यगर्भयोगस्मृत्यापि प्रधानकारणवादिन्या परब्रह्मकारणवादिश्रुतिसमन्वयस्य संकोच इति यदुक्तं तदयुक्तमेव । अथ सूत्रार्थमात्रं वर्ण्यते-तेन वैदिकसमन्वयविरुद्धप्रधान-कारणत्वप्रदर्शकसांख्यस्मृतिनिषेधेन योगः प्रत्युक्तः प्रधानकारणत्वबोधकयोगशास्त्रमपि प्रत्याख्यातं निषिद्धमेवेत्यर्थः । पुनरपि ब्रह्मकारणवादिशास्त्रसमन्वयस्य सांख्यतन्त्रोक्ततर्केण बाध्यतामाशङ्क्य परिहरति-

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥२-१-४॥

यथा वैदिकसमन्वयस्य सांख्यस्मृत्या न बाधः तथा तत्तर्केणाप्यस्य बाधो नास्ति, अस्ति वेति संशये सर्वथा तर्कबाध्योऽयं ब्रह्मकारणवाद इति पूर्वः पक्षः प्रवर्तते । कथमिति चैत्तत्र वदामः। ब्रह्मणः प्रपञ्चस्य चान्योन्यविलक्षणत्वात् प्रवर्तते । अस्य जगतः तथात्वं ब्रह्मकार्यत्वं न संभवति । कुतो वैलक्षण्यमवगतमिति चेत् शब्दादेव; चोऽवधारणे ।

'विज्ञानं चाविज्ञानं च' (तै.उ.आन. अनु. ६)

इति श्रुतिशब्दो हि प्रपञ्चस्य विकारास्पदत्वाज्ञत्वाद्यपुरुषार्थरूपमभिधत्ते,

अतः सत्यज्ञानानन्दरूपात् ब्रह्मणोऽस्य वैलक्षण्यं सिद्धम् । एवं च सति कथमनयोरश्वमेषयोरिव कार्यकारणत्वं घटते ? अत्र पुनरुपपत्तिमाह-

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥२-१-५॥

यद्यचेतनत्वेन चेतनाद् ब्रह्मणो विलक्षणमिदं जगत्तर्हि

'तं पृथिव्यब्रवीत्' (तै. सं. ५-५-२),

'आपो वा अकामयन्त' (तै. ब्रा. ३-१-५-४),

'श्रुणोत ग्रावाणो विदुष' इत्यादौ वाक्ये पृथिव्याद्यचेतनस्य कथं चेतनकार्यव्यपदेशः ? तस्मादिदं चेतनमेव सर्वं जगत्; अतो ब्रह्मप्रपञ्चयोः चेतनाचेतनरूपतया न वैलक्षण्यं शङ्कनीयम्; इति चेत्तत्राह-यतः पृथिव्यादिषु सर्वत्र चेतनकार्यव्यपदेशस्तु तदभिमानिदेवतासंबंध्येवावगम्यते

'हन्ताहमिमास्तिस्रो देवता' (छा. ६-३-२)

इति देवताशब्दविशेषात्,

'अग्निर्वाक् भूत्वा मुखं प्राविशदिति, आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति, वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐ.१-२-४)

इत्यादिभिः अचिद्वस्त्वभिमानिदेवतानुगतेश्च । तस्माच्चेतनसमूहमिश्राचेतनत्वादिनापि कल्याणगुणगणविशिष्टाद् ब्रह्मणो विलक्षणमेव जगत् । ततो जगतः कार्यत्वं ब्रह्मणः कारणत्वं च पूर्वपक्षयुक्तिबाध्यमेव ।

## दृश्यते तु ।२-१-६॥

सिद्धान्त उच्यते-विलक्षणयोरपि ब्रह्मप्रपञ्चयोः कार्यकारणभावः संभवति । अचेतनाद्गोमयाच्चेतनवृश्चिकोत्पत्तिदर्शनाच्चेतनात्पुरुषादचेतनकेशाद्युत्पत्तिदर्शनाच्च । अतः शुष्कतर्कः श्रुतिसमन्वयस्य न बाधक इति निर्णीयते । पुनः शङ्कित्वा परिहरति-

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥२-१-७॥

एवं कार्यकारणयोर्वैलक्षण्यात् कारणे कार्यमसदेव,

'असद्वा इदमग्र आसीत्' (तै.उ.आन. अनु. ७-१)

इति श्रुतेरिति चेन्नैवं वाच्यं प्रतिषेधमात्रत्वात् । अस्याः श्रुतेस्तयोः समानलक्षणत्व-नियमप्रतिषेधमात्रविषयत्वात् । अतः कार्यकारणयोर्वैलक्षण्येऽपि पूर्वोक्तेन चेतनाचेतनानां ब्रह्मणश्च शरीरशरीरिभावरूपेण श्रुतिस्मृत्यभिहितचातुर्येण वस्त्वेकता न हीयते एव ।

## अपीतौ तद्वत्प्रसंगादसमञ्जसम् ॥२-१-८॥

इतौ-जगतो ब्रह्मणः सकाशादुत्पत्तौ सत्यामित्यर्थः । तयोरेकभावोक्त्या तद्वत्प्रसङ्गात्-जगतो यथा तथा ब्रह्मणोऽपि विकारत्वाज्ञत्वादिप्रसंगात् श्रुत्यभिहितं सर्वज्ञत्वनिर्विकारत्वादिकं तद्धर्मवृन्दं असमञ्जसं स्यात् । इममेवार्थं विवृणोति सत्कार्यवादेन । कार्यकारणयोर्जगद्ब्रह्मणोर्वस्त्वेकत्वे श्रुतिसमन्वयस्य तर्कबाध्यत्वमस्ति नवेति सन्देहे सति तदस्तीति पूर्वः पक्षः । कथं, यत एव जगद्ब्रह्मणोर्वस्त्वैक्योक्तौ जगत इव ब्रह्मणो विकाराज्ञानाद्यनिष्टप्रसंगः समागच्छते, तत उपनिषद्वाक्यानामेकार्थसाङ्गत्यमसमञ्जसमस्ति, अतस्तर्केण श्रुतिसमन्वयस्य बाध इति ।

## न तु दृष्टान्तभावात् ॥२-१-९॥

पूर्वाधिकरणाभिहितबाधबोधकपूर्वपक्षव्यावर्तकौ न तु शब्दौ ।

'यस्यात्मा शरीरं यस्याव्यक्तं शरीरम्' (बृह.५-७-२६) इत्यादिबृहदारण्यश्रुत्या

'यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीर'मित्यारभ्य

'य आत्मानामन्तरे सञ्चरन् यस्यात्मा शरीरम्' (सुबा.उ. ७) इति सुबालोपनिषच्छ्रुत्या च ।

'खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन् ।

सरित्समुद्रांश्च हरेः शरीरं यत् किञ्च भूतं प्रणमेदनन्यः' ॥ (भा.११-२-४१)

इति श्रीमद्भागवतोक्त्या च सिद्धचिदचिच्छरीरकस्य परब्रह्मणो नारायणस्य कारणतया कार्यतया चावस्थाने सति गुणदोषव्यवस्थायां दृष्टान्तसद्भावात्तत्रोपनिषद्वाक्यानामे-कार्थसाङ्गत्यमसमञ्जसं न भवति; कथमिति चेत्तत्रोच्यते-यथा मनुष्यादिभावोपगतात्मनो

बालत्वयुवत्वस्थविरत्वादिभावेऽपि बालत्वादयः शरीर एव सुखादयस्त्वात्मन्येव तद्वदत्रापि शरीरभूतचिदचिद्वस्तुगताज्ञानविकाराद्यनिष्टानि शरीरभूते चिदचिद्वस्तुन्येव तिष्ठन्ति, निरवद्यत्वाविकारसर्वज्ञत्वसत्यसंकल्पत्वादयः आत्मभूते नारायण एव, इत्थं दृष्टान्तभावात् दृष्टान्तदार्ष्टान्तिकयोः सत्यत्वात् उपनिषद्वाक्यानामेकार्थसांगत्यस्यासामंजस्यं चेतनाचेतनशरीरिणि परब्रह्मणि नास्त्येव ।

## स्वपक्षदोषाच्च ॥२-१-१०॥

केवलं तर्कावलम्बने स्वपक्षरूपे प्रधानकारणवादे एव दोषः ।
तथाहि निर्विकारपुरुषसंनिधिवशात्प्रकृतिप्रवृतौ सत्यां परस्परधर्माध्यासो दुर्निवार्यः । अन्यत्रान्यधर्मानुसंधानरूपोऽध्यासः स निर्विकारस्य पुरुषस्य सदोदासित्वादकर्तुर्न संभवति, अचेतनायाः प्रकृतेश्चानुसंधानरूपोऽध्यासो न सभंवत्येव; अतः प्रधानकारणवाद एव तर्कबाध्यः।

## तर्काप्रतिष्ठानादपि ॥२-१-११॥

तर्कस्याप्रतिष्ठितत्वात्प्रधानकारणवादस्य तन्मूलत्वात्तत्र प्रतितर्कं तर्कान्तरसंभवात्तस्यैव त्याज्यत्वं न ब्रह्मकारणवादस्य ।

## अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः ॥२-१-१२॥

अन्यथा यथा प्रधानकारणवादस्य प्रतितर्केण पराहतिर्न भवेत् तथा प्रकारान्तरेण प्रधानस्य कारणत्वमनुमेयमिति चेत् एवं वादोऽपि युक्तो न भवतीत्याह तत्र वादेऽप्येवं तयोः परस्परसंयोगानर्हस्वभावयुक्त्योः प्रकृतिक्षेत्रज्ञसमूहयोर्निजस्वभावविरुद्धान्योऽन्य-धर्माध्याससंपादकतर्कोपरि प्रतितर्ककलहसंभावनया एतद्वादप्रतिष्ठितत्वाभावदोषादनिर्मोक्ष एव प्रसज्यते; अनिर्मोक्षप्रसंगो हि क्षेत्रज्ञकलापस्य नित्योदासीनस्य प्रकृतिसंबन्धाभावान्नित्यमुक्तत्वे न प्रतीयते; तयोर्नित्यं परस्परधर्माध्यासत्वे सति तु पुरुषसमूहस्य स एव प्रतीयते सदा प्रकृतिधर्माध्यासवतस्तस्यापदेष्टृतदन्यमुक्ताभावात् । ततः शुष्कतर्कमूलप्रधानकारणवाद एव त्याज्यः नतु प्रबलश्रुतिप्रमाणसिद्धो ब्रह्मकारणवाद इति युक्तम् ।

## एतेन शिष्टपरिग्रहा अपि व्याख्याताः ॥२-१-१३॥

यथेदमनीश्वरसांख्यशास्त्रं तर्कमूलत्वेनाप्रतिष्ठितत्वादिभ्यः प्रत्याख्यातं तथैवेतेन प्रत्याख्यानेन शिष्टानामपरिग्रहाः कणभक्षाक्षपादादीनां बुद्धिमतां पक्षा अप्यपरिग्राह्या इति व्याख्याताः । एतदुक्तं भवति कणादमतसिद्धपरमाणुकारणवादोऽपि निराकृत इति ।

भोक्त्रापत्त्यधिकरणम्

भोक्त्रापत्त्यधिकरणम् ॥२-१-२॥

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥२-१-१४॥

पूर्वत्र यदुक्तं चिदचिदात्मकविश्वविशिष्टान्तर्यामिरूपनारायण एवाद्वितीयः सन् कारणं कार्यं च भवतीति विशिष्टं ब्रह्माद्वैतं तस्य वैदिकवाक्यसमन्वयसिद्धस्य युक्तिबाधापत्तिरस्ति नवेति संशयः। एवं सति पूर्वपक्षः प्रवर्तते-यदि चिदचिच्छरीरकत्वमिष्यते नारायणस्य तदा शरीरित्वमस्य सिद्धम्; तथा सति जीववत्सशरीरत्वेन तस्यापि शरीरसंबन्धप्रयुक्तसुखदुःखभोक्तृत्वापत्तेरस्मात्संसारिणो जीवात्तस्य नारायणस्याविभागः प्राप्तः, अतोऽयं जीवोऽयं नारायणश्चेति विशेषानुपपत्त्या जगद्विशिष्टत्ववादे नारायणस्य निर्दोषस्वरूपासिद्धिप्रसङ्ग इत्येवं पूर्वपक्षी मन्यते चेत् नात्र विरोध इति सिद्धान्तः। निर्दोषनिखिलमङ्गलदिव्यमनोहरमूर्तित्वेन जीवान्नारायणस्य विभागः स्यादेव न खलु शरीरित्वप्रत्युक्तमनिष्टभोक्तृत्वं किन्तु पराधीनत्वप्रयुक्तमेव। यथा लोके राज्ञः सशरीरत्वेऽप्यनन्यवश्यस्य न स्वाज्ञाहननजन्यदुःखसंबन्ध इतरेषां तु भवति इति तस्य स्वाज्ञाभङ्गजन्यदुःखभोक्तृत्वं नेतरसमानम्।

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता. १-९)

इति जीवनारायणयोरस्वातन्त्र्यं स्वातन्त्रयं च स्वतः सिद्धमेव अतश्चेतनाचेतनस्वभावेभ्योऽति-विलक्षणस्वभावया दिव्यमनोहरमङ्गलमूर्त्त्या स्वधामस्थस्य स्वतन्त्रस्यान्तर्यामितया चिदचिच्छरीरिणो नारायणस्यास्वतन्त्राज्जीवाच्छरीरसंबन्धतुल्यत्वेऽपि विभागोऽस्त्येव; अतो न विशिष्टा द्वैतहानिः। यद्यपि स्वांतत्र्यास्वांतत्र्याद्यन्योन्य विरुद्धधर्मसंबन्धेन जीवब्रह्मणोर्विभाग उच्यते तथापि तयोरचिद्विशिष्टजीवब्रह्मणोरनन्यत्वं सिध्यत्येवेत्याह-

आरम्भणाधिकरणम् ॥२-१-३॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥२-१-१५॥

इह कार्यकारणयोर्जगद्ब्रह्मणोः श्रुतिसमन्वयसिद्धमनितरत्वं युक्तं नवेति सन्दिह्यते। अचेतनत्वाल्पज्ञत्वकर्मवश्यत्वाकर्मवश्यत्वसर्वज्ञत्वाद्यन्योन्यविरुद्धधर्मसंबन्धवैलक्षण्यं सन्देहस्य कारणम्; विरुद्धधर्मिणोरनयोः कथमनन्यत्वमुपलभ्यते ? पूर्वाधिकरणे सर्वज्ञत्वादिमत्त्वेन नारायणस्य भोक्तृत्वाज्ञत्वादिना जीवस्य चोभयोर्विभागो निर्दिष्टः। अचिद्वस्तुनोऽप्यनेनात्यन्तविलक्षणत्वादनन्यत्वकथा दूरत एव त्यक्ता।

नहि कार्यकारणत्वमनन्यत्वसाधकम्; गोमयवृश्चिकादौ कार्यकारणत्वे सत्यपि तस्मिन् वैलक्षण्यदर्शनात्। घटमृत्पिण्डादिष्वपि पदार्थजलाहरणरूपक्रियादिव्यवहारभेदादभेदो नास्त्येव। अथवा कार्यकारणयोरत्यन्ताभेदे प्रपञ्चब्रह्मणोरखण्डत्वैकधर्मतया सर्वत्र

कर्तृकर्मक्रियादिव्यवहारलोपः स्यादित्येवं प्राप्ते पूर्वपक्षे ब्रूमः-संकुचितान्तर्यामिशक्त्या सूक्ष्मचेतनाचेतनवस्तुषु व्याप्तात् सूक्ष्मचिदचिच्छरीरिणः कारणात् ब्रह्मणः कार्यं विकसितान्तर्यामिरूपेण विशिष्टं स्थूलचिदचिद्वस्तुभूतं जगदन्यदेव; कथमेतदवगम्यते ? आरम्भणशब्दादिभ्यः-आरम्भणे शब्द आदिर्येषां तेभ्य;

'यथा वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा. ६-१-४),

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६-२-१),

'तदैक्षत बहु स्यां प्रजायेय' (छा.६-२-३), इति

'ऐतेदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा. ६-८-७),

'सर्वं खल्विदं ब्रह्म तज्जलानिति' (छा. ३-१४-१),

'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' (बृ. ३-४-७) इत्यादि शब्देभ्यः।

यदुक्तं नहि कार्यकारणत्वमनन्यत्वसाधकमिति तत्राह-

## भावे चोपलब्धेः ॥२-१-१६॥

घटादिकार्यभावे तदेवेदं मृद्द्रव्यमित्थमवस्थितमिति कारणस्योपलब्धेश्च कारणादनन्यत्कार्यम्; यथा सजीवस्य देवदत्तदेहस्य बालत्वयुवत्वाद्यवस्थाविशिष्टत्वमनन्यत्वं तथा नारायणान्तर्यामिशक्तिविशिष्टत्वात्स्वशरीरभूतस्य मृत्पिण्डस्थानीयकारणावस्थ-सूक्ष्मचिदचिद्वस्तुसमूहस्य तद्विकसितान्तर्यामिशक्तिविशिष्टतया स्वशरीरभूतघटादिस्थानीय-कार्यावस्थस्थूलचिदचिद्वस्तुतया भवनमनन्यत्वम्; इत्थं मृत्पिण्ड घटादिदृष्टान्तो योजनीयो न त्वन्यथा; कुतः, श्रुत्यभिहितानां चेतनाचेतनपरमात्मनां विलक्षणस्वरूपस्वभावानां परस्परविरोधापत्तेः। तदेव स्पष्टयति -

## सत्त्वाच्चापरस्य ॥२-१-१७॥

अपरस्येति पाठान्तरम्। अवरस्य स्थूलचेतनाचेतनरूपकार्यस्य जगतस्तद्व्यतिरिक्त-नारायणप्रकाशे सूक्ष्मरूपतया सत्वात् कारणावस्थतया प्रलयकाले विद्यमानत्वात् संकुचितान्तर्यामिशक्तिविशिष्टसूक्ष्मचिदचिद्वस्तुरूपकारणादनन्यत् विकसितान्तर्यामिशक्ति-विशिष्टस्थूलचिदचिद्वस्तुकार्यं व्यपदिश्यते। अनेन प्रकारेण कार्यकारणयोर्जगद्ब्रह्मणोरनन्यत्वं ज्ञातव्यं नतु मृद्घटादिदृष्टान्तवदत्यन्ताभेदेन; कुतः,

परस्परविरुद्धाल्पज्ञत्वाचेतनत्वसर्वज्ञत्वादिधर्मविशिष्टानां चेतनाचेतनान्तर्यामिणा कार्यकारणभावेनात्यन्ताभेदे वाच्ये सति तत्त्वत्रयनिरूपकश्रुतिस्मृतीनां परस्परविरोधापत्तेः। नन्वेवं च सति मृद्घटादिदृष्टान्तप्रदर्शने किं प्रयोजनमिति चेत्तत्र ब्रूमः -मृद्घटादिदृष्टान्तप्रदर्शनं तु कारणावस्थसूक्ष्मचिदचिद्वस्तूनां नामरूपविभागाभावप्रतिपादनपरम्, कार्यावस्थानां तेषां

च नामरूपविभागबोधनपरं च नतु तत्त्वत्रयस्यैकत्वप्रतिपादनपरम् । पुनराशङ्क्य तत्प्रतिहर्तुं सूत्रान्तरमारभ्यते-

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ॥२-१-१८॥

'इदं वा अग्रे नैव किञ्चनासीत्' (तै.अष्ट-२-२-९)

इति कार्यस्य पूर्वमसद्व्यपदेशात् कारणे कार्यमसदिति चेन्न, स्थूलत्वविरोधिसूक्ष्मत्वधर्मान्तरयोगेनैवायमसद्व्यपदेशः नतु चिदचिद्वस्त्वभावेन; कुतः,

'तदसदेव सन्मनोकुरुत स्याम्' (तै.ब्रा.२-२-९-१)

इति वाक्यशेषात् मनस्कारोपि विद्यमानस्यैव भवति, युक्तिरिपि तथा असद्व्यपदेशस्य धर्मान्तरयोगनिमत्ततामवगमयति ।

'युवाप्राग्नासीदिदानीमस्ति तदानीं न भविष्यति' (तै.अष्ट.प्र.११-९)

इति बालत्वयुवत्वस्थविरत्वरूपैरन्योन्यविरोधिभिर्भावरूपैर्धर्मैर्विद्यमानस्यैव जीवविशिष्ट-शरीरस्यासदादिव्यपदेशोपपत्तौ न तद्व्यतिरिक्तः कश्चिदभावो नाम पदार्थो भवति येन असद्व्यपदेशालम्बनधर्मान्तरं कल्पनीयं स्यादिति युक्तेः तथा शब्दान्तराच्च

'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' (बृ.३-४-७) इत्यादेः-

अत्रायमभिप्रायः पूर्वं दिव्यमनोहरपरमङ्गलमूर्त्या स्वधामस्थस्य सूक्ष्मचिदचिद्वस्तुव्यतिरिक्तस्य जगन्निमित्तभूतस्यान्तर्यामिशक्तिमतोऽद्वितीयस्य नारायणस्य प्रकाशभूतान्तर्यामिशक्ति-विशिष्टनामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकं शरीरशरीरिणोरभेदविवक्षया-ऽद्वितीयमुपादानकारणभूतमन्तर्यामिशक्तिरूपपरमात्मस्वरूपं शक्तिशक्तिमतोरभेदेनैकमेवासीत्, पुनः स्वेच्छया तद्रूपः परमात्मा सूक्ष्मतया स्वस्थं चिदचिद्वस्तुवृन्दं तत्पूर्वदशाविरोधिस्थूलत्वयुक्तनामरूपविभागार्हं यथा स्यात्तथा बहिर्विस्तारयति । अन्तर्यामिशक्तिमतो नारायणस्य चिदचिद्वस्तुष्वन्तर्यामिशक्तेः संकोचावस्था प्रलयः विकासावस्था सृष्टिरिति एवं कारणात्परब्रह्मणः शरीरशरीरिभावेनाभिन्नमेव जगत्कार्यमिति विज्ञायते । अत्र दृष्टान्तान्तरमाह-

## पटवच्च ॥२-१-१९॥

कनकक्रिमिकोशकार्पासानां तन्तुभिर्निर्मितपटवत् सूक्ष्मावस्थं स्थूलावस्थं च विश्वं व्यपदिश्यते । तथाहि यथा कनकादीना तन्तुत्रयेण रचितस्य पटस्य सूक्ष्मतया संकोचः कारणावस्था, तस्य प्रसारणं कार्यावस्था, अथवा कञ्चुकरूपेण महापटकुटीरूपेण वा रचना कार्यावस्था भवति; तथा सूक्ष्मचिदचिद्वस्तुविशिष्टं संकुचितान्तर्यामिशक्तिरूपं ब्रह्म कारणं

विभक्तनामरूपस्थूलचिदचिद्वस्तुविशिष्टं विकसितान्तर्यामि शक्तिरूपं ब्रह्म कार्यं च भवति । पुनर्निदर्शनान्तरमाह–

## यथा च प्राणादिः ॥२-१-२०॥

यथा वायुरेक एव स्थानभेदेन प्राणादिभेदमावहादिभेदं च भजते तथान्तर्यामिशक्तिमदेकमेव स्थूलभावापन्नप्रकृतिपुरुषादिसकलचेतनारूपस्थानभेदेन तत्तत्कर्मफलप्रकाशकमन्तर्यामिशक्तिभेदं भजते । एवं ब्रह्मणः कारणाद्व्याप्यव्यापकभावेनानन्यत्कार्यं जगदिति युक्तम् । उक्तमर्थमाक्षिप्य समाधत्ते–

इतरव्यपदेशाधिकरणम् ॥२-१-४॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२-१-२१॥

परब्रह्मणो जगत्कारणत्वं संभवति नवेति सन्देहः । न संभवतीति पूर्वपक्षः प्रवर्तते । कुतः,

'तत्त्वमसि' (छा. ६-८-७),

'अयमात्मा ब्रह्म' (बृह.६-४-५),

'अहं ब्रह्मास्मि' (बृ. ३-४-१०) इत्यादिवाक्येषु जीवब्रह्मणोरेकत्वोक्त्या जीवो ब्रह्मेति प्राप्तौ प्रपञ्चसर्जनस्य जीवदुःखहेतुत्वेन जीवभावापन्नस्य ब्रह्मणः स्वहिताकरणादिदोषप्रसक्तेः सर्वज्ञस्य सत्यसंकल्पस्य ब्रह्मणः प्रपञ्चकारणत्वानुपपत्तेः । एवं त्वदुक्तौ जीवब्रह्मणोर्भेदवादिन्यः श्रुतयः प्रपञ्चब्रह्मणोरनत्यत्वं कथयता त्वयैव परित्यक्ता भवेयुः । तर्हि भेदो वाच्यः, भेदे सत्यनन्यत्वासिद्धिः स्यात्, अतोऽत्रैवं वक्तव्यम्; औपाधिकभेदप्रतिपादिकाः भेदश्रुतयः स्वाभाविकाभेदप्रतिपादिका अभेदश्रुतयश्चेति चेत्तत्रेत्थं शङ्क्यते–स्वभावेन स्वस्मादभिन्नं जीवकलापं प्रकृत्यनावृतः प्रपञ्चकारणभूतो ब्रह्मनामा परमात्मा किं न जानाति जानाति वा, न जानातीति चेत्सर्वज्ञत्वहानिः, जानातीतिचेत् स्वस्मादनन्यस्य जीवस्य आध्यात्मिकादित्रिविधास्तापाः स्वस्यैव तापाः सन्तीति बोद्धुः परमात्मनः हिताकरणादिदोष प्रसक्तिरवर्जनीया । ननु जीवब्रह्मणोर्भेदोऽज्ञानकृतः । तत्र पक्षे भेदप्रतिपादिका भेदश्रुतय इति चेत्तत्रापि पूर्वोक्तदोषप्रसंग इति प्राप्ते सिद्धान्तं ब्रूमः

'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' (श्वेता. ४-९),

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' (मुण्ड.३-१-१/श्वेता.४-६)

'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (श्वेता. ६-१६),

'पृथगात्मानं प्रेरितारं च मत्वा जुष्ट' (श्वेता.१-६)

इत्यादिभिर्जीवात्मनोऽर्थान्तरभूतः परमात्मेत्यवगमात् जीवकर्मानुगुणप्रपञ्चरचनायाश्च

परब्रह्मणो लीलामात्रप्रयोजनत्वात् प्रपञ्चकारणत्वं संभवत्येव।

'तत्त्वमसि' (छा. ६-८-७) इत्यादिवाक्येषु जीवब्रह्मणोरेकत्वनिर्देशस्तु तयोः

'यस्यात्मा शरीरम्' (बृह.५-७-२६)

इत्यादिश्रुत्यन्तरेषु शरीरशरीरिभावस्य स्वाभाविकत्वप्रतिपादनाज्जीवस्य परब्रह्मतादात्म्यभावमवगमयति कार्यकारणयोरनन्यत्वम्; किञ्च शरीरभूतयोश्चेतनाचेतनवस्तुनोर्दुःखित्वपरिणामित्वादिस्वभावाः शरीरिणो ब्रह्मणश्च सकलदोषगन्धवर्जितत्व समस्तकल्याणगुणाकरत्वादिस्वभावाश्च तत्त्वानां तेषां त्रयाणां स्वरूपवैलक्षण्यबोधकाः श्रुतिसिद्धाः सन्तीति निश्चीयते। इदानीं सूत्रार्थविवेचनं विधीयते-इतरशब्देन ब्रह्मणोऽन्यो जीवो व्यपदिश्यते; इतरस्य जीवस्य ब्रह्मत्वेन व्यपदेशात् तयोरेकत्वमवगमत्; अतो जीवभावापन्नस्य स्वस्य दुःखित्वादिधर्मोपलब्धेर्हितरूपप्रपञ्चाकरणमहितरूपप्रपञ्चकरणमित्याद्यनेकदोषप्रसक्तिर्ब्रह्मणो भवति; अतस्तस्य जगत्कारणत्वं न संभावनीयमित्यर्थः। तस्य जगत्कारणत्वं युक्तमिति प्रतिपादयितुं सूत्रमाह-

## अधिकं तु भेदनिर्देशात् ॥२-१-२२॥

तुशब्द उक्तपक्षव्यावर्तकः। कार्यकारणयोरनन्यत्वेऽपि जीवात्मनोऽधिकमर्थान्तरभूतं ब्रह्म श्रूयते; कुतः, भेदनिर्देशात्। तथाहि

'करणाधिपाधिपः (श्वेता. ६-९),

'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (श्वेता. ६-१६),

'पृथगात्मानं प्रेरितारं च मत्वा' (श्वेता.१-६),

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते,
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' (मुण्ड-३-१-१ / श्वेता. ४-६),

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता.१-९),

'विद्याविद्ये ईशते यस्तु सोऽन्यः' (श्वेता. ५-१),

'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ.२-२-१३),

'अन्तः प्रविष्टः शास्ता जनानाम्' (तै.आर. ३-११-१,२),

'जुष्टं यदा पश्यत्यन्यमीशम्' (मुण्ड. ३-१-२ / श्वेता. ४-६),

'य आत्मनि तिष्ठन्नात्मनोन्तरः' (बृ. ५-७-२६ (मा.पा.)

इत्यादिश्रुतिभिर्नियम्याज्जीवान्नारायणस्य नियन्तुर्भेदो निर्दिश्यते। ननु पूर्वम्

'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र.सू. २-१-१५)

इत्यादिग्रन्थव्याख्याने चिदचिदात्मकप्रपञ्चस्य परस्य ब्रह्मणश्चानन्यत्वमभेदप्रतिपादकश्रुतिगणेन युष्माभिः साधितम्; अत्र तु तयोः पृथक्त्वं भेदप्रतिपादकश्रुतिगणेन साधितम्; तत्र यत्प्रपञ्चस्य

परस्य ब्रह्मणश्चानन्यत्वं युष्माभिरभेदोपपादकश्रुतिगणेन साधितं तत्किं स्वाभाविकं स्वीक्रियते उतौपाधिकम् ? तयोर्यत्पृथक्त्वं च भेदोपपादकश्रुतिगणेन साधितं तत्किमौपाधिकं स्वीक्रियते उत स्वाभाविकं किंवात्र भवदभिप्रेतमति न वयं निर्णेतुं शक्नुमः । किञ्च केवलभेदवादभेदाभेदवादनिर्विशेषवस्त्वैक्यवादरूपाणि त्रीणि मतानि सन्ति; तत्र कतमं मतमुभयथा श्रुतिगणेन युष्माभिः साधितमिति चेन्न वयमुभयथा श्रुतिगणेन भवदभिप्रेतं प्रपञ्चब्रह्मणोरनन्यत्वे पृथक्त्वे च स्वाभाविकत्वमौपाधिकत्वं चाश्रित्य त्वदुक्तमतत्रयान्यतममतं साधयामः, किंत्वनेन श्रुतिगणेन प्रतिपाद्यं विशिष्टाद्वैताख्यं मतमेव साधयामः । यत्त्वया मतत्रयमुक्तं तत्राद्यं मतं वेदान्तज्ञैरस्माभिरनङ्गीकृतम्; यतः केवलभेदवादिनां मते हि घटपटयोरिवात्यन्तभिन्नयोः प्रपञ्चपरब्रह्मणोः केनापि प्रकारेणैक्यासंभवादखिलोपनिषत्प्रसिद्धं कृत्स्नस्य प्रपञ्चस्य चिदचिदात्मकस्य ब्रह्मशरीरभावामश्रित्य विधीयमानमैतदात्म्यमिदं सर्वमिति तस्य ब्रह्मतादात्म्यभावोपदेशनं न संभवेत्; सकलोपनिषत्परित्यागरूपो विरोधश्चाप्यापद्यते; परित्यक्तश्रुतिप्रकोपश्चापि जायेत । द्वितीयमतमपि नास्माभिः स्वीकृतम्; यतस्तद्वादिनां मतेऽपि विरोधबाहुल्यमापद्यते । ते च जीवब्रह्मणोर्भेदश्रुतय औपाधिकभेदविषयाः अचिद्ब्रह्मणोर्भेदश्रुतयस्तु स्वाभाविकभेदविषया इति मन्यन्ते ।

अत्र को वा विरोध इति चेज्जीवब्रह्मणोरौपाधिकभेदवादे ह्युपाधिसंसर्गेण ब्रह्मण एव जीवभावाङ्गीकार आपतेत्; तथात्वे सर्वोपाध्युपहितस्वरूपस्य तस्यैकत्वाऽभ्युपगमात् जीवानां परस्परं भोगव्यतिकरादयो दोषा उपपद्येरन्; जीवब्रह्मणोर्नित्यत्वादिप्रतिपादकश्रुत्यादिविरोधश्चाप्युपपद्येत; ब्रह्मण्येवोपाधि-संसर्गाच्चोपाध्युपहितब्रह्मणो जीववादजीवगता अनिष्टनिःसीमत्रिविधतापादिसहिष्णुत्वादयोऽनेके दोषा अपि ब्रह्मण्येव प्रसज्येरन्; तथा सति निरस्तनिखिलदोषगन्धमङ्गलगुणगणाधार-ब्रह्मस्वरूपनिरूपकश्रुत्यादयो विरुध्येरन्; सर्वोपाध्युपहितस्वरूपस्य ब्रह्मणो दुःखित्वाद्यनर्थोपलब्धेर्हितरूपप्रपञ्चाकरणम-हितरूपप्रपञ्चकरणमित्यादयोऽनेके दोषा ब्रह्मण्येव प्रसज्येरन् । तृतीयमतमपि नास्माभिरङ्गीकृतम्; यतस्तद्वादिनां भवतां मतेऽपि कृत्स्नप्रपञ्चस्य ब्रह्मणश्च स्वरूपस्वभावगुणादिभिः परस्परवैलक्षण्यस्य तयोर्नित्यत्वस्य च प्रतिपादकश्रुत्यादयो विरुध्येरन्; किञ्च निर्विशेषे ह्येकस्मिन्वस्तुनि सति कृत्स्नप्रपञ्च ब्रह्मतादात्म्यभावोपदेशकश्रुतिगणो वैयर्थ्यं चापद्येत, कृत्स्नप्रपञ्चगतदोषाणां ब्रह्मण्येव प्रसंगश्चापि स्यादेव । तथात्वे सति ब्रह्मणः सकलदोषवर्जितत्वसमस्त-कल्याणगुणगणाकरत्वादिप्रतिपादकश्रुत्यादिविरोधश्चापद्येत; विधिनिषेधशास्त्रव्यर्थता च स्यात्। किञ्च एतस्मिन्मतत्रिके दूषणोक्तिविशेषप्रपञ्चस्तन्निरासविशेषप्रपञ्चश्च श्रीरामानुजाचार्यकृतश्रीभाष्यवेदार्थसंग्रहादिग्रन्थेभ्योऽवगन्तव्यः । किञ्च अस्मत्सिद्धान्ते संशयं कुर्वता त्वया त्वन्मतमेवान्तमतं वाचि समायातीति न्यायेन प्रकाशितं,

तत्र सजातीयविजातीयस्वगतभेदशून्यवस्त्वैक्यं प्रतिपादयता प्रपञ्चब्रह्मणोः पारमार्थिकभेदोपपादकश्रुतीनामौपाधिकत्वं च वदता त्वयैव स्वसिद्धान्ते आसुरमतत्वमसह्यमप्रतिष्ठं ते जगदाहुरनीश्वरमिति भगवदुक्तेः प्रकाशितं, तयोः स्वाभाविकभेदप्रतिपादकश्रुत्यादिप्रकोपश्चाङ्गीकृत इत्यलं प्रच्छन्नबौद्धानां युष्माकं मते दूषणपल्लवनेन।

एवं दोषबाहुल्याद्विरोधबाहुल्याच्चैतानि त्रीणि मतानि परिहाय सर्वथा निर्दोषं *सकलमतराजराजं विशिष्टाद्वैतमत*मेवाश्रितानामस्माकं न कापि विरोधाद्यापत्तिः। अथ स्वमतं निरूपयितुमादौ तदुपपादिकानां भेदाभेदवादिनीनां श्रुतिनामाशयः प्रतिपाद्यते। तत्र तावद् भेदवादिन्यो हि श्रुतयश्चिदचिदात्मकप्रपञ्चस्य परस्य ब्रह्मणश्च स्वरूपस्वभावादीनां वैलक्षण्यमसंकरत्वमनादिसिद्धं पारमार्थिकं भेदं च वदन्ति;

ब्रह्मणश्चिदचिदात्मकप्रपञ्चाद्व्यतिरिक्ततया दिव्याप्राकृतमूर्तिमत्तया निमित्तकारणतया सपार्षदतया च ब्रह्मपुरेऽवस्थितिमन्तर्यामिशक्त्या सर्वावस्थावस्थितचिदचिदात्मकप्रपञ्चानुप्रवेशं च वदन्ति; कथमिव यथा वह्न्यादयो देवा मूर्तिमन्तः सानुचराः सन्तः स्वस्वलोके स्थित्वा स्वस्वांशेन प्रपञ्चेऽनुप्रविष्टास्तथा तस्याप्युभयथाऽवस्थानं वदन्ति। एवमेव बृहदारण्योपनिषदि तृतीयाध्यायस्य सप्तमेऽन्तर्यामिब्राह्मणे

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर' (बृ. ५-७-७)

इत्यारभ्यैतद्ब्राह्मणसमाप्तिपर्यन्तं प्रपञ्चेऽन्तर्यामितया परब्रह्मानुस्यूतं दिव्याप्राकृतमूर्तिमत्तया च ततः पृथक् स्थितं चेति वर्णितमित्यवगम्यते। अन्यथा-

'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च॥ (कठ. २-२-९)
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव॥ (कठ. २-२-१०)
सूर्यो यथा लोकसर्वस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥ (कठ. २-२-११)
एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति'। (कठ. २-२-१२)

इति कठवल्ल्युपनिषदि ब्रह्मणः प्रपञ्चानुप्रवेशे ततो व्यतिरेकभावे च मूर्तिमतां स्वस्वलोकस्थानां वह्न्यादिदेवानां स्वस्वांशेन प्रपञ्चानुप्रवेशरूपदृष्टान्तसंगतिः स्यात्।

एवमन्यत्राप्युपनिषत्सु तस्योभयथाऽवस्थानं निरूपितम्। अभेदवादिन्यः श्रुतयस्तु स्वरूपस्वभावादिभिर्विलक्षणतयावस्थितस्य कृत्स्नस्य चिदचिदात्मकप्रपञ्चस्य ब्रह्मतादात्म्यभावं श्रुत्यन्तरप्रसिद्धात्मप्रपञ्चब्रह्मणोः शरीरशरीरिभावस्य स्वाभाविकत्वानादिसिद्धत्वप्रतिपादनादेवावगमयन्ति नतु निर्वेशेषं चिन्मात्रस्वरूपं ब्रह्मैव स्वयं कृत्स्नप्रपञ्चरूपतया जातमिति प्रतिपादन्यति। अन्यथा

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. अनु. १-१),

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता.१-९),

'नित्यो नित्यानाम्' (कठ.२-२-१३) इत्यादिश्रुत्युपदिष्टमविनाशित्वाजत्वनित्यत्वादिकं ब्रह्मणो विरुध्येत। 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य' इति न्यायेन तदनुग्रहीताभिः श्रुतिभिश्चोपदिष्टमजत्वं नित्यत्वं च जीवस्य विरुध्येत; वैषम्यनैर्धृण्येन सापेक्षत्वात्तथाहिदर्शयति न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चेति न्यायाभ्यां प्रतिपादितो यो जीवानादित्वाभ्युपगमेन तत्कर्मनिमित्ततया वैषम्यनैर्घृण्यपरिहारः सोऽपि विरुध्येत;

कार्यकार्यधर्माधर्मबन्धमोक्षस्वर्गनरकादिबोधकानि शास्त्राण्यपि वैयर्थ्यमापद्येरन्;

'अजामेकां लोहितशुक्लकृष्णाम्' (श्वेता.४-५/तै.ना.उ. अनु.१०-५),

'गौरनाद्यन्तवती सा जनित्री भूतभाविनि' (मन्त्रि. १-५), इति

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' (गीता. १३-१९)

इत्यादिश्रुतिस्मृतिभिः प्रतिपादिता प्रकृतेरजत्वानादितापि विरुध्येत;

तस्मादभेदश्रुतीनामुक्तार्थप्रतिपादने एव तात्पर्यमवसीयते। एवमेतयारुभयोः श्रुतिसमूहयोरविरुद्धोऽयं मार्गः। अथ विशिष्टाद्वैतशब्दसमासोक्तिपूर्वं भेदोपपादकश्रुतिसंगृहीतं तदर्थं प्रपञ्चयति सर्वकारणकारणस्याचिन्त्यविचित्रानन्तशक्तेर्नित्यविशुद्धनिरतिशयानन्दमयस्य परममङ्गलास्पदस्य कृत्स्नचिदचिदात्मकप्रपञ्चात्स्वरूपस्वभावगुणविभूतिभिरतिविलक्षणतया श्रुतिस्मृतिशतवचनैः प्रतिपादितस्य दिव्याप्राकृतभोगोपकरणवति दिव्ये ब्रह्मपुरे दिव्याप्राकृतकरचरणाद्यवयववद्भिः स्वपार्षदादिगणैरनवरतमुपास्यमानचरणपङ्कजस्य दिव्याप्राकृतान्योन्यसंस्पर्द्धिरूपानुरूप-करचरणाद्यवयवविशिष्टमनोहरमूर्तिमतो निमित्तकारणस्य परस्य ब्रह्मणः श्रीवासुदेवस्याण्डसंजिहीर्षावशाद्यदा प्रलयस्तदाऽतिसूक्ष्मदशापन्ननामरूप-विभागानर्हकारणावस्थशरीरभूतसकलचिदचिद्वस्तुविशिष्टं शक्तिशक्तिमतोरभेदावगमात्परब्रह्म-शब्दवाच्यान्तर्यामिशक्तिरूपं कारणावस्थशरीरिभूतं परंब्रह्माद्यविशिष्टशब्देनोच्यते; यदा च तस्यैवाण्डसिसृक्षावशात्सर्गस्तदाऽतिस्थूलदशापन्ननामरूपविभागार्हकार्यावस्थशरीरभूतसकल-चिदचिदवस्तुविशिष्टमुक्तविधान्तर्यामिशक्तिरूपं कार्यावस्थं शरीरिभूतं परं ब्रह्म द्वितीयविशिष्टशब्देनोच्यते।

एवं कारणकार्यावस्थावस्थितयोः कृतैकशेषविशिष्टशब्दवाच्ययोरवस्थाद्वयवत्त्वरूप-विशेषणसंबन्धप्रयुक्ततत्स्वरूपवैलक्षण्येन भिन्नयोरपि परब्रह्मणोरद्वैतमभेदो विशिष्टाद्वैतमिति षष्ठीतत्पुरुषसमासाश्रयणं सर्वथाऽनवद्यम्। एवं भूताभेदो दृष्टान्तेन साध्यते-यथा लोके दण्डी कुण्डली कमण्डलुवानयं देवदत्त इत्येवंजातीयके ह्युदाहरणे एकस्य देवदत्तस्यैव दण्डित्वकुण्डलित्वकमण्डलुवत्त्वरूपविशेषणसंबन्धप्रयुक्तेन तत्स्वरूपवैलक्षण्येनैव भेदस्तथैकस्यापि परस्य ब्रह्मणः भेदोऽवगम्यते नतु विशेष्ये तत्स्वरूपे

कारणकार्यरूपावस्थाद्वयवत्त्वरूपविशेषणसंबन्धप्रयुक्तेन तत्स्वरूपवैलक्षण्येनैव भेदोऽवगम्यते नतु विशेष्ये तत्स्वरूपे भेदः। एवमेव चिदचितोरपि कारणकार्यरूपावस्थाद्वयवत्त्वरूपविशेषण-संबन्धप्रयुक्तेन तत्तत्स्वरूपवैलक्षण्येनैव भेदोऽवगम्यते नतु विशेष्ययोस्तत्तत्स्वरूपयोर्भेद इत्यपि प्रसंगाद्बोध्यम्। एतावता कारणकार्योभयावस्थायां चेतनाचेतनानां परस्य ब्रह्मणश्च सद्भावेन तेषां सर्वेषामनादित्वं नित्यत्वं च चेतनाचेतनानां सदा परब्रह्मनियम्यत्वं परब्रह्मणश्च सदा तदुभयनियामकत्वमुपपन्नमिति फलितोऽर्थः। नन्वेवं चिदचिद्ब्रह्मणां कार्यकारणोभयावस्थायां संघातभावाङ्गीकारात्स्वभावादि संकरोऽप्युपपद्येतेतिचेत्तत्रोत्तरयामः - यथा स्वरूपतः पृथगवस्थितानां कारणभूतानां शुक्लकृष्णरक्ततन्तूनां संघाततया निर्मितस्य चित्रपटस्य शौक्ल्यादिगुणसंबन्धस्तत्तत्तन्तुप्रदेशे एव भवतीति न पटरूपकार्यावस्थायामपि सर्वत्र वर्णसंकरस्तथा कारणावस्थायां स्वरूपतः पृथगवस्थितानां चिदचिद्ब्रह्मणां संघाततया प्रतीयमानजगद्रूपकार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसंकरः। नन्वेवं चेतनाचेतनब्रह्मणां स्वभावाद्यसंकरत्वे सिद्धेऽपि यथा लोके महापातकिजनसंसर्गिणस्तत्संसर्गप्रयुक्तं पातकित्वमापतति यथा चोषरसंसर्गिणः काष्ठस्य तत्संसर्गप्रयुक्तलवणत्वं दृश्यते तथा शरीरभूतचेतनाचेतनसंसर्गिणो ब्रह्मणस्तत्तत्संसर्गप्रयुक्तपरिणामित्वापुरुषार्थाश्रयत्वे प्रसज्येतामिति चेत्तत्रोत्तरयामः यथा शरीरसंसर्गिणोऽपि जीवस्य बालत्वयुवत्वस्थविरत्वादयो धर्माः शरीरे एव पर्यवस्यन्ति सुखदुःखादिभोक्तृत्वापरिणामित्वादयो धर्मा जीवात्मन्येव पर्यवस्यन्ति तथा सर्वावस्थावस्थितशरीरभूतचेतनाचेतनसंसर्गेऽपि परिणामित्वापुरुषार्थाश्रयत्वे शरीरभूत-चेतनाचेतनेष्वेव पर्यवस्यतः। निरस्तसमस्तदोषगन्धत्वसत्यसंकल्पत्वनिरतिशय-ज्ञानानन्दत्वाद्यसंख्योदारगुणगणा ब्रह्मण्येव पर्यवस्यन्ति नतु तत्तद्गताः परिणामित्वादयः। अत्र चेतनाचेतनब्रह्मणां कार्यकारणभावाङ्गीकारे इयान्विशेषोऽवगन्तव्यः-तथाहि कार्यत्वं हि द्रव्यस्यैकस्यावस्थान्तरप्राप्तिः। तत्रावस्थाद्वयेऽप्यचेतनवर्गस्य स्वरूपान्यथाभावलक्षणो विकारः चेतनवर्गस्य तु ज्ञानसंकोचविकासलक्षणोऽन्यथाभावो विकारः ब्रह्मणोऽपि स्थूलसूक्ष्मोभयावस्थावस्थितानां चेतनाचेतनानां पृथक् पृथक् फलप्रदानाय तत्तदवस्थतत्तद्विशिष्टतारूपविकारो भवति; विकारो ह्यवस्थान्तरापत्तिरूपः स च शरीरभूतेषु चेतनाचेतनेषु तत्तच्छरीरिणि ब्रह्मणि च समानः, अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया

'येनाश्रुतं श्रुतं भवति' (छा. ६-१-३)

इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तो निर्दर्शितो नतु मृद्घटादिवत्प्रपञ्चब्रह्मणोरत्यन्ताभेदप्रतिपादनापेक्षया। किञ्च

'प्रजापतिः प्रजा असृजत्' (तै.ब्रा. २-२-९-१० (कपिष्ठलकठसंहिता ५-४),

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा. ६-८-६),

'यतो वा इमानि भूतानि जायन्ते' (तै.उ.भृ.अनु.१-१)

इत्यादयः श्रुतयश्चिदचिदात्मकप्रपञ्चस्योत्पत्तिप्रलयादिवादिन्यश्चेतनवर्गस्य ज्ञानविकास-संकोचकरौ विचित्रशरीरसंयोगवियोगौ बोधयन्ति; अचेतनवर्गस्य तु स्वरूपान्यथा भावं बोधयन्ति। चेतनवर्गस्योत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च

'न जायते म्रियते' (कठ-१-२-१८) इत्यादयो

'नित्यो नित्यानाम्' (कठ.२-२-१३) इत्यादयश्च श्रुतयः स्वरूपान्यथात्वाभावं ज्ञानसंकोचविकासरूपानिष्टविकारवत्त्वेऽपि तदनादित्वं च बोधयन्ति;

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद' (बृ. ५-७-२६ (मा.पा.),

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद' (बृ. ५-७-७) इत्यादयः

'स वा एष महानज आत्माजरोऽमरोऽमृतो ब्रह्म' (बृ. ६-४-२५),

'नित्यो नित्यानाम्' (कठ.२-२-१३)

इत्याद्याश्चश्रुतयः परस्य ब्रह्मणश्चेतनाचेतनेभ्यः स्वरूपस्वभावादिवैलक्षण्यं बोधयन्ति। तद्यथा श्रुतिभिर्भोग्यभूताचेतनवर्गभोक्तृभूतचेतनवर्गतत्तन्नियन्तृपरमात्मनो विलक्षणस्वभावान्प्रतिपाद्य भोग्यभूताचेतनवर्गगतमुत्पत्त्यादिकं भोक्तृभूतचेतनवर्गे प्रतिषिध्य तस्य नित्यत्वादिकं च प्रतिपाद्य भोग्यभूताचेतनवर्गगतमुत्पत्त्यादिकं भोक्तृभूत चेतनवर्गगतं च सांसारिकत्रिविधतापाद्याश्रयत्वं तत्तन्नियन्तरि ब्रह्मणि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्यसंकल्पत्वं करणाधिपाधिपत्वं सर्वपतित्वं सर्वात्मत्वं च प्रतिपाद्य सर्वावस्थावस्थितसकलचेतनशरीरकत्वं प्रतिपादितम्। एवं सर्वावस्थावस्थितचिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं सृष्ट्यनन्तरं नानात्वावधारणं च नामरूपविभागाभावभावाभ्यामुपपद्यते। तथाहि

'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' (बृ. ३-४-७),

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६-२-१)

'बहु स्यां प्रजायेय' (तै. आन. अनु. ६-२)

इत्यादयः श्रुतयो हि चिदचिद्विशिष्टस्य ब्रह्मणो नामरूपविभागानर्हसूक्ष्मदशापत्तिविवक्षया नानात्वं च वदन्तीति सकलवेदान्तवेद्यतया निर्विवादत्वात्सर्वथा निरवद्यं विशिष्टाद्वैताख्यमतमेव न्यायविद्भिः स्वीकर्तव्यम्।

## अश्मादिवच्च तदनुपपत्तिः ॥२-१-२३॥

सर्वथा जीवब्रह्मणोरभेद एव अभेदश्रुतिभिरिति चेन्न, अनुपपत्तेः। कथमनुपपत्तिस्तत्राह अश्मादिवत्-अश्मकाष्ठलोष्ठतृणादेरचेतनस्य चेतनजीववर्गादिव जीववृंदस्याऽप्यज्ञत्वकर्मवश्यत्वादिदोषकलापेन सर्वज्ञत्वसत्यसंकल्पत्वाद्यसंख्यगुणगण-विशिष्टान्नारायणादत्यन्तविजातीयत्वश्रवणात्तदनुपपत्तिस्तयोरेकत्वानुपपत्तिः। तस्मात्परं ब्रह्म

जीवादर्थान्तरभूतमेव । यदि चेतनजात्या समानस्यापि जीवस्य लक्षणगुणैर्वैषम्यात्पर-ब्रह्मत्वानुपपत्तिः तर्हि किमुताचेतनस्य जडत्वादिधर्मैर्विलक्षणस्येति तात्पर्यं बोध्यम् । सर्वथा श्रुतिस्मृतिन्यायैरुक्तेन विशिष्टकार्यत्वेन स्वानन्यरूपादपि चेतनाचेतनप्रपञ्चात् स्वरूपस्वभाव-गुणविभूतिभिरतिविलक्षण एव सर्वज्ञः परमात्मा ।

उपसंहारदर्शनाधिकरणम् ॥२-१-५॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२-१-२४॥

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६-२-१),

'एको ह वै नारायण आसीत्' (महो. १-१)

इत्यादिषु नारायण एक एव जगतः कारणमवगम्यते । तस्यैकस्य नानाविधप्रपञ्चकारणत्वमुचितं न वेति सन्देहे तन्नोचितमिति पूर्वपक्षं ब्रूमः । तदसंभवात्; कार्यमेतदाकाशवाय्वग्निसलिलरूपं विचित्रं कथं कारणवैचित्र्यमन्तरेण संभवति ? दृश्यते हि रथादिकार्येषु बहुकारकोपसंहारस्तस्मादेकस्य कारणत्वं न संभवतीति चेत् नैतदुचितम् ।

सूक्ष्मचिदचिद्वस्तुशरीरिणः स्वतः सिद्धासंख्यैश्वर्ययुतस्यैकस्यापि संकुचितान्तर्यामिशक्तिरूपब्रह्मणो विकसितान्तर्यामिशक्तिमिश्रस्थूलचेतनाचेतन-प्रपञ्चरूपकार्येण परिणामः संभवत्येव । यथा घृतमिश्रस्य क्षीरस्यैकस्यैव दधिभावेन तद्वत्स बोध्यस्तस्मात् ब्रह्मैककारणकं जगत्कार्यं भवति । यदुक्तं कार्यवैचित्र्यं कारणवैचित्र्यापेक्षमिति तदयुक्तमेव । चेतनादेकस्मात्पुरुषात्केशनखादि-विचित्रकार्यनिष्पत्तिर्दर्शनात्; अतो विचित्रजगत्कार्यनिर्वाहे ब्रह्म न कारणान्तरापेक्षमिति शक्तिमतां सर्वं संभाव्यत एवेत्याह-

## देवादिवदपि लोके ॥२-१-२५॥

लोके स्वे स्वे स्थाने स्थिता ब्रह्मादयो देवाः आदिशब्दग्राह्याः कर्दमकश्यपाद्या ऋषयश्च तेषां शास्त्रावगतशक्तीनां यथा स्वापेक्षितवस्तुसर्गकर्तृत्वं तथा स्वलोके स्थितस्य शास्त्रावगतसामर्थ्यस्य नारायणस्य स्वेच्छया प्रकृतिपुरुषादिस्थावरजंगमान्तसकल-प्रपञ्चकर्तृत्वमवगम्यते

'स इमांल्लोकानसृजत्' (ऐ. १-२),

'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वेता.६-८),

'अखिलकारकशक्तिधरः' (भा. १०-८७-२८)

इत्यादिषु नारायणस्यासंख्यशक्तिमत्वं श्रूयते तस्य किमसाध्यम् ? ।

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२-१-२६॥

अत्रैकस्य ब्रह्मणो यो जगदाकारेण परिणामोऽभिहितः स किं एकस्य मृत्पिण्डस्य घटशरावादिपरिणामवद्वा सूक्ष्मचिदचिद्वस्तुशरीरिणोऽन्तर्यामिरूपस्य तस्य स्थूलभावापन्नचिदचिद्वस्तुभूतशरीररूपेणेति सन्देहः । पूर्वपक्षन्याये तु मृत्पिण्डस्य घटशरावादिपरिणामवत्तस्य जगदाकारेण परिणामो युज्यते । कथमिति चेत्तत्रोच्यते-

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा. ६-१-४) इति श्रुत्या प्रतिपाद्यते, विकारो नामधेयं च वाचारम्भणं अभिलापार्थक्रियारूपव्यवहारस्य निष्पादकं भवति मृद्द्रव्यस्यैव घटाद्यवस्था, घटादिनामधेयं च अर्थक्रियाभिलापरूपव्यवहारनिष्पत्तये भवतीति यावत् । वस्तुतो घटादिकमपि मृत्तिकेत्येव सत्यं प्रामाणिकं मृद्व्यतिरेकेण घटभावदर्शनात्; अथवा वाचारम्भणं विकारः घटो वाचारम्भणं घटोऽयमिति वाचारम्भविषयमात्रं मृद्द्रव्यमेव व्यवहारसिद्ध्यर्थं जायमानं अवस्थान्तरं नतु मृदो द्रव्यान्तरं किन्तु मृत्तिकेत्येव नामधेयं सत्यमस्ति, घटादिकं मृत्तिकेति कृत्वैव तत्र सर्वं मृत्पिण्डादिनामधेयं सत्यं सति प्रामाणिकेऽर्थे साधु सत्यं नतु द्रव्यान्तरमिति सत्यशब्दार्थेन कृत्वा यतो घटो मृदेवेति तदर्थः । अतो मृद्रूपात्कारणाद्यथा घटादिकार्यमनन्यदेव तथा मूर्तिमत्तः कारणात् ब्रह्मणश्चेतनाचेतनात्मकं जगदनन्यत् । दृष्टान्तान्तरं च क्षीरस्य दधिरूपेणेव ब्रह्मणो जगद्रूपेण परिणाम इति वाच्ये सति जगद्रूपेण परिणतस्य कृत्स्नस्यापि ब्रह्मणः कार्यभावप्रसक्तिः कार्यत्वप्रसंग इत्यर्थः । अस्मिन्पक्षे न कारणं ब्रह्मावशिष्टं भवेत् अथवा प्रपञ्चाकारेणेषत्परिणतात्तस्मादवशिष्टस्य मूर्तिमतः कारणस्य ब्रह्मण एवं परिणामे वाच्ये सति अविशिष्टस्य तस्य निरवयवत्वशब्दकोपो वा

'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेता. ३-१९),

'सदेव सौम्येदमग्र आसीत्' (छा.६-२-१),

'इदं वा अग्रे नैव किञ्चनासीत्' (तै.अष्ट-२-२-९),

'आत्मा वा इदमेवाग्र आसीत्' (ऐ. १-१) इत्यादीनां निराकारत्वबोधकानां शब्दानां कोपो वा बाधश्च भवेत् इति महाकलहे प्राप्ते सूत्रान्तरेण सूक्ष्मचिदचिद्वस्तुशरीरिणोऽन्तर्यामिशक्तिरूपस्य ब्रह्मणः स्थूलचेतनाचेतनभूतशरीररूपेण परिणामो युज्यते इति सिद्धान्तं ब्रूमः ।

## श्रुतेस्तु शब्दमूलत्वात् ॥२-१-२७॥

तुशब्दः पक्षान्तरव्यावर्त्तकः । सूक्ष्मचिदचिद्वस्तुशरीरिणो निमित्तकारणनारायणसंकुचितान्तर्यामिरूपस्य ब्रह्मणः स्वशरीरभूतेन विकसितान्तर्यामि-विशिष्टस्य स्थूलचिदचिद्वस्तुरूपप्रपञ्चाकारेण परिणामो युक्त एव; तच्छ्रुतेः

'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नं अन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमयः'

(तै.उ. आन. अनु. १-१) इति,

'सोऽकामयत बहु स्याम् (तै. आन. अनु. ६-२),

'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते (बृ. ३-४-७) इति,

'यस्यात्मा शरीरम्, यस्य प्रकृतिः शरीरम्,

'यस्य पृथिवी शरीरम्' (बृ.५-७-७) इत्यादिषु सूक्ष्मचिदचिद्वस्तुशरीरकस्य कारणस्य नारायणान्तर्यामिरूपस्य ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरभूतेन प्रपञ्चाकारेण परिणामश्रवणात् मृदो घटरूपेणेव तस्य परिणामे

'अजामेकां लोहितशुक्लकृष्णाम्' (श्वेता.४-५/तै.ना.उ. अनु.१०-५),

'अजो ह्येको जुषमाणोऽनुशेते' (श्वेता. ४-५),

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता. १-९),

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (कठ.२-२-१३),

'तमात्मस्थम्' (कठ.२-२-१३),

'न घटत उद्भवः प्रकृतिपुरुषयोरजयोः' (भा. १०-८७-३१),

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' (गीता. १३-१९)

इत्यादिश्रुतिस्मृत्युक्ताजत्वानादित्वादितत्त्वत्रयधर्मस्य विरोधापत्तेः विशिष्टपरिणाम एव समुचितः। एवं कृत्स्नप्रसक्त्यभावरूपं परिणामविवेकमुक्त्वा ब्रह्मणो निरवयवत्वशब्दकोपयोर्निवारणे हेतुमाह-शब्दमूलत्वात्

'स इमांल्लोकानसृजत' (ऐ. १-२),

'एको ह वै नारायण आसीत्' (महो. १-१),

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१),

'तमाहुरग्र्यं पुरुषं पुराणम्' (श्वेता. ३-१९),

'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' (कठ.१-३-११),

'चरणं पवित्रं विततं पुराणम्' (कृ.यजु.तै.काठक प्र.३ अनु. ३-४),

'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' (छा.१-६-६) इति,

'नमाम ते देव पदारविन्दं मार्गन्ति यत्ते मुखपद्मनीडैः' (भा. ३-५-३८,४०),

'स वै किलायं पुरुषः पुरातनो य एक आसीत्' (भा. १-१०-२१)

इत्यादिश्रुतिस्मृतिशब्दा एव मूलं प्रमाणं यस्य ब्रह्मनिरवयवत्वनिषेधस्य तस्य भावस्तत्त्वं तस्मात्

शब्दकोपो न भवति । उभयपक्षेऽप्ययमभिप्रायः- प्रपञ्चाद्व्यतिरिक्तस्य निमित्तभूतस्य दिव्यमनोहरमूर्तेर्नारायणस्य संकुचितान्तर्यामिशक्तिविशिष्टं यत् सूक्ष्मचेतनाचेतनवृंदं सूक्ष्मत्वाददृश्यमन्तर्यामिशक्तिविशिष्टत्वात्तच्छरीरभूतं च भवति; तस्य विकसितान्तर्यामिशक्तिविशिष्टस्थूलचिदचिद्वस्तुरूपेण परिणामे वाच्ये सति ब्रह्मणः कृत्स्नप्रसक्त्यभावः

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१)

इत्यादिश्रुतिसमानार्थवाचिकानाम्

'सदेव सौम्येदमग्र आसत्' (छा.६-२-१)

इत्यादिकारणवादिनीनां श्रुतीनां पुरुषाकारब्रह्मप्रतिपादकत्वात् कोपाभावश्च ।

ब्रह्मणोऽद्वितीयत्वोक्तिस्तु सूक्ष्मभावापन्नयोश्चेतनाचेतनयोरदर्शनपरा, अपाणिपादादिश्रुत्युक्तिरप्यप्राकृतदिव्यावयवत्वबोधनपरा प्राकृतावयवत्वनिषेधपरा च । एवं ब्रह्मणः कारणत्वं कार्यत्वं निःशङ्कतया बोध्यमिति । एवं भूतस्य परब्रह्मणो दृष्टान्तेन सर्वविलक्षणत्वमाह-

## आत्मनि चैवं विचित्राश्च हि ॥२-१-२८॥

यथा जीवात्मन्यचिद्धर्मविरोधिधर्मयोगोऽप्यचिद्विजातीयत्वादेव भवति; यथा च विचित्रा अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणशक्तयो दृश्यन्ते एव तथा सर्वविलक्षणं ब्रह्मापि शब्दैकप्रमाणकं विचित्रानन्तशक्तिकमप्राकृतदिव्यावयवकं च दृश्यते इति सर्वमविरुद्धम् ।

## स्वपक्षदोषाच्च ॥२-१-२९॥

कृत्स्नप्रसक्त्यादिदोषो निरवयवे अचित्सजातीये प्रधानादावेव वाच्यः न ब्रह्मणि शास्त्रप्रमाणके; अन्यथा स्वपक्षे ब्रह्मणो निर्विकारित्वादिधर्मपक्षे दोषात् बाधापत्तेः । कृत्स्नप्रसक्त्यादिदोषस्तु प्रधानादावेव निर्णीयते । सर्वशक्तिमत्वेन सर्वोपपत्तिमाह-

## सर्वोपिता च तद्दर्शनात् ॥२-१-३०॥

'परास्य शक्तिर्विविधैव श्रुयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वेता.६-८),

'मायां तुं प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वेता. ४ -१०)

इत्यादौ तस्य सर्वशक्तिमत्त्वदर्शनात् सर्वापि शक्तिरुपेता ब्रह्माश्रितेति विज्ञायते; अतः सर्वशक्तिमतस्तस्य किं न संभवति ?

## विकरणत्वान्नेति चेत्तदुक्तम् ॥२-१-३१॥

यद्यप्येकमेव ब्रह्म समस्तेतरविलक्षणं सर्वशक्तिमत् तथाहि
'न तस्य कार्यं करणं च विद्यते' (श्वेता. ६-८)
इति श्रुतौ विकरणत्वात्तस्य ब्रह्मणः करणरहित्वात् न कार्यारम्भः संभवतीति चेत् तदुक्तं तस्योत्तरं 'श्रुतेस्तु शब्दमूलत्वात् विचित्राश्च ही'त्यत्रोक्तम्। पुनराशङ्क्य समाधातुमधिकरणान्तमाह-

प्रयोजनवत्त्वाधिकरणम् ॥२-१-६॥

## न प्रयोजनवत्त्वात् ॥२-१-३२॥

यद्यपि शास्त्रावगतसर्वशक्तेर्मूर्तिमतो ब्रह्मणः सर्वेषु कार्येषु कारणसामर्थ्यमस्ति इति निर्णीतं तथापि सर्वप्रवृत्तेः प्रयोजनवत्त्वात् प्रयोजनसहितत्वादवाप्तसकलकामस्य नारायणस्य जगत्सृष्ट्यादिव्यापारः संभवति नवेति सन्देहः। कथं संदिह्यते तत्राह संभवतीति पक्षे
'आनन्दो ब्रह्म' (तै.उ.भृ.अनु. ६)
'अन्योऽन्तर आत्मानन्दमयः' (तै.उ.आन.अनु. ५),
'नित्यतृप्तो निराख्यातः' (नारा.उ.२) इत्यादिभिः निरतिशयानन्दस्वरुपो नित्यतृप्तो हि नारायणः श्रूयते। कथमसौ सृष्ट्यादिव्यापारेषु प्रयोजननिरपेक्षः प्रवर्तेत ? यदि सप्रयोजनास्य प्रवृत्तिः तदा तस्य नित्यतृप्तताहानिः स्यात्, अन्यथा जनादिवदनुचितकारिता स्यादतो न संभवतीति पूर्वपक्षे प्राप्ते ब्रूमः-

## लोकवत्तु लीलाकैवल्यम् ॥२-१-३३॥

लीलाकैवल्यं नित्यतृप्तस्य नारायणस्य दयालुत्वान्निष्प्रयोजनापि जगत्सृष्ट्यादिप्रवृत्तिः स्वप्रसन्नतार्थं सत्कर्मकर्तृणाम् ब्रह्मादिक्षेत्रज्ञानां चतुर्वर्गप्राप्तये लीलया लीलामात्रेणैव केवलं संभवति तत्र निदर्शनं लोकवत्; यथा लोके निःस्पृहप्रियव्रतादेः सामंतस्य राज्ञः प्रयोजनमन्तरेणापि स्वसेवकसुखार्थं केवललीलया कन्दुकताडनादिषु प्रवृत्तिः तथा नारायणस्यावाप्त-सकलकामस्यापि लीलया सृष्ट्यादिप्रवृत्तेरविरोधः।

नन्वेवं लीलार्थमपि जगत्सर्गे सति तत्स्थजीवदुःसहक्लेशगगर्भत्वेन निर्दयत्वप्रसक्तेः परमदयालोर्नारायणस्य जगत्सर्गो न संभवतीति चेत्तत्राह-

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥२-१-३४॥

नारायणकृतायां सृष्टौ क्षेत्रज्ञानां कमनीयाकमनीयदेहभोगस्थानादिप्रदाने वैषम्यं न्यूनाधिकत्वं जीवदुःखप्रदप्रपञ्चकृतौ नैर्घृण्यं निर्दयत्वं च तस्य ते उभे न स्तः, कुतः, विषयसृष्टौ

जीवपुण्यपापरूपकर्मणां सापेक्षत्वात् जीवानां प्राचीनकर्मालोच्य हरिः तत्तत्कर्मणानुगुणं न्यूनाधिकं जगत्सर्गं करोति । एवं तत्तत्कर्मैव वैषम्यादिहेतुरित्यर्थः ।
तथाहि दर्शयति श्रुतिः

'साधुकारी साधुर्भवति पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्मणा भवति' (बृ. ६-४-५) इति ।

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥२-१-३५॥

'सदेव सौम्येदमग्र आसीत्'(छा.६-२-१), 'एकमेवाद्वितीयम्'(छा.६-२-१) इत्यादिश्रुत्युक्ते सृष्टेः पूर्वकाले अवधारणार्थैवशब्दावगतादविभागात् क्षेत्रज्ञाविभागश्रवणात् क्षेत्रज्ञास्तत्तत्कर्माणि च न भवेयुरिति चेन्न कुतः, क्षेत्रज्ञानां तत्तकर्मप्रवाहाणां चानादित्वादनादिकालसिद्धत्वात् उपपद्यते च अतिसूक्ष्मभावापन्नेषु नित्यत्वाजत्वादिधर्मविशिष्टेषु क्षेत्रज्ञेषु परस्परसूक्ष्मविभागश्च विद्यते एवेत्यर्थः । तर्हि कथमविभागोक्तिस्तत्राह -तदानीं नामरूपविभागाभावाच्छ्रुतावविभाग उक्तः, इतरथा प्रलयानन्तरसृष्टिकाले त्वकृतानां शुभाशुभकर्मणामभ्यागमस्य प्रलयात्पूर्वसृष्टिकाले कृतानां तेषां विप्रनाशस्य च प्राप्तिः स्यात्, अतः श्रुतिस्मृतिषु क्षेत्रज्ञानामनादित्वं नित्याजादिविशेषणविशिष्टत्वं च उपलभ्यते ।
चोऽवधारणे । तथाहि

'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' (बृ. ३-४-७),
' न जायते म्रियते वा विपश्चित्' (कठ-१-२-१८),
'ज्ञाज्ञौ द्वावजावीशानीशौ'(श्वेता.१-९),
'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (तै.महा. १-३८ (४६),
'नित्यो नित्यानाम्' (कठ.२-२-१३),
'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः' (गीता.२-२०),
'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' (गीता. १३-१९)

इत्यादिषु दृश्यते क्षेत्रज्ञानामनादित्वाजत्वप्रभृति धर्मकलापस्तस्मात्पूर्वोक्तेऽप्यविभागे विभागो निर्णीत एव ।

## सर्वधर्मोपपत्तेश्च ॥२-१-३६॥

किं बहुना, प्रधानपरमाणुकर्मकालादीनां ये कारणत्वोपपादका धर्मास्तेष्वनुपपन्नास्ते सर्वे सर्वप्रकाशके सर्वैश्वर्यसंपन्ने दिव्याकारे परब्रह्मण्येवोपपद्यन्ते,

अतः सर्वशक्तिमत्सकलेतरविसजातीयत्वेनाचिन्त्यशक्तिमत्परं ब्रह्मैव जगत्सृष्ट्यादिकारणं श्रुतिशतवचनैः सिद्धम् ।

इति

श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने द्वितीयाध्यायस्य प्रथमपादः ॥१॥



## द्वितीयाध्याये द्वितीयपादः ।

### रचनानुपपत्त्यधिकरणम् ॥२-२-१॥

### रचनानुपपत्तेश्च नानुमानम् प्रवृत्तेश्च ॥२-२-१॥

आद्यपादे सांख्यप्रभृतितर्कविरोधं संदिह्य स्वसिद्धान्तप्रतिपादनं कृतम्; पुनरस्मिन् द्वितीये पादे वैदिकतर्कावलम्बनेन सांख्यप्रभृतिपक्षान्तरेषु दूषणं ददाति। तत्र तावत् सांख्यशास्त्रनिष्ठानां प्रधानकारणवाद उचितो नवेति संशयः। संशयबीजं सर्वत्र प्रसिद्धमूहनीयम्। प्रधानकारणवाद एवोचित इति पूर्वपक्षी मन्यते। प्रधानं हि रजःसत्वतमोरूपं तदेव जगतः कारणं भवितुमर्हति, सर्वत्र तत्कार्येषु सुखदुःखमोहान्वयदर्शनात्। तथाहि तत्कार्यभूताः पटादयोऽप्युपलब्धाः प्रावरणादिप्रयोजनतया नरस्य सुखप्रदा भवन्ति त एवेतरजनापहृता दुःखप्रदा भवन्ति स्वप्रयोजनसंपादकत्वाभावात्; ते वाञ्छिता अनुपलब्धाश्च सन्तो मोहप्रदा भवन्ति तदैवं सुखाद्यन्वयात् त्रिगुणमेव प्रधानं जगत्कारणमिति प्राप्ते सिद्धान्तं ब्रूमः:- न प्रधानं जगत्कारणमचेतनत्वात् । तथाहि दार्वादेरचेतनस्य रथप्रासादिनिर्माणज्ञानशून्यस्य रथप्रासादादिरचनानुपपर्त्तिर्दृश्यते; तद्रचनाप्रकारज्ञानाश्रितस्य जनस्य रथादिरचनाप्रवृत्तिर्दृश्यते, अतश्चेतनानधिष्ठितं प्रधानं जगत्कारणं भवितुं नार्हति। ततो न प्रधानकारणवादो युक्तः। सूत्रार्थविवेचनम्-अनुमीयते इत्यनुमानं प्रधानं जगत्कारणं न, कुतः,

जगद्रचनाज्ञानशून्यस्याचेतनस्य तस्य रचनानुपपत्तेः-प्रपञ्चविचित्ररचनाया अनुपपत्तेः, जगद्रचनाज्ञानकुशलस्य परमचेतनस्य नारायणस्य विचित्रजगद्रचनाप्रवृर्तिर्दृश्यते, अतो नारायण एव जगत्कारणं न प्रधानमिति। पुनः सन्दिह्य परिहारं करोति-

### पयोऽम्बुवच्चेत्तत्रापि ॥२-२-२॥

यथा पयो दध्यादिभावे यथाम्बु च हिमशकलनालिकेररसादिविचित्रभावे चेतनाश्रयानपेक्षं तद्वत्प्रधानमपीति चेत्तत्रापि तस्मिन् संदेहेऽप्युत्तरमेवमाम्नायते,

'योऽप्सु तिष्ठन्नद्भ्योऽन्तरः' (बृ. ५-७-८)

इत्यादिश्रुतेः चेतनेन परब्रह्मणान्तर्यामिणाधिष्ठितयोः पयोऽम्बुनोः स्वस्वकार्ये प्रवृत्तिरनुमीयते नतु तद्व्यतिरेकेण केवलं तयोस्तत्र प्रवृत्तिसामर्थ्यम्; अतश्चेतनानधिष्ठिते प्रधाने जगत्कारणवादोऽनुपपन्नः। किञ्च-

### व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥२-२-३॥

यद्यचेतनस्य कार्यरचनाप्रवृत्तौ सर्वज्ञचेतनाधिष्ठानानपेक्षत्वं तर्हि तस्य कार्याकार्यकर्म-

समयज्ञानशून्यत्वात् सर्वदा प्राप्तसृष्टिप्रसंगेन तद्व्यतिरेकस्य प्रलयस्यानवस्थितिः प्रसज्येत ततो नाचेतनं जगत्कारणम्।

## अन्यत्राभावाच्च न तृणादिवत् ॥२-२-४॥

क्षीरायमाणधेनूपयुक्ततृणादिवदचेतनमपि प्रधानं कारणमिति वक्तुं न युक्तम्; अन्यत्र बलीवर्दाद्युपभुक्ते केनाप्यभुक्ते च तृणादौ क्षीररूपपरिणामाभावात् तत् क्षीरत्वमपि धेनुरूपचेतनाश्रितमेव।

## पुरुषाश्मवदिति चेत्तथापि ॥२-२-५॥

अत्र नेत्यनुवर्तते। अचेतनमपि प्रधानं पुरुषः जगत्सर्गे स्वसन्निधानात्प्रवर्तयति; यथा पङ्गुरंधं यथा वाऽयस्कान्तमणिरयस्तथेति संबन्धः। ततो न सर्वज्ञापेक्षेति चेत्तथापि न प्रधानस्य जगद्रचनाप्रवृत्तिः संभवति; सांख्यपक्षे पुरुषस्याविकृतत्वात्; अन्धस्य मार्गे प्रवृत्तिहेतुभूतोपदेशात् पङ्गोः अयःसन्निहितदेशान्तरसंयोगाच्चाश्मनोऽपि कश्चिद्विकारो भवत्येव तस्मादविकृत-पुरुषसंनिधिः क्लीबप्रसंगः स्त्रीसंतानोत्पत्तौ यथा तथा प्रजननप्रवृत्तौ न हेतुः, अथवाऽयस्कान्तलोहयोरचेतनयोः पङ्ग्वन्धयोश्चेतनयोश्चोभयेषां ताभ्यां चेतनाभ्यां सह दृष्टान्तत्वासंभवात् प्रधानकारणवादो न घटते।

## अङ्गित्वानुपपत्तेश्च ॥२-२-६॥

त्रिगुणानामुत्कर्षापकर्षभावोऽङ्गाङ्गिभावस्ततः प्रतिसर्गावस्थायां प्रपञ्चप्रवृत्तिः सांख्यैरुच्यते। तत्र साम्यावस्थापन्नानां त्रिगुणानां वैषम्याभावादचेतनप्रधानात्मक-साम्यावस्थाकृताङ्गाङ्गिभावानुपपत्तिः, अतश्च जगदारम्भो न युज्यते प्रधानकारणवादे।

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥२-२-७॥

उक्तप्रकारादन्यप्रकारेण प्रधाने कारणतया अनुमीयमानेऽपि ज्ञातृत्वशक्तिवियोगात् रचनानुपपत्तिस्तदवस्थैव।

## अभ्युपगमेऽप्यर्थाभावात् ॥२-२-८॥

प्रधानस्याभ्युपगमे अनुमानेन कारणत्वाङ्गीकारेऽपि तेन सहार्थाभावात्; यतो निरीश्वरसांख्यपक्षे उदासिनः पुरुषस्य निर्विकारत्वात् प्रधानदर्शनादिरूपविकारासंभवः॥ अत एव मुक्तस्य तस्य प्रकृतिधर्माध्यासनिमित्तो भोगः पुंप्रकृत्योर्विवेकानुसंधानकृतं कैवल्यं च; एतद्रूपयोरर्थयोः प्रयोजनयोरभावात्प्रधानं न स्वीकार्यम्।

## विप्रतिषेधाच्चासमञ्जसम् ॥२-२-९॥

विप्रतिषेधाच्च पुरुषस्य प्रकृतिसम्बन्धेन द्रष्टृत्वभोक्तृत्वकर्तृत्वादिकमस्ति; वस्तुतस्तु तस्य द्रष्टृत्वभोक्तृत्वादि नास्ति; जीवो हि निर्विकारोऽकर्त्ता निर्बन्धः कैवल्यः स एव परमात्मा पञ्चविंशकः प्रकृतिश्च जगत्कर्त्री ताभ्यां च परं किमपि नास्तीत्यादिकं सांख्या वदन्ति; तस्य वेदे निषेधादप्यसमंजसमेव कापिलं मतम्; एवं प्रधानकारणवादो निःप्रमाणक इति निरूपितम्; अतः परं परमाणुकारणवादनिरसनायाधिकरणमारभ्यते

महद्दीर्घाधिकरणम् ॥२-२-२॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥२-२-१०॥

अत्र वैशेषिकमतसिद्धः परमाणुकारणवादोयुक्तो नवेति सन्देहः। प्रधानकारणमते अधिष्ठात् नारायणानङ्गीकारात्तत्कारणवादे विरुद्धेऽपि परमाणुकारणवादो युज्यते। तथाहि प्रलीने जगति नारायणस्य सिसृक्षायां सत्यां प्राणिनां कर्मवशान्निश्चलेषु परमाणुषु आद्यं कर्मोत्पद्यते; तस्मात्कर्मण एकः परमाणुः परमाणवन्तरेण संयुज्यते; तस्माच्च संयोगाद्द्व्यणुकमारभ्यते; तेभ्यस्त्रिभ्यो द्व्यणुकेभ्यस्त्र्यणुकमित्यादिक्रमेण सर्वं जगदुत्पद्यते; अतो न परमाणुकारणवादे विरोध इति पूर्वपक्षे सिद्धान्त उच्यते-

ह्रस्वपरिमण्डलाभ्यां महत्त्वदीर्घत्वयुक्तत्र्यणुकाणुत्वह्रस्वत्वयुक्तद्व्यणुकोत्पत्तिरुच्यते कणादमते; कथमेतत्संभवति ? तथाहि परमाणवः पारिमाण्डल्यपरिमाणयुक्ताः नत्वणुपरिमाणयुक्ताः। द्वाभ्यां परमाणुभ्यां अणुपरिमाणरहिताभ्यां अणुपरिमाणोपेतं ह्रस्वपरिमाणोपेतं च द्व्युणुकमुत्पद्यत इत्यभ्युपगम्यते; तथा ह्रस्वपरिमाणोपेतत्वाद्दीर्घपरिमाणरहितं द्व्युणुकमस्ति; तादृश्येभ्यस्त्रिभ्यो द्व्युणुकेभ्यो दीर्घपरिमाणोपेतमणुपरिमाणरहितं त्र्यणुकमुत्पद्यत इत्यभ्युपगम्यते। इदं सर्वमसमंजसमेव। 'कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये स्वसमानजातीयगुणान्तरानारभन्त' इति तदभिमतन्यायेन पारिमाण्डल्याणुत्वादिकारणगुण-गणप्रकरणेन सह महत्त्वदीर्घत्वादिकार्यगुणगणानां विरोधात्; तथा तन्मते दोषान्तरमपि यथा त्र्यणुकादयो ह्यवयवाः स्वीयैः षड्भिः पार्श्वैः सह संयुज्यातिमहतश्चतुरणुकादीनवयविन उत्पादयन्ति तथैव परमाणूनामप्युत्पादकत्वं स्वीकार्यम्; एवं च सति तेऽपि सावयवाः स्वीयैः षड्भिः पार्श्वैः संयुज्यैव द्व्यणुकादीनुत्पादयेयुः परमाणूनामवयवभेदाभावाङ्गीकारे यथैकस्य परमाणोः पारिमाण्डल्यपरिमाणत्वं तथा सहस्रपरमाणुसंयोगेऽपि स्वाभिमतन्यायानुरोधात् तत्तुल्यपरिमाणत्वम्। एवं च सति अणुत्वह्रस्वत्वमहत्वदीर्घत्वादीनां कार्यगुणानामसिद्धिः स्यात्; पुनस्तत्सिद्धये तेषामवयवभेदाङ्गीकारे तेऽपि सावयवाः स्वीयैः षड्भिः षड्भिः पार्श्वैः सह संयुज्य महान्तं महान्तमवयविनमुत्पादयेयुरिति पूर्वपूर्वत्रावयवभेदाङ्गीकारे कुत्रापि महान्तं

महान्तमवयविनमुत्पादयेयुः, ते चाऽपि सावयवाः सन्तः स्वीयैः स्वीयैः षड्भिः पार्श्वैः संयुज्य कारणानवस्थितिः स्यात्; अतः परमाणुकारणवादो न युक्तः ।

इदानीं सूत्रार्थो विविच्यते -महद्दीर्घवत् वा ह्रस्व-परिमण्डलाभ्यामसमंजसमित्यनुवर्तते । चकारार्थबोधको वाशब्दः । ह्रस्वपरिमंडलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत्- महद्दीर्घह्रस्वाणुवत् महत्वदीर्घत्वह्रस्वत्वाणुत्वादिगुणोपेतत्र्यणुकद्व्यणुकोत्पत्तिवत् । अन्यच्च तदभ्युपगतं सर्वमसमंजसम् । द्व्यणुकादिक्रमेण जगदारम्भकत्वमसमीचीनं कारणानवस्थितेरिति पुनरनुपपत्तिमाह-

## उभयथापि न कर्मातस्तदभावः ॥२-२-११॥

परमाणुकारणवादे हि परमाणुकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते। तत्र तस्य कर्मणः किञ्चिन्निमित्तं मन्यते नवा ? प्रथमपक्षे कर्मनिमित्ततया प्रसिद्धं क्षेत्रज्ञप्रयासादिकं स्वीकार्यम्; नहि तत्संभवति, तस्य सृष्ट्युत्तरकालभावित्वात्; द्वितीयपक्षे कर्मानुद्भवः । एवं उभयथापि न कर्म संभवति; अतः कर्मासंभवात् तदभावः उक्तक्रमेण जगदुत्पत्त्यभावः । यद्वा निखिलजगदुत्पत्तिकारणभूतपरमाणुगतमाद्यं कर्मादृष्टकारितमित्यभ्युगम्यते; अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमित्यादीन्यदृष्टकारितानीति तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितमागतादृष्टकारितं वा ? उभयथापि न संभवति, क्षेत्रज्ञपुण्यपापानुसंधानजनितस्यादृष्टस्य परमाणुगतत्वासम्भवात् तस्य परमाणुगतत्वसम्भवे च सदोत्पादकत्वप्रसंगात् । नन्वदृष्टं हि विपाकापेक्षम्; विपाको ह्यदृष्टगतः कश्चिद्धर्मो नास्ति । किन्तु कर्मविधिना कालविशेषनियतफलदातृत्वं यस्य कर्मण उदितं तस्य तत्कालागमनमेव विपाकः, अनियतकालविशेषाणां कर्मणां प्रबलकर्मान्तरप्रतिबंधाभावो वा विपाकः । अदृष्टानि तत्तत्कर्मानुगुणफलदानस्वभावरूपाणि; अतोऽदृष्टस्य विपाकापेक्षत्वान्न सर्वदोत्पादकत्वप्रसंग इति चेन्नैतदुचित्तम्; असंख्यैरात्मभिरसंकेतपूर्वकं विविधकालफलदायित्वेनानुष्ठिता- नेकनानाकर्मजनितानामदृष्टनामेकदैकरूपविपाकस्य प्रामाणिकत्वाभावत्; अतोऽदृष्टमेकदा सृष्टिनिमित्तकमेकदा प्रलयनिमित्तकं च न संभवति; अतस्तदभावः उभयथापि कर्मासंभवात् तयोः सृष्टिप्रलयोरभावः, अतः परमाणुकारणवादो न युक्तः । इयं चात्रानुपपत्तिरित्याह-

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥२-२-१२॥

काणादमते समवायाभ्युपगमात् समवायः परमाणुद्व्यणुकयोराधाराधेयभावोपपादकतया तयोरपृथक्सिद्धस्थितित्वहेतुः यः परस्परसंबन्धः तस्याभ्युपगमादङ्गीकारात् असमंजसमेतन्मतम्; कुतः, साम्यादनवस्थितेः । यथा आधेयतासिद्धये आश्रयभिन्नत्वेनाङ्गीकृतानाम- वयविजातिगुणानामाधारभूतेष्ववयवव्यक्तिगुणिषु ततोऽपृथक्सिद्धतयावस्थाने समवायापेक्षा

तथैव समवायस्यापि समवायिषु ततोऽपृथक्सिद्धतयाऽवस्थाने समवायान्तरापेक्षा आश्रयभिन्नत्वसाम्यात्;

एवं द्वितीयसमवायस्यापि तत्साम्यात्समवायिषु ततोऽपृथक्सिद्धतयाऽवस्थाने समवायान्तरापेक्षा तथैव तृतीयसमवायस्यापि तत्साम्यात्समवायिषु ततोऽपृथक्सिद्धतयाऽवस्थाने समवायान्तरापेक्षास्या दित्येवमनन्तसमवायपरंपरा प्रसज्यते इत्यनवस्थितेरित्यर्थः। एवमवस्थायां प्रसज्यमानायामेकासिद्धौ सर्वासिद्धेः द्वाभ्यां परमाणुभ्यां द्व्यणुकं नैवोत्पद्येत तदुत्पत्त्यभावे च द्व्यणुकाद्युत्पत्तिक्रमेण जगत्सृष्टिं वक्तुं न शक्येतेति भावः।

## नित्यमेव च भावात् ॥२-२-१३॥

परमाणूनां प्रवृत्तिस्वभाववत्त्वाङ्गीकारे तेषु प्रवृत्तेर्नित्यमेव भावात् प्रलयाभावप्रसक्तिः तेषां निवृत्तिस्वभाववत्त्वाङ्गीकारे तेषु निर्वृत्तेर्नित्यमेव भावात् सर्गाभावप्रसक्तिश्च; अतो हेतोः समवायसंबन्धस्य नित्यत्वमङ्गीक्रियते चेत्तत्र संबंधिनित्यत्वमन्तरेण तदनुपपत्तेश्च एतत्काणादमतमसमंजसमेव।

## रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥२-२-१४॥

परमाणूनामत्र काणादमते रूपादिमत्त्वमङ्गीकृतं तस्मात्तत्रोक्तानां तेषु नित्यत्वाणुत्व-निरवयवत्वादीनां विपर्ययः -अनित्यत्वं स्थूलत्वं ( सावयवत्वं ) च स्यात्; कुतः, लोके रूपादिमत्सु घटादिषु तथा दर्शनात्; अतोऽप्यसमञ्जसमेतत्। ननूक्तदोषपरिजिहीर्षया परमाणूनां रूपादिमत्त्वं नाङ्गीक्रियते चेत्तत्राह-

## उभयथा च दोषात् ॥२-२-१५॥

अनित्यत्वादिपरिहाराय परमाणूनां रूपादिशून्यत्वाङ्गीकारे रूपादेः कार्यगुणस्य कारणगुणपूर्वकत्वासिद्धिः, तत्सिद्धये पुनरपि रूपादिमत्त्वाङ्गीकारे त्वनित्यत्वाद्य-नर्थापत्तिरित्युभयथापि दोषादेवंप्रकारेणापि कणादमतमसमञ्जसमेव।

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥२-२-१६॥

सांख्यपक्षस्य श्रुतिन्यायविरुद्धस्यापि सत्कार्यवादादौ क्वचिदंशे वैदिकैः परिग्रहः कृतोऽस्ति कणादपक्षस्य तु केनाप्यंशेनापरिग्रहादत्यन्तमनपेक्षैव निःश्रेयसार्थिभिः कार्या।

समुदायाधिकरणम् ॥२-२-३॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥२-२-१७॥

एवं वैदिकैकदेशिनां मतं निराकृतम्; इदानीं वेदबाह्यानां मतं निरस्यते-प्रथममिह

बौद्धसिद्धान्तसिद्धो वादश्चतुर्विधः- वैभाषिकसौत्रान्तिकविज्ञानवादिसर्वशून्यवादिसंज्ञ-चतुर्विधबुद्धमुनिशिष्यमतवैचित्र्यात्। तत्र वैभाषिकसौत्रान्तिकयोर्ज्ञानं तद्व्यतिरिक्तपदार्थाश्च सर्वे क्षणकारणिकाः सत्याः सन्ति; तयोः परस्परमियान् भेदः वैभाषिकस्य घटादिपदार्थाः प्रत्यक्षाः, सौत्रान्तिकस्य तु ज्ञाने घटाद्याकारे उत्पन्ने तेनाकारेण प्रत्यक्षेणाप्रत्यक्षाः घटादयोऽनुमीयन्ते इति; ते च सर्वे पूर्णवैनाशिकाः। तत्रादौ वैभाषिकसौत्रान्तिकयोर्बाह्यार्थास्तित्वाऽविशेषात्तयोर्मतमेकीकृत्याह-तयोः स वादो युक्तो नवेति सन्देहः। युक्त इति पूर्वः पक्षः। तथा ह्यामनन्ति द्विविधबौद्धाः- द्वौ समुदायौ बाह्याभ्यन्तराविति बाह्यः पृथिव्यादिः आन्तरश्चित्तचैत्यात्मकश्च। समुदायद्वयमेव सर्वं जगत्। तथाहि बाह्यसमुदायस्य परमाणवः कारणम्; ते च चतुर्विधाः पार्थिवाप्यतैजसवायवीयाः। तेभ्यो युगपत्पुंजीभूतेभ्यः समुदायो बाह्यो जायते। आन्तरस्य समुदायस्य स्कन्धपञ्चककारणम्; रूपवेदनाविज्ञानसंज्ञासंस्काररूपाः पञ्च स्कन्धाः। चित्तेन रूप्यमाणाः सेंद्रियाः शब्दस्पर्शरूपादयो रूपस्कन्धाः। तदभिव्यक्तिर्विज्ञानस्कन्धः। तज्जन्यदुःखं वेदनास्कन्धः। देवदत्तदिनाम संज्ञास्कन्धः। तेषां वासना संस्कारस्कन्धः। तेभ्यः पुञ्जीभूतेभ्य आन्तरः समुदायो जायते; अतःसमुदायकारणवादे को विरोध इत्येवं प्राप्ते निरूप्यते- न युक्तः समुदायकारणवाद इति। ते हि क्षणिकत्ववादिनो बौद्धाः, कथमेतेषां समुदायः संभवति ? कारणानां क्षणिकत्वेन तदानीमेव नष्टत्वात् कार्योत्पादनासमर्थत्वात्। इदानीं सूत्रार्थविवेचनं विधीयते-उभयहेतुकेऽपि समुदाये तदप्राप्तिः - समुदायाप्राप्तिः। परमाणुहेतुकः पृथिव्यादिसमुदायः स्कन्धहेतुकः इन्द्रियसमुदायश्चेत्युभयहेतुकोऽपि समुदायः। स्थिरस्य समुदायकर्तुश्चेतनस्य तन्मतानभ्युपगमेन अचेतनानां परमाणूनां स्कन्धानां च स्वतः समुदायासंभवात् क्षणिकत्वाभ्युपगमाच्च न सिद्ध्यतीत्यर्थः।

### इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥२-२-१८॥

कार्यं प्रत्ययते जनकत्वेन प्राप्नोतीति व्युत्पत्त्या प्रत्ययशब्दः कारणवाची। ननु समुदायकर्तुश्चेतनस्याभावेऽपि क्षणिकत्वादस्थिरेषु स्थिरत्वबुद्धिरूपाया अविद्याया रागादीनां चेतरेतरकारणत्वात् संघातभावादिकमुपपन्ननमिति चेन्नैतदुचितम्; अविद्यायाः संघातभावं प्रत्यनिमित्तत्त्वात्। शुक्तिकादिषु या रजतादिबुद्धिरूपा अविद्या सा शुक्तिकादिवस्तुतो रजतादिकार्यं न करोति; विदुषस्तदानीमेव तत्र रजतादिबुद्धेर्नष्टत्वात् तन्निमित्तरागादयोऽपि न संभवन्ति; तस्मादयुक्तः समुदायकारणवादः। युक्त्यन्तरमाह-

### उत्तरोत्पादे च पूर्वनिरोधात् ॥२-२-१९॥

अत्र क्षणिकत्वपक्षे च जगदुत्पत्तिर्नोपपद्यते; उत्तरक्षणोत्पत्तिवेलायां पूर्वक्षणस्य विनष्टत्वात्

तस्योत्तरं क्षणं प्रति हेतुत्वानुपपत्तेः। अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत। सूत्रार्थो वर्ण्यते- उत्तरोत्पादे-उत्तरघटादिक्षणोत्पत्तौ पूर्वनिरोधात् - पूर्वस्य घटादिवस्तुक्षणस्य नष्टत्त्वात्तस्योत्तरं घटक्षणं प्रति कारणत्वासंभवे सति पूर्वघटादिक्षणाभावस्यैवोत्पादकत्वेऽविशेषात् सर्वदा सर्वेषामप्युत्पत्तिः स्यात्।

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२-२-२०॥

असति हेतौ ततः कार्योत्पत्त्यङ्गीकारेऽपि विषयाणां पूर्वज्ञानमिन्द्रियं च वीक्षणादितद्व्यापारश्च विषयाश्चेत्येतेषां चतुर्णां कार्यभूतनीलादिज्ञानहेतुत्वप्रतिज्ञा भवति, तस्याः विरोधः स्यात्; अन्यथा तस्य पूर्वघटलक्षणस्यापि स्थित्यभ्युपगमे सति युगपत् घटक्षणद्वयोपलब्धिप्रसक्तिः, तस्य स्थिताविन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्यते; तथा सति क्षणिकत्वप्रतिज्ञानाशः। एवंतावदसत उत्पत्तिर्निरस्ता। सतो निरन्वयो विनाशोऽपि नोपलभ्यते इति वक्ति।

## प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥२-२-२१॥

प्रतिसख्याप्रतिसंख्यानिरोधः विद्यमानं घटं भिनद्मीत्येवंरूपा प्रतिकूला संख्या बुद्धिः प्रतिसंख्या, तत्पूर्वको निरोधो मुद्गराद्यभिघातजन्यः स्थूलनाशः प्रतिसंख्यानिरोधः अतत्पूर्वकः प्रतिक्षणसूक्ष्मनाशोऽप्रतिसंख्यानिरोधस्तयोः स्थूलसूक्ष्मनिरन्वयविनाशयोः अप्राप्तिरित्यर्थः अविच्छेदात् सतो द्रव्यस्यान्वयविच्छेदासंभवादिति सूत्रार्थः। अत्रायमभिप्रायः निरोधो घटादेर्निरन्वयविनाशः सः स्थूलः सूक्ष्मश्च न संभवति; कपालादिभावरूपावस्थाप्राप्तेरेव विनाशशब्दवाच्यत्वात् सतो द्रव्यस्यान्वयाविच्छेदात् तस्य पिण्डत्वादिरूपा अवस्थाविशेषाः नतु नाशशब्दवाच्याः, ततो न क्षणिकत्वसिद्धिः॥

## उभयथा च दोषात् ॥२-२-२२॥

उभयथा च उत्पन्नस्य तुच्छतापत्तिस्तुच्छादुत्पत्तिश्चेत्युभयप्रकारेणाभावेनोत्पत्त्यसंभवात् अभावात्मककार्योत्पत्तिरूपाद्दोषादसमंजसमिदं दर्शनम्। भावानां बुद्धिपूर्वकनाशाबुद्धिपूर्वकनाशौ आकाशं चेति त्रयमप्यवस्तुसन्निरूपाख्यं निर्हेतुकं तुच्छसंज्ञं चेति वैनाशिका ब्रुवन्ति। तत्र बुद्धिपूर्वकनाशाबुद्धिपूर्वकनाशौ निराकृतौ; इदानीमाकाशस्यावस्त्वादिकं निराक्रियते।

## आकाशे चाविशेषात् ॥२-२-२३॥

आकाशे च नत्ववस्तुत्वादिकमुपपद्यते;

**'आत्मन आकाशः संभूतः'** (तै. उ. आन. अनु. १)

**इतिश्रुत्या शब्दगुणकत्वेन श्यामत्वेन चाकाशेऽपि भूम्यादिवद्वस्तुत्वादिप्रतिपत्तेरविशेषात्। अथात्मनः क्षणिकत्वं निषेधति-**

## अनुस्मृतेश्च ॥२-२-२४॥

**अनुस्मृतिरनुस्मरणं पूर्वानुभूतवस्तुविषयज्ञानमित्यर्थः। ततो हेतोः पूर्वानुभूतं यद्वस्तु तदेवेदमित्यैकार्थ्येनानुस्मर्तुरात्मनो न क्षणिकत्वसिद्धिः, आत्मान्तरानुभूते पदार्थे इतरात्मनः स्मरणायोगाच्चेत्यभिप्रायः बाह्यार्थास्तित्ववादिषु वैभाषिकसौत्रान्तिकेषु गोघटादीनां प्रत्यक्षत्वादिनो वैभाषिका बौद्धा निरस्ताः। ज्ञानानुमेयत्ववादिनः सौत्रान्तिका निरस्यन्ते-**

## नासतोऽदृष्टत्वात् ॥२-२-२५॥

**इह बौद्धैकदेशिनां ज्ञानानुमेयत्ववादो युक्तो नवेति संशये पूर्वः पक्षः -ज्ञाने घटादीनां नीलपीतादिविचित्राकारं समर्प्य विनिष्टमर्थं ज्ञानाकारवैचित्र्येणानुमिनोति ज्ञाता, अतो ज्ञानवैचित्र्येण बाह्यार्थवैचित्र्यमनुमीयते इति प्राप्ते सिद्धान्तः- एतन्न संभवति; अर्थस्य क्षणिकत्वात् असतो विनष्टस्य नीलत्वपीतत्वादिधर्मिणो धर्मसंक्रमणस्यान्यत्रादृष्टत्वात्।**

## उदासीनानामपि चैवं सिद्धिः ॥२-२-२६॥

**एवं सर्वभावानां क्षणिकत्वाभ्युपगमादन्य एवानुष्ठाता अन्य एव फलस्वामी। अत उदासीनानामन्नादिसंपादने निष्प्रयत्नानामपि सर्वार्थसिद्धः स्यादिति दूषणं वैभाषिकसौत्रान्तिकयोर्द्वयोरपि समानं तस्मादसमंजसेन बाह्यार्थास्तित्ववादिनोर्वैभाषिक-सौत्रान्तिकयोर्मतेन वैदिकसमन्वयस्य न बाध इति सिद्धम्।**

### अभावाधिकरणम् ॥२-२-४॥

## नाभाव उपलब्धेः ॥२-२-२७॥

**इह बौद्धानां विज्ञानवादिनां केवलविज्ञानवादो युक्तो नवेति संशये युक्त इति पूर्वः पक्षः। तथाहि साकारं विज्ञानमेव तत्त्वमान्तरं न बाह्याः पदार्थाः। स्वप्ने बाह्यपदार्थाननपेक्ष्य केवल्या बुद्ध्या व्यवहारदर्शनात् तद्वज्जाग्रद्व्यवहारस्यापि व्यवस्था युज्यते; ततो विज्ञानमात्रं तत्त्वमित्येवं प्राप्ते अभिधीयते-घटं जानामीति कर्त्तुः कर्मतया अर्थस्योपलब्धेर्घटादिबाह्यपदार्थाभावो न शक्यते वक्तुम्। पुरुषस्यार्थविशेषाणां नामरूपादिपृथक्पृथग्व्यवहारानुगुण्यवेदनमेव हि ज्ञानस्याकारः नतु घटपटादिवत्साकारत्वम्। यदुक्तं स्वप्नदृष्टान्तेन जाग्रद्व्यवहारस्यापि शून्यत्वं तत्राह-**

## वैधर्म्याच्च न स्वप्नादिवत् ॥२-२-२८॥

स्वाप्नज्ञानस्य जाग्रद्दृष्टपदार्थस्मृतिमात्रालंबनेन जाग्रज्ज्ञानस्य सत्यपदार्थालम्बनेन च परस्परं वैधर्म्याद्वैषम्याच्च न स्वप्नादिवज्जागरितज्ञानस्य निरालंबनत्वम्। किञ्च बाह्यपदार्थाभावे तज्ज्ञानमेव न स्यात् अतो न विज्ञानमात्रं तत्त्वम्।

## न भावोऽनुपलब्धेः ॥२-२-२९॥

अर्थशून्यस्य ज्ञानस्य सद्भावो न संभवति, तस्य कुत्राप्यनुपलंभात्; स्वप्नज्ञानस्यापि जाग्रद्दृष्टार्थवत्ता संभवत्येव, ततो विज्ञानमात्रवादोऽनुपपन्नः।

## सर्वथानुपपत्तेश्च ॥२-२-३०॥

इह सर्वशून्यवादिनां बौद्धानां सर्वशून्यवादो युक्तो नवेति सन्देहः। युक्त इति पूर्वः पक्षः। तथाहि सर्वं जगन्न सत् बाधिततत्वात्; नासत् प्रतीयमानत्वात्; नोभयात्मकपरस्परविरोधात्; किन्तु त्रिकोटिविनिर्मुक्तं सर्वशून्यमेव। प्रत्यक्षावभासस्तु संवृत्तिमूलः तस्मात् शून्यवादः समीचीन इत्येवं प्राप्ते सिद्धान्त उच्यते- न संभवति सर्वशून्यवादः जगतः कोटित्रयसहितत्वात्; तथाहि न सदिति यदुक्तं तन्न युक्तम्; तत्रस्थचेतनानामविनाशित्वेनाबाधिततत्वात्;नासदिति यदुक्तं तदपि न युक्तम्; देहादीनां नश्वरत्वात्; नोभयात्मकमिति यत्तदपि न युक्तम्; चेतनाचेतनानामन्योन्याश्रयत्वेनोभयात्मकत्वे विरोधाभावात्। प्रत्यक्षावभासस्तु भ्रान्तिमूल इति यदुक्तं तदपि न युक्तम्; कथं यथा वस्तुतया सत्यजलस्य पारमार्थिकसूर्यकिरणयोगेनोषिर प्रदेशेऽवभासः प्रतीयते यथा च पारमार्थिकसर्पादेः सत्यरज्ज्वादौ भ्रान्त्या तत्तुल्योऽवभासः प्रतीयते तथा द्रष्टृपुरुषाः दृश्यवस्तूनि तत्कर्ता चैतेषां सर्वेषां शून्यत्वे कस्य पारमार्थिकपदार्थस्य भ्रान्तिमूला जगद्रूपः प्रत्यक्षावभासः प्रतीयते ? न कस्यापि; सः कैर्दृश्यते ? किञ्च मनुष्यपश्वादेर्यथोचितः शतसंवत्सराद्यायुः कालनियमः ओषधिप्रभृतेः पाके वृष्ट्यादित्रयप्रवृत्तौ च कालनियमो दृश्यते; एतत्सर्वं सर्वशून्यत्वे पारमार्थिककर्तारमृते कथं सिद्ध्येत् ? एवं सर्वप्रकारैः सर्वशून्यत्वानपपत्तेः सर्वशून्यवादः सर्वविरुद्ध एव।

एकस्मिन्नसम्भवाधिकरणम् ॥२-२-५॥

## नैकस्मिन्नसम्भवात् ॥२-२-३१॥

गता बौद्धाः। इदानीं जैनमतं निरस्यते-जैना हि सप्तभङ्गीन्यायेनैकस्मिन्नपि वस्तुनि नानाभावमापादयन्ति। तेषां युक्तं नवेति सन्देहः। तत्र तेषां प्रक्रिया उच्यते-जीवः अजीवश्चेति द्वौ पदार्थौ। जीवश्चेतनः शरीरपरिमाणः सावयवः। अजीवः षड्विधः। वनमहीधरादिरेकः आस्त्रवसंवरनिर्जरबन्धमोक्षाख्याः पञ्च। आस्त्रवत्यनेन जीवो विषयेषु इत्यास्त्रव इन्द्रियसंघातः

। संवृणोति विवेकमिति अविवेकादिः संवरः । निःशेषं जीर्यत्यनेन कामक्रोधादिरिति केशोल्लुञ्चनतप्तशिलारोहणादितपो निर्जरः । कर्माष्टकेनापादिता जन्मपरंपरा बन्धः । चत्वारि घातिकर्माणि पापरूपाणि चत्वार्यघातिकर्माणि पुण्यरूपाणि तेभ्यो मुक्तस्य जीवस्य ततोर्ध्वगमनं मोक्षः । एते सप्त पदार्थाः सप्तभङ्गीन्यायेन व्यवस्थाप्याः स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यं स्यादस्ति चावक्तव्यं स्यान्नास्ति चावक्तव्यं स्यादस्ति नास्ति चावक्तव्यं चेति सप्तभङ्गीन्यायः । स्याच्छब्दः ईषदर्थः । अतः सप्तभङ्गीन्यायात्सप्तपदार्थसिद्धिरिति एतदयुक्तं कुतः, एकस्मिन्वस्तुनि सत्वासत्वनित्यत्वानित्यत्वभेदाभेदादीनामसंभवात् । पर्यायभाविनश्च द्रव्यस्यास्तित्वनास्तित्वादिशब्दाः बुद्धिविषयाः परस्परविरुद्धाः पिण्डत्वघटत्व-कपालत्वाद्यवस्थावत् युगपन्न संभवन्ति ।

किञ्च स्वशास्त्रीयतपोदयादिकर्मरूपसाधनैर्बद्धाल्पज्ञक्षेत्रज्ञानां सर्वज्ञतासंपन्नमोक्षो भवेत्; यस्य च मुक्तत्वं जातं स एव स्वनिर्मितग्रन्थे जीवमोक्षहेतुकतपोदयादिसाधनानि तथा तत्साधनोक्तियुक्तशास्त्रकर्ताऽन्यः कश्चिदनादिसिद्धपरमेश्वरो नास्तीति च मुक्तप्रोक्तसाधनैरेव मोक्षोक्तिश्चेति वदतीत्यपि जैनमतोक्तिः

तत्रेयं महादोषापत्तिरवभासत एव । तथाहि अनादिसिद्धसर्वज्ञनारायणनिर्मितशास्त्रं विना प्रथममनाद्यविद्याऽनादिबद्धाल्पज्ञक्षेत्रज्ञानां मोक्षसाधनज्ञानं कथं भवेत् ? तज्ज्ञानं विना च सर्वज्ञतासंपन्नमुक्तत्वं कथं भवेत् ?

तदभावे च सति सर्वज्ञतायुतमोक्षोपायबोधकशास्त्रकर्तृत्वशक्तिः कथं संभवेदित्यन्योऽन्याश्रयदोषापत्तिः । अतो वेदविरुद्ध एव जैनवादः ।

## एवं चात्माऽकात्स्न्र्यम् ॥२-२-३२॥

जैनमते प्राप्तमात्माऽकात्स्न्र्यमपि एवं पूर्ववद्विरुद्धमेव । कथमिति चेत्तत्राह-आत्मनः शरीर परिमाणत्वे सावयवत्वे च सति सावयवाद्धस्त्यादिबृहच्छरीरादल्पीयसि सावयवे पिपीलिकादिशरीरे प्रविशतस्तस्य अकात्स्न्र्यं समग्रत्वेन प्रवेशानर्हत्वं समानावयवतत्संख्यानर्हत्वं च प्रसज्यते; अतो जीवात्मनः शरीरपरिमाणत्वं सावयवत्वं च न संभवत्येव । अथ संकोचविकासधर्मत्वेन जीवात्मनः पर्यायशब्दवाच्यावस्थान्तरापत्तौ तत्तच्छरीरप्रवेशसम्भवशङ्कां परिहर्तुमिदं सूत्रमाह-

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥२-२-३३॥

पर्यायादपि तथाविधाल्पत्वावस्थान्तरयोगादप्यविरोधो न सम्भवति; कुतः, विकारादिभ्यो दोषेभ्यः मृदो विकारघटादिवदात्मनः तत्तच्छरीरप्रवेशेन वृद्धिह्रासवत्त्वे घटादिवद्विकारादि-दोषप्रसक्तेरित्यर्थः ।

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥२-२-३४॥

जीवात्मनो यदन्त्यं मोक्षदशासंभूतं ज्ञानघनसत्तारूपं परिमाणं तस्यैकरूपावस्थितेः मोक्षदशावस्थितस्य पश्चात्प्राकृतदेहान्तरपरिग्रहाभावाच्च मोक्षदशारूपतत्परिणामस्य जीवात्मनश्चोभयोरपि नित्यत्वाच्च तदेव तस्य स्वाभाविकं परिमाणम्; अतः पूर्वावस्थायामप्यविशेषः साम्यम्; अतस्तस्य पूर्वमपि न शरीररूपेण परिमाणत्वसिद्धिः स्यादेव; अत एकस्मिन् सत्त्वासत्त्वादिवादादात्मनः मुक्तसाधनादि सिद्धेश्वराभाववादाच्च सावयवशरीर-परिमाणवादाच्च जैनमतमपि वेदविरुद्धमेव।

पत्यधिकरणम् ॥२-२-६॥

## पत्युरसामञ्जस्यात् ॥२-२-३५॥

अत्र नैकस्मिन्नसम्भवादित्यतो नस्यानुवृत्तिः। पत्युः पशुपतेः अनुसृतानां कापालादीनां तत्तन्त्रोक्तं मतं नादरणीयं कुतः, असामञ्जस्यात्; असामञ्जस्यं हि निमित्तोपादानकारणभेदत्वं तामसस्य रुद्रस्य गुणातीतत्वकथनं च मुद्रिकाषट्कधारणभगासनस्वात्मध्यानसुराकुम्भस्थापन-तत्स्थदेवतार्चनगूढाचारश्मशानभस्मस्नानप्रणवपूर्वाभिध्यानाद्यन्योन्यविरुद्धानि तेषां परिकल्पनं चोपासनमाचारश्चेदं सर्वं वेदविरुद्धमेव; अतस्तन्मतस्यानादरः।

## अधिष्ठानानुपपत्तेश्च ॥२-२-३६॥

अशरीरस्येश्वरस्य प्रधानरूपजगदुपादानकारणाधिष्ठानानुपपत्तिः कथमिति चेत्तत्राह- लोके शरीरिण एव कुलालादेर्मृत्पिण्डाद्युपादानाधिष्ठानं दृष्टम्; अतस्तन्मते कुलालादिदृष्टान्तो विरुद्धः। अशरीरस्येश्वरस्य प्रधानानधिष्ठानत्वे सति तस्य प्रधानानङ्गीकारात्सांख्यमतमेवोपपन्नं निरवयवपुरुषरूपेणेश्वरेण सह प्रधानस्य प्रपञ्चसर्गे प्रयोजनाभावात्; अतोऽप्येतन्मतासामंजस्यं सिद्धम्। पुनराशङ्क्य परिहरति-

## करणवच्चेन्न भोगादिभ्यः ॥२-२-३७॥

नन्वशरीरस्येश्वरस्य प्रधानाधिष्ठाने शरीरापेक्षा नास्ति। यथा जीवः करणमिन्द्रियं शरीरमप्यशरीरः सन्नधितिष्ठति तद्वत्प्रधानमीश्वर इति चेन्न; तत्कृतानर्थभोगादिभ्यः। यथा जीवस्याशरीरस्य शरीराधिष्ठाने शरीरगतसुखदुःखादिसंबन्धस्तथा पशुपतेरपि प्रधानाधिष्ठाने तद्गतभोगादिप्रसंगः, ततोऽप्येतन्मतमसमञ्जसमेव।

## अन्तवत्त्वमसर्वज्ञता वा ॥२-२-३८॥

वाशब्दश्चकारबोधकः। तथा भोगादिप्रसंगेनेश्वरस्य पुण्यपापरूपादृष्टवत्त्वे अन्तवत्त्वं

नित्याजादिविशेषणविशिष्टस्य तस्य करणकलेवरस्थानभोगादिभ्यस्तज्ज्ञानाच्च क्षरणस्वभाववत्त्वमित्यर्थः ।अत एवासर्वज्ञता भवेत्, नैतन्मतमादरणीयम् । एतेषां वेदविरुद्धानां सांख्यादिमतानां निराकरणविस्तारस्तु लक्ष्मणाचार्य कृतभाष्यादवगन्तव्यः ।

उत्पत्त्यसम्भवाधिकरणम् ॥२-२-७॥

## उत्पत्त्यसम्भवात् ॥२-२-३९॥

सांख्यादितन्त्रप्रणीतमतवत्पञ्चरात्रतन्त्रमपि प्रमाणतया ग्राह्यं नवेति सन्देहः । न ग्राह्यमिति पूर्वपक्षी मन्यते । कथमिति चेतत्राह

'वासुदेवात्सङ्कर्षणाभिधो जीवः प्रादुर्भूयते, सङ्कर्षणाच्च प्रद्युम्नाख्यं मन आविर्भूयते, तस्मादनिरुद्धनामाहङ्कारश्चेति' (श्रीभाष्ये उत्पत्यसम्भवाधिकरणे)

'द्वावजावीशानीशौ' (श्वेता.१-९)

इत्यादिश्रुतिविरुद्धजीवोत्पत्यादिप्रतिपादनेन तस्यानादरश्रवणात् इति प्राप्ते सिद्धान्तं ब्रूमः - सङ्कर्षणप्रद्युम्नानिरुद्धानां

'अजायमानो बहुधा व्यजायत' (तै.आ.३,पु.सू. २१)

इति श्रुतावभिहितानां पुरुषोत्तमाविर्भावानां स्वेच्छाविग्रहप्रतिपादनात् श्रुतिविरोधाभावः । जीवमनोऽहंकाराणामधिष्ठातृत्वात्तेषां संकर्षणादीनां जीवादिशब्दैरभिधानमविरुद्धम्; यथाकाशप्राणादिशब्दैः परब्रह्मणोऽभिधानं तद्वत्;

अतो भगवता वासुदेवेन परमनिःश्रेयससाधनावबोधितया प्रोक्तं वासुदेवादिचतुर्व्यूहस्य तदवताराणां चोपासनबोधकं वेदार्थानां परमोपबृंहकं पञ्चरात्रतन्त्रपरब्रह्मोपासकैः परमप्रमाणतया ग्राह्यम्; तच्छास्त्रं ये जना युक्त्या दूषयन्ति ते मन्दभाग्याः देवानां प्रियाश्च भवन्ति । सूत्रार्थवर्णनम् -

'न जायते म्रियते वा विपश्चिदिति' (कठ-१-२-१८),

'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः,
अजो नित्यः शाश्वतोऽयं पुराणः' (गीता.२-२०)

इत्यादिश्रुतिस्मृतिषु जीवकलापस्योत्पत्यसम्भवात् न प्रमाणं जीवोत्पत्तिवाक्यमिति । पुनरग्राह्यत्वमाह-

## न च कर्तुः करणम् ॥२-२-४०॥

'सङ्कर्षणात्प्रद्युम्नाख्यं मनो जायते '(परमसंहिता)

इति कर्मकर्तुर्जीवात्करणभूतस्य मनस उत्पत्तिर्न संभवति;

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मुण्ड-२-१-३)

इत्युपादानकारणभूतादन्तर्यामिशक्तिरूपात्प्रकृतिशरीरिणः परब्रह्मणो मनस उत्पत्तिश्रवणात् श्रुतिविरुद्धार्थप्रतिपादनेन पञ्चरात्रतंत्रस्याप्रामाण्यमिति प्राप्ते वक्ष्यमाणेन सूत्रेण सिद्धान्तं ब्रूमः –

## विज्ञानादिभावे वा तदप्रतिषेधः ॥२-२-४१॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । विज्ञानादिभावे-विज्ञानं संकर्षणसंज्ञो जीवः आदिशब्दग्राह्यो प्रद्युम्नानिरुद्धौ च तेषां भावे वासुदेवावतारत्वेन प्रादुर्भावे सति तत्प्रतिपादनपरपञ्चरात्रतन्त्रस्य प्रामाण्य प्रतिषेधो माभूदित्यर्थः । अत्रायमाशयः भागवतप्रक्रियानभिज्ञानां जनानां जीवपरमनिःश्रेयसप्रापणाय स्वेच्छया प्रादुर्भूतेषु संकर्षणादिपुरुषोत्तमावतारेषु जीवभावाप्तिः प्रतीयते; किञ्च संकर्षणादीनां जीवादिसंज्ञास्तु जीवमनोऽहंकाराणामधिष्ठातृत्वपरा बोध्याः । तद्विदस्तु परब्रह्मैव मुमुक्षुसमाश्रयणाय स्वेच्छया चतुर्धावतिष्ठते वाराहाद्यवतारैरनेकधा चेति वदन्ति । तथा श्रूयते

'अजायमानो बहुधा व्यजायत' (तै.आ. ३, पु.सू. २१) इति ।

तथा मार्कण्डेये स्मर्यते।

'स देवो भगवान् सर्वं व्याप्य नारायणो विभुः ।
चतुर्धा संस्थितो ब्रह्मन् सगुणो निर्गुणस्तथा ॥ (मार्कण्डेय पु. ४-४४)
एका मूर्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः ।
ज्वालामालोपरुद्धाङ्गी निष्ठा सा योगिनां परा ॥ (मार्कण्डेय पु. ४-४५)
दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा ।
वासुदेवाभिधानासौ निर्ममत्वेन दृश्यते ॥ (मार्कण्डेय पु. ४-४६)
द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः ।
संकर्षणेति विज्ञेया बलमुत्तममास्थिता ॥
तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता । (मार्कण्डेय पु. ४-४८)
तृतीया कर्म कुरुते प्रजापालनतत्परा ॥
सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥ (मार्कण्डेय पु. ४-४९)
चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा ॥
अनिरुद्धेति सा ज्ञेया जगदुत्पत्तिकारिणी ॥ (मार्कण्डेय पु. ४-५०)
व्यूहात्मानं चतुर्धा च वासुदेवादिमूर्त्तिभिः ।
सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः'। (मार्कण्डेय पु. ४-)

इति व्यासवचनं यथा पौष्करसंहितायाम्-

'कर्तव्यत्वेन वै यत्र चातुरात्म्योमुपास्यते ।
क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत्'॥ (पौष्कर संहिता ३८-२९३,२९४) इत्यादि ।

तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति, तथा सात्त्वतसंहितायामुक्तम्-

'ब्राह्मणानां हि सद्ब्रह्म वासुदेवाख्ययाजिनाम् ।
विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत्' ॥ (सात्वत संहिता परिच्छद. २-४,५) इति ।

तथा श्रीमद्भागवते स्मर्यते -

'अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसामिति' (भा. ३-१-४४)

'मत्स्याश्वकच्छपवराहनृसिंहहंसराजन्यविप्रविबुधेषु कृतावतारः, त्वं पासि नः'

इत्यादिवचनैः पञ्चरात्रतन्त्रोक्तं सङ्कर्षणादिपुरुषोत्तमावतारोपासनं सिद्धम् ।

## विप्रतिषेधाच्च ॥२-२-४२॥

अस्मिन्पञ्चरात्रतन्त्रे जीवोत्पत्तेर्विप्रतिषेधात् नैतद्वेदविरुद्धम् ।

तथाहि अचेतना परार्था च नित्या तत्रास्ति विक्रिया,
त्रिगुणा कर्मिणां क्षेत्रं प्रकृतिरूपमुच्यते ।
व्याप्तिरूपेण संबन्धस्तस्याश्च पुरषस्य च ।
स ह्यनादिरनन्तश्च परमार्थेन निश्चितः' (परम संहिता २-१८,१९) इति,
'अनादिकालतो जीवो मायया परिवेष्टितः ।
अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः' (बृहद् ब्रह्मसंहिता ४-१०-४६,४७)

इति जीवस्योत्पत्तिस्तत्रैव विप्रतिषिध्यते ।

**इति श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिवरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने द्वितीयाध्यायस्य द्वितीयः पादः ॥२॥**



## द्वितीयाध्याये तृतीयपादः ।

समग्रः श्रुतिविरुद्धशास्त्रमतसिद्धान्तो द्वितीयाध्यायद्वितीयपादे निराकृतः, इदानिं पादद्वयेन पुनः श्रुतिष्ववान्तरविरोधं परिहरति-

### वियदधिकरणम् ॥२-३-१॥

### न वियदश्रुतेः ॥२-३-१॥

निरवयवत्वेनाकार्यत्वभ्रमादाकाशस्योत्पत्तिः सम्भवति नवेति सन्दिह्यते । वियन्नोत्पद्यत इति प्राप्तं कुतः, अश्रुतेः, तथाहि छान्दोग्ये

'सदेव सौम्येदमग्र आसीत्' (छा.६-२-१) इत्यारभ्य

'तत्तेजोऽ सृजत' (छा. ६-२-३)

इति तेजःप्रभृतिभूतसृष्टिरभिधीयते । तत्र नाकाशस्योत्पत्तिः श्रूयते । या तु

'आत्मन आकाशः सम्भूतः' (तै.उ.आन.अनु.१-१)

इति श्रुतिस्तैत्तिरीये सा गौणी भवितुमर्हति आकाशोत्पादककारणनिरूपणासम्भवात्; अत सर्वगतस्याकाशस्याजजीववन्नोत्पत्तिरिति प्राप्ते सिद्धान्तं प्रवच्मः -

### अस्ति तु ॥२-३-२॥

वियत उत्पत्तिरस्त्येव

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै.उ.आन.अनु.१-१) इत्यादिश्रुतेः । आत्मनस्तु

'न जायते म्रियते वा विपश्चित्' (कठ-१-२-१८)

इति प्रतिषेधादनुत्पत्तिः । वियदुत्पत्तिप्रतिषेधश्रुतिर्नास्ति, अतो वियदुत्पद्यत एव । यदुक्तमुत्पत्तिश्रुतिर्गौणीति तत् सन्दिह्य निर्णयमाह-

### गौण्यसम्भवाच्छब्दाच्च ॥२-३-३॥

'तत्तेजोऽसृजत' (छा. ६-२-३)

इति तेजसः प्रथमं सृष्टिवचनादाकाशः सम्भूत इतिश्रुतिर्गौणी, तस्य निरवयवस्योत्पत्त्यसम्भवात् वायुश्चान्तरिक्षं चैतदमृतमिति नित्यत्वशब्दाच्च ।

### स्याच्चैकस्य ब्रह्मशब्दवत् ॥२-३-४॥

'आत्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निः' (तै.उ.आन.अनु.१-१)

इत्यादिष्वनुगतस्यैकस्य सम्भूतशब्दस्याकाशे गौणत्वमन्यत्र मुख्यत्वं च स्यात् ब्रह्मशब्दवत्;

यथैकस्य ब्रह्मशब्दस्यैकप्रकरणगतस्य

'तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते' (मुण्ड-१-१-९)

इति प्रकृतौ गौणत्वं

'तपसा चीयते ब्रह्म' (मुण्ड-१-१-८)

इति ब्रह्मणि मुख्यत्वं च भवति तद्वदत्रापि। यथैकप्रकरणे उभयत्र प्रयुक्तब्रह्मशब्दे गौणमुख्यभावोऽभिहितस्तथैवानुषङ्गेऽपि तदुभयत्वं संभवत्येवेत्यर्थः, अत आकाशोत्पत्तिरयुक्तेति। अस्य सन्देहस्य परिहार उच्यते-

## प्रतिज्ञाहानिरव्यतिरेकात् ॥२-३-५॥

'येनाश्रुतं श्रुतं भवति' (छा. ६-१-३)

इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया हानिर्न भवति, कुतः, वियदादीनां ब्रह्मकार्यत्वेन ब्रह्माव्यतिरेकात्; अतो न सम्भूतशब्दस्याकाशे गौणत्वम्;

गौणत्वे सति सदा सतो वियतोऽन्तर्यामिशक्त्यनुसंकोचविकासाभावेनैकवस्तुविज्ञानसम्भूत-सर्वविज्ञानप्रतिज्ञाया हान्याद्युपपत्तेः। यथा प्रतिज्ञाया अहानिस्तथा योजनीयम्।

## शब्देभ्यः ॥२-३-६॥

'आत्मन आकाशः सम्भूतः' (तै.उ.आन. अनु. १-१),

'तामसादपि भूतादेर्विकुर्वाणादभून्नभः' (भा. २-५-२५)

इत्यादिबहुश्रुति स्मृतिशब्देभ्योऽवगतां वियदुत्पत्तिम्

'तत्तेजोऽसृजत' (छा. ६-२-३) इत्यत्राकाशोत्पत्त्यवचनावगतं तेजः प्राथम्यं न निवारयितुं क्षमते।

## यावद्विकारं तु विभागो लोकवत् ॥२-३-७॥

यद्यपि छान्दोग्ये,

'तेत्तेजोऽसृजत' (छा. ६-२-३)

इत्यत्राकाशोत्पत्तिर्नोक्ता तथापि तस्मिन्नेव

'ऐतदात्म्यमिदं सर्वम्' (छा. ६-८-७)

इत्याकाशादेः सर्ववस्तुनोऽपि ब्रह्मकार्यावगमात्तेजःप्रभृतिकार्यवचनं तु यावद्विकारं यत्परिमितप्रकृत्यादिकार्यं तस्य सर्वस्यापि वस्तुनो विभाग उत्पत्तिस्तद्दर्शनार्थमिति विज्ञायते लोकवत्। यथा लोके दश मे पुत्रा इत्युक्त्वा तेषु केषाञ्चिदुत्पत्तिवचनं सर्वपुत्रोत्पत्तिकथनपरं तद्वत्

'तस्मादाकाशः सम्भूतः' (तै.उ.आन.अनु.१-१) इति वचनं युक्तमेव।

मातरिश्वाधिकरणम् ॥२-३-२॥

## एतेन मातरिश्वा व्याख्यातः ॥२-३-८॥

तेजोऽत इति वक्ष्यति तदर्थमेवात्र वायोः पृथगुपादानम्। आकाशाद्वायोरुत्पत्तिरस्ति नवेति संशये वायुर्नोत्पद्यते इति पूर्वः पक्षः। छान्दोग्ये वायोरुत्पत्तेरश्रुतेः, बृहदारण्यके

'सैषाऽनस्तिमिता देवता यद्वायुः' (बृ. १-५-२२)

इति तज्जन्मनिषेधाच्च वायुर्नोत्पद्यत इति प्राप्ते सिद्धान्तः- छान्दोग्ये वायोर्जन्माश्रवणेऽपि गुणोपसंहारन्यायेन

'आकाशाद्वायुः' (तै.उ. आन. अनु. १-१)

इति तैत्तिरीयवाक्योपसंहारे सति श्रुतमेव छान्दोग्येऽपि वायोर्जन्म।

'सैषाऽनस्तमित' (बृ. १-५-२२)

इति श्रूतिः स्तुतिपरा उपासनप्रकरणात्; तस्मादेतेनोक्तन्यायेन वायुरप्युत्पत्तिप्रकरणे व्याख्यात एव।

असम्भवाधिकरणम् ॥२-३-३॥

## असम्भवस्तु सतोऽनुपपत्तेः ॥२-३-९॥

'सदेव सौम्येदमग्र आसीत्' (छा.६-२-१)

इति सद्रूपात् ब्रह्मण आकाशादीनामुत्पत्तिरिति निरूपितं तद्वदिह सर्वकारणस्य सतोऽपि ब्रह्मणः कुतश्चित्कारणादुत्पत्तिरस्ति नवेति सन्देहे सति ब्रह्मणोऽप्युत्पत्तिरस्तीत्युच्यते; कथमिति चेत्तत्रोच्यते-यथाकाशस्य वायोः कारणत्वेऽपि 'आकाशः सम्भूत' इति तदुत्पत्तिः श्रूयते तथा सर्वकार्येभ्यः पूर्वमस्य सतो ब्रह्मणः कारणस्यापि

'असद्वा इदमग्र आसीत्ततो वै सज्जायत' (तै.उ.आन.अनु.७-१)

इत्युत्पत्तिश्रवणात्। अत्राडागमाभावश्छांदसः ततोऽसतः सद्रूपं ब्रह्माप्यजायतेति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्;' (छा.६-२-१),

'एको ह वै नारायण आसीत्' (महो. १-१),

'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' (कठ.१-३-११),

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१),

तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा' (भा. १०-८७-२४),

'पृथिव्यप्सु लीयते' इत्यारभ्य 'तमः परे देवे' (सुबा.उ. २)
इत्यादिश्रुत्यभिहितस्य
'आत्माधारोखिलाश्रयः' (भा. ११-९-१६)
इति स्मृत्युक्तस्य च सर्वकारणस्य सदेवेत्यवधारणार्थगतस्य सद्रूपस्य परब्रह्मसंज्ञस्य नारायणस्यैकस्य असम्भवोऽनुत्पत्तिः, तदितरस्य पुरुषप्रकृत्यादिसर्वस्यैकविज्ञानेन सर्वविज्ञान-प्रतिज्ञाद्यनुपपत्तेः संभवोऽभिहितः असद्वा इदमग्र इति श्रुतौ; ततोऽसच्छब्दवाच्यात्कारणाद्ब्रह्मणः सच्छब्दवाच्यं स्थूलं विश्वरूपं कार्यमजायतेति तात्पर्यार्थात्; ततोऽसतः सद्रूपं ब्रह्मापि जायत इति यदुक्तं तदनर्थमूलमेवेति ।

तेजआद्यधिकरणम् ॥२-३-४॥

## तेजोऽतस्तथा ह्याह ॥२-३-१०॥

अत्र वाय्वादिकार्यं साक्षात् ब्रह्मण उत्पद्यते स्वस्वपूर्वकारणाद्वेति सन्देहे सति स्वस्वपूर्वकारणादिति पूर्वः पक्षः । तथाहि आकाशाद्वायुरितिश्रुतेर्वायुराकाशादेवोत्पद्यते न साक्षाद्ब्रह्मणः तथा तेजोऽपि अतो वायोरेव वायोरग्निरित्याह श्रुतिः ।

## आपः ॥२-३-११॥

'अग्नेरापः' (तै.उ.आन.अनु.१-१) इतिश्रुतेरापोऽप्यग्नेरेव ।

## पृथिवी ॥२-३-१२॥

'अद्भ्यः पृथिवी' (तै.उ.आन.अनु.१-१)
इतिश्रूतेरद्भ्य एव पृथिवी, अतो ब्रह्मण एव साक्षान्नोत्पद्यन्ते भूतानि । ननु
'ता अन्नमसृजन्त' (छां. ६-२-४)
इति श्रुत्यन्तरेऽन्नशब्दस्य कथं पृथिवीवाचकत्वमिति चेत्तत्राह ।

## अधिकाररूपशब्दान्तरेभ्यः ॥२-३-१३॥

छान्दोग्येऽपि 'ता अन्नमसृजन्ते 'त्यन्नशब्देन पृथिव्येवोच्यते, सर्वमहाभूतसृष्ट्यधिकारात् । पश्चादपि वाक्यशेषे महाभूतरूपकीर्तने
'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' (छां. ६-४-१)
इति रूपकीर्तनाच्च समानप्रकरणे अग्नेरापः अद्भ्यः पृथिवीति शब्दान्तराच्चेति हेतुत्रयात्पृथिव्येवाद्भ्य उत्पद्यते । तदेवंन्यायेन ब्रह्म न सर्वेषां कारणं किंतु परंपरयेति प्राप्ते सिद्धान्त उच्यते –

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥२-३-१४॥

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै.उ.आन.अनु. १-१)

इत्यारभ्य वाय्वादीनां पृथिव्यन्तानां पूर्वपूर्वकारणादुत्पत्तिर्नोच्यते;

'पृथिव्यप्सु प्रलीयते' (सुबा.उ. २) इत्यारभ्य

'तमः परे देवे' (छा.६-२-३)

इति पृथिव्यादितमः पर्यंतानां पूर्वपूर्वकारणे लयोऽपि नोच्यते; किन्तु पूर्वपूर्वकारणतमः प्रभृतिविशिष्टाद् ब्रह्मण एवोत्तरोत्तरपुरुषाव्यक्तमहदादिकार्योत्पत्तिरुच्यते, तथा पृथिव्यादि-पूर्वपूर्वविशिष्टे कारणे ब्रह्मण्येव सूक्ष्मरूपेण स्थितिलक्षणो लय उच्यते इति सः परमात्मा नारायण एव सर्वेषामुत्पादको विलापकश्च भवति; कुतः, तल्लिङ्गात्-तस्य परमात्मन एव लिङ्गात् सृष्ट्यादिज्ञापनात् तदभिध्यानाच्च। तुशब्दश्चार्थे। तस्य परमात्मनस्तथाविधाभिध्यानाच्चिन्तनात्; तथाहि

'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छा. ६-२-३) इति तथा

'तत्तेज ऐक्षत बहु स्यां प्रजायेयेति' (छां. ६-२-३),

ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति' (छां. ६-२-४)

'सोऽकामयत बहु स्यां प्रजायेय' (तै.आन.अनु.६-२)

इत्यादिषु बहुभवनसंकल्परूपाभिध्यानं तस्यैव श्रूयते; तथाविधमभिध्यानमितरस्य तु न सम्भवति; तथाविधं जगत्सर्गादिसामर्थ्यं यत्र कुत्रापि दृश्यते तत्तस्यैवेति निश्चीयते।

विपर्याधिकरणम् ॥२-३-५॥

## विपर्येण तु क्रमोऽत उपपद्यते च ॥२-३-१५॥

तुशब्दोऽवधारणार्थः। इह पूर्वसूत्रे पुरुषाव्यक्तमहदहंकारादीनां निरूपितसृष्टिक्रम उपपद्यते नवेति सन्देहः। नोपपद्यते इति पूर्वः पक्षः। तथाहि मुण्डकोपनिषदि

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च,

खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी' (मुण्ड. २-१-३)

इति प्राणादीनां वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते; अतः 'आत्मन आकाशः सम्भूत आकाशाद्वायुरि' त्यादिनाऽऽकाशादेः पूर्वोक्तः सृष्टिक्रमो नोपपद्यते; कुतः, तस्य

'एतस्माज्जायते प्राणः' (मुण्ड.२-१-३)

इत्यत्र विपर्ययेण प्रतीयमानत्वात् इति प्राप्ते सिद्धान्तं ब्रूमः-पूर्वपक्षनिषिद्धः सृष्टिक्रमो युक्त एव, कथमिति चेत्तत्र सूत्रार्थेनोच्यते विपर्येणोक्तावपिक्रमो न भ्रश्यते एव; कुतः,

'अन्नमयं सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' (छा. ६-५-४)

इति प्राणादीनां भौतिकत्वश्रवणात्, अतो भूतेष्वन्तर्भावान्न पृथक् क्रमापेक्षोपपद्यते, तथा एकत्र यथोक्तस्यान्यथोक्तस्यापि पुरुषाव्यक्तमहदहंकारादेः सृष्टिक्रमे विरोधाभावश्चाप्युपपद्यते ततः पूर्वोक्तक्रमे न विरोधः। पुनराशङ्क्य परिहरति–

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥२-३-१६॥

विज्ञानसाधनत्वेन इन्द्रियाणि विज्ञानमित्युच्यते ।

'एतस्माज्जायते प्राण' (मुण्ड.२-१-३)

इति वाक्यमाकाशतन्मात्रपञ्चकयोरन्तराले विज्ञानमनसी क्रमेणोत्पद्येते इत्येतद्बोधकम्

'ततो विज्ञानमनसी' इत्यत्र विज्ञानशब्दः प्राणस्यापि प्रदर्शनार्थः,

'पृथिव्यप्सु लीयते' (सुबा.उ. २) इत्यारभ्य

'वायुराकाशे लीयते आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ भूतादिर्महति महानव्यक्ते अव्यक्तमक्षराख्ये पुरुषे अक्षरं तमसि तमः परे' (सुबा.उ. २)

इति प्रलयक्रमप्रत्यभिज्ञानरूपात्तल्लिङ्गात् उत्पत्तिज्ञापनात्

'एतस्माज्जायते प्राण' (मुण्ड. २-१-३)

इत्येतदपि वाक्यं न श्रुत्यन्तरविरुद्धम्; किन्तु पारंपर्यक्रमपरमिति चेन्न; कुतः, अविशेषात्

'एतस्माज्जायते प्राण' इत्यत्र श्रूयमाणस्यैतच्छब्दवाच्यस्य नारायणस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येकमन्तर्यामित्वेनान्वयस्य विशेषाभावात्, अतः पुरुषप्रकृतिप्रभृतीनामाकाशप्रभृतीनां च प्राणप्रभृतीनां च तेजःप्रभृतीनां च सर्वेषां नारायण एव कारणम्; तत्र तत्रान्तर्यामिशक्त्या तस्य प्रवेशात्, तत्तद्वाचका ये शब्दास्ते सर्वे सकलशरीरिणो नारायणस्यैव वाचका इति निर्णीयते।

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥२-३-१७॥

पूर्वसूत्रे पुरुषप्रकृत्याकाशादिशब्दवाच्यत्वं ब्रह्मणः प्रतिपादितम्; तत्र गौणत्वं मुख्यत्वं वेति शङ्कानिरासार्थस्तुशब्दः। चेतनाचेतनात्मकचराचरवस्तूनां व्यपाश्रयः संबन्धो विद्यते यस्य चराचरसंबन्धी तद्व्यपदेशः स्थावरजंगमवाचिशब्दः चेतनाचेतनान्तर्यामिणि ब्रह्मण्यभाक्तः स्यात् गौणो नास्ति किन्तु मुख्य एव; कुतः, तद्भावभावित्वात् पुरुषप्रकृतिवियत्प्राणतेजःप्रभृतिष्वन्तर्यामितया ब्रह्मभावभावित्वात् सर्वेषां चराचरवस्तूनां ब्रह्मशरीरतया ब्रह्मप्रकारत्वात् चराचरवाचिशब्दानां सर्वात्मनि ब्रह्मण्येव पर्यवसानादभाक्तत्वं यथा देवमनुष्यादिशरीरवाचिशब्दानां शरीरीणि क्षेत्रज्ञसमुदाये पर्यवसायित्वेन मुख्यत्वं तथेति संबन्धः।

आत्माधिकरणम् ॥२-३-६॥

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥२-३-१८॥

पूर्वसूत्रे प्रकृतिवियत्तेजःप्रभृतिनां स्थूलतया ब्रह्मण उत्पत्तिरुक्ता तथा जीवकलापोऽपि ब्रह्मणः समुत्पद्यते नवेति सन्देहः। समुत्पद्यते इति पूर्वः पक्षः।

'सदेव सोम्येदमग्र आसीदेकमेवाद्वीतीयम्' (छा. ६-२-१),

'तर्हि न सन्न चासदुभयं नच कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा' (भा. १०-८७-२४)

इत्यादिश्रुतिषु प्राक्सृष्टेर्ब्रह्मैकत्वावधारणात् सदसतोर्निषेधाच्च; अतः सृष्टिकाले ब्रह्मण उत्पद्यत एव जीवकलापः। विस्फुलिंगदृष्टान्तोऽपि जीवोत्पत्त्यनुगुणः श्रूयते

'यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति एवमेवैतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरन्ति' (बृ. २-१-२०) इति।

तस्माद्यथाग्नेर्विस्फुलिंगा जायन्ते तथा ब्रह्मण आत्मानोऽपि जायन्ते इत्येवं प्राप्ते ब्रूमः- आत्मकलापो नोत्पद्यते

'न जायते म्रियते वा विपश्चित्' (कठ-१-२-१८) इति श्रूतेः, ताभ्यः

'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ.२-२-१३),

'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेता.१-९),

'अजो ह्येको जुषमाणोऽनुशेते' (श्वेता. ४-५), इत्यादिश्रुतिभ्यः,

'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' (गीता.२-२०) इति,

'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः' (गीता.२-१८) इति,

अपरिमिताध्रुवास्तनुभृतः' (भा. १०-८७-३०)

इत्यादिस्मृतिश्च नित्यत्वानित्यत्वाजत्वावगतेश्च सृष्टेः प्राक् ब्रह्मण एकत्वावधारणं तच्छरीरभूतस्य क्षेत्रज्ञसमुदायस्याचिद्वस्तुनश्च नामरूपविभागाभावात् न जीवादिस्वरूपासद्भावेन।

विस्फुलिंगश्रुतिश्च तेषां नामरूपसमुत्पत्तिबोधनपरा नतु जन्मपरा, अन्यथा त्वकृताभ्यागमकृतविनाशादिदोषप्रसंगः। तस्मात् ब्रह्मणो न जायत एव जीवसमुदायः।

ज्ञाधिकरणम् ॥२-३-७॥

## ज्ञोऽत एव ॥२-३-१९॥

पूर्वत्र नित्यतया जीवः सिद्धः। पुनरस्य स्वाभाविकं ज्ञानमस्ति नवेति सन्दिह्यते; एवं सति पूर्वः पक्षः स्वाभाविकं ज्ञानधर्मित्वं नास्तीति;

'ज्ञाज्ञौ द्वौ' (श्वेता.१-९)

इति जीवकलापस्याज्ञत्वमेव हि श्रूयते; तस्मादसौ जीवकलापोऽज्ञ एव चैतन्यमात्रस्वरूपः अनादिप्रकृतिसंबन्धात् प्रतिसर्गं हरिणा यथाकर्मप्राप्तिकरणकलेवरादिरयं देवोऽहं मनुष्योऽहं देहोऽहमिति शरीरजन्याहंकारबद्धः ममायं पिता ममेयं माता ममेदं पुत्रधनकलत्रादीति ममत्वबद्धश्च सन् संसरति । संसारदशायां जीवकलापस्य कर्मजन्यज्ञानात् स्वतो ज्ञातृत्वं नास्त्येव; अन्यथा कुतोऽस्य मोक्षोपदेश इत्येवं प्राप्ते ब्रूमः- ज्ञातैवायमात्मा

'अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान्पश्यन् रमते' (छा. ८-१२-४,५),

'न पश्यो मृत्युं पश्यति' (छा. ७-२६-२),

'द्रष्टा श्रोता घ्राता रसयिता' (प्रश्न.४-९) इति,

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः'॥ (गीता.१३-१)

इत्यादि श्रुतिस्मृतिभ्यो बद्धमुक्तोभयावस्थोऽस्ति । अस्य विज्ञानमात्रव्यपदेशस्तु स्वरूपानुबन्धिज्ञानधर्मयुक्तत्वात्; अतः

'यो विज्ञाने तिष्ठन्' (बृह. ५-७-७),

'मनोमयादन्योऽन्तर आत्मा विज्ञानमयः' (तै.उ.आन. अनु. ४)

इति ज्ञानधर्मयुक्तत्वश्रवणात् अयं ज्ञ एव ज्ञातैव । नन्वेवं च सति सुषुप्तिमूर्छाप्रलयेषु स्थावरभावे चास्य कथं ज्ञानाभाव इति चेत्तत्रोच्यते-

कर्मणा कालेन चास्य ज्ञानं तदानीं संकुचितमनभिव्यक्तमपि सर्गजागरादौ विकसितमभिव्यज्यत इति न विरोधः यदुक्तमनादिप्रकृतिसंबन्धादित्यारभ्य संसारदशायामस्य जीवकलापस्य कर्मजन्यज्ञानात्स्वतो ज्ञातृत्वं नास्तीति तत्सत्यम्; अनादिप्रकृतिसंबन्धेनानादि- कवलीकृतस्वाभाविकस्वज्ञानस्वधर्मोऽयं प्राकृतेन्द्रियसंबन्धाद्धोक्ता सुखदुःखयोर्ज्ञाता शरीराहंकारमात्रविश्रान्तः संसरति जीवः ।

यदा चास्य ब्रह्मज्ञानोपासनाभ्यासान्मलत्रयसंबन्धोऽपैति तदासौ ब्रह्मसदृशोऽभिव्यक्तनिरतिशयज्ञानधर्मो मुक्त इत्युच्यते । किञ्च

'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. ३-१-३)

इति परमात्मनः पार्षदत्वरूपं सर्वोत्कृष्टं साम्यमस्य जीवकलापस्य श्रूयते । ज्ञाज्ञावित्यत्र हि संसारिणः जीवस्याज्ञत्वं किञ्चिद्ज्ञत्वमेव । अत्र नञोऽल्पार्थत्वात् नारायणस्य ज्ञत्वं सदा सर्वज्ञत्वमुच्यते; अतः संसारे किञ्चिज्ज्ञत्वं मुक्तौ सर्वज्ञत्वमिति ज्ञातैवात्मा ।

## उत्क्रान्तिगत्यधिकरणम् ॥२-३-८॥

## उत्क्रान्तिगत्यागतीनाम् ॥२-३-२०॥

पूर्वत्र ज्ञातृत्वेन सिद्धस्यात्मन उत्क्रान्त्यादिदर्शनादणुत्वमवगम्यते, तद्युज्यते नवेति सन्देहः। नास्याणुत्वमुपपद्यते ।

'स वा एष महानज आत्मा' (बृ. ६-४-२५)

इति जीवस्य व्यापकत्वपर्यायरूपविभुत्वावगमादयमात्मा विभुरिति प्राप्ते निरूप्यते- अणुरेवायमात्मा उत्क्रान्तिगत्यागतीनां श्रुतेः

'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' (बृह.६-४-२)

इत्युत्क्रान्तिः श्रूयते

'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौषी. १-९) इति गतिः,

'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण' (बृ. ६-४-६) इत्यागतिः ।

विभुत्वे जीवस्यैताः उत्क्रान्तिगत्यागतयो नोपपद्येरन् ।

यद्यपि शरीरवियोगरूपोत्क्रान्तिर्विभुत्वेऽप्यात्मनः स्यात् तथापि गत्यागती नैवमित्याह-

## स्वात्मना चोत्तरयोः ॥२-३-२१॥

उत्तरयोर्गत्यागत्योः स्वात्मनैव संपाद्यत्वादणुरयमात्मा; यदुक्तम्

'महानज आत्मा'(बृ. ६-४-२५) इति तन्नारायणप्रकरणान्नैतद्विषयमिति वक्ष्यति ।

तस्मादणुरेव जीवात्मा । सन्दिह्य परिहरति-

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२-३-२२॥

अतच्छ्रुतेरनल्पत्वश्रुतेः

'योऽयं विज्ञानमयः' (बृह.६-३-७) इति जीवात्मानं निरूप्य

'स वा एष महानज आत्मा' (बृ.६-४-२५)

इति महत्त्वश्रवणान्नाणुर्जीवात्मेति चेन्न, इतराधिकारात्

'यस्यानुवित्तः प्रतिबुद्ध आत्मा' (बृ. ६-४-१३)

इति जीवात्मेतरपरमात्मन एवाधिकारात् प्रकरणात् ।

## स्वशब्दोन्मानाभ्यां च ॥२-३-२३॥

स्वशब्दात्

'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश' (मुण्ड.३-१-९)
इति श्रुतावात्मवाचकाणुशब्दात्

'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' (श्वेता. ५-९) इति
'आराग्रमात्रो ह्यवरो हि दृष्टः' (श्वेता. ५-८)

इति उन्मानाच्च अणुरात्मा । अणुसदृशं वस्तूदाहृत्य तन्मानत्वप्रदर्शनमुन्मानम् । अणुत्वेऽस्य सकलदेहव्यापिवेदनानुभवः कुत इत्यत आह–

## अविरोधश्चन्दनवत् ॥२-३-२४॥

यथा चंदनबिन्दुरेकदेशस्थोऽपि सकलदेहव्यापिसुखं जनयति तद्वदात्मा च देहैकदेशस्थोऽपि सकलशरीरस्थे सुखदुःखे अनुभवतीत्यविरोधः । पुनराशङ्क्य परिहरति–

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्हृदि हि ॥२-३-२५॥

अवस्थितिवैशेष्यात् चन्दनबिन्दोर्देहैकदेशस्थितिविशेषत्वात्तथात्वं संभवति, जीवात्मनस्तु न तथात्वमिति चेन्न,

'आत्मनोऽपि तदभ्युपगमात्। हृदि ह्ययमात्मास्ति' (प्रश्न.३-६)
'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' (बृह. ६-३-७) इति श्रवणात्
'हृत्स्थोऽणुः सूक्ष्मचिद्रूपो ज्ञाता व्याप्याखिलां तनुं,
ज्ञानशक्त्या स्थितो जीवो ज्ञेयोऽच्छेद्यादिलक्षणः' (शिक्षापत्री. १०५)

इति *नारायणमुनिस्मरणाच्च ।*

जीवात्मनो देशविशेषस्थितिख्यापनाय चन्दनदृष्टान्तः प्रदर्शितः । पुनर्जीवात्मनः प्रकारान्तरेण शरीरे व्याप्तिमाह–

## गुणाद्वालोकवत् ॥२-३-२६॥

वाशब्दो देहव्याप्तौ प्रकारान्तरं बोधयति । गुणात् जीवात्मा स्वज्ञानगुणेन समस्तस्वदेहं व्याप्यानुभवति आलोकवत्; आलोकः स्वप्रकाशस्तेन यथैकदेशस्था दीपरविमणिप्रभृतयो व्याप्य ब्रह्माण्डं गेहं च प्रकाशयन्ति तद्वत् । तथाहि पञ्चरात्रे

'स्वरूपतोऽणुभूतोऽपि प्रकाशेन शरीरगः ।
एकदेशस्थितो वेति हरिचन्दनबिन्दुवत् ।
प्रभया भास्करो यद्वद्ब्रह्माण्डं व्याप्य तिष्ठति ।
एकदेशस्थितो दीपः कृत्स्नं गेहं प्रकाशते' ॥ (बृहद् ब्रह्मसंहिता ४-१०-४४) इति

तथा च स्मर्यते–

'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत' ॥ (गीता. १३-३३) इति

## व्यतिरेको गन्धवत्तथा च दर्शयति ॥२-३-२७॥

पुष्पादिरूपेण परिणताया गन्धवत्याः पृथिव्याः सकाशात् पृथक् स्थितेन पुंसाऽऽघ्रातप्रसृतगन्धगुणवत् घटादिकं जानामीति जीवस्य स्वतो दूरे प्रसृतेन ज्ञानगुणेन घटाद्युपलब्धेः ज्ञानजीवात्मनोः पृथिवीगन्धवद्गुणगुणिभावेन व्यतिरेकोऽस्तीति दर्शयति च श्रुतिः 'व्यतिरेकं जानात्येवायं पुरुष' इति ।

## पृथगुपदेशात् ॥२-३-२८॥

ज्ञानं जीवात्मनः पृथगुपदिश्यते, अतो नित्यज्ञानगुणक आत्मा सिद्धः । तथाहि श्रूयते
'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ. ६-३-३०) इति ।
ननु ज्ञानगुणकत्वे कथं ज्ञानमात्रत्वव्यपदेश इत्यत आह-

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२-३-२९॥

ज्ञानगुणसारत्वादात्मनो ज्ञानव्यपदेशः, न ज्ञानमात्रत्वात् प्राज्ञवत्; यथा प्राज्ञस्य
'यः सर्वज्ञः सर्ववित्' (मुण्ड. १-१-१०)
इति श्रूयमाणस्य विपश्चितोऽपि ज्ञानगुणसारत्वात्
'सत्यं ज्ञानमनन्तम्' (तै.उ.आन.अनु.१-१) इति तद्व्यपदेशः ।
ततो जीवात्मनो ज्ञानमात्रत्वव्यपदेशो दोषो न भवतीति पुनरुपपत्तिमाह-

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥२-३-३०॥

यावदात्मभावित्वात्-ज्ञानस्य यावदात्मस्वरूपानुबन्धित्वात् तेन ज्ञानेन तद्व्यपदेशो न दोषः कुतः बलीवर्दादिषु तद्दर्शनात्; यावत्स्वरूपानुबन्धिधर्मत्वेन श्वेतपीतरक्तकर्बुरादिगुणयुक्तानां बलीवर्दानां श्वेतोऽयं पीतोऽयं रक्तोऽयं कर्बुरश्चायं बलीवर्द इति व्यपदेशो दृश्यते अत आत्मनः स्वरूपानुबन्धिज्ञानधर्मेण ज्ञानमात्रो जीव इति व्यपदेशः । सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्याशङ्क्याह -

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥२-३-३१॥

सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्यापि जागरितादावभिव्यक्तिसंभवात् तस्य स्वरूपानुबंध्येव ज्ञानम्; यथा पुरुषेष्वसाधारणसप्तमधातोर्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिस्ततो

न ज्ञानस्यात्मस्वरूपानुबन्धित्वे दोषः । इत्थमात्मनोऽणुत्वं ज्ञातृत्वं चोक्त्वा सांप्रतं पक्षान्तरे दूषणं पठति-

**नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा ॥२-३-३२॥**

अन्यथा ज्ञप्तिमात्रस्वरूपात्मवादे हेत्वन्तरायत्तज्ञानसर्वगतात्मवादे चैवं दोषः- ज्ञप्तिमात्रस्वरूपात्मवादे तावद्दोषं दर्शयति-आत्मनो ज्ञप्तिमात्रस्वरूपत्वे चिदचिदात्मके लोके वर्तमानस्य तस्य नित्यं सर्वदैवोपलब्धिप्रसंगः स्यात् सर्वदैव ज्ञानसंभवो भवेत् संकोचाभावत्, तथापि सर्वदानुभूतत्वाद्विद्यमानस्य ज्ञानानुपलब्धिप्रसंगस्यापि सा ज्ञप्तिरेव स्वयं नित्यं हेतुर्भवेत्, ज्ञाने विद्यमाने सति हेत्वन्तरेण ज्ञप्तेर्निवारणसंभवात् ।

एवं च सति ज्ञप्तेरेव ज्ञप्त्यनुपलब्धिहेतुत्वमभिमतं वाऽथवा युगपद्विरुद्धकार्योत्पादनायोगात् सहैव ज्ञानोपलब्ध्यनुपलब्धी विरुध्येते । तस्मादुपलब्धेरनुपल्बधेर्वा कश्चिदन्योऽदृष्टरूपो हेतुः कल्प्यते चेत्तदा तयोर्मध्येऽन्यतरनियमः स्यात् । तथाहि-अदृष्टं ज्ञप्तिमात्रत्वस्य नित्योपलब्धेरेव हेतुः स्यात्, नित्यानुपलब्धेरेव वा हेतुः स्यात् नतूभयोः कुतः, उभयधर्मयोर्युगपदेकत्र विरोधित्वात्ः एवमन्यतरनियमे सत्यपि दूषणं तद्यथा-अदृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धिहेतुत्वांगीकारेऽपि तस्य पुण्यपापानुसंधानजनितत्वा- द्विरोधापत्तिः । कथं यद्यदृष्टं नित्यं केवलपुण्यानुसंधानजनितं तदा तु तस्य ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धिहेतुत्वप्रसंगः स्यात्, परंतु तन्न संभवति; देशकालादिवैषम्येण सततं तादृक्कर्मानुष्ठानायोगात् । यदि त्वदृष्टं केवलपापानुसंधानजनितं तदाऽदृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धिहेतुत्वाङ्गीकारपक्षेऽपि तस्य ज्ञप्तिमात्रस्वरूपात्मनित्या- नुपलब्धिहेतुत्वप्रसंग एव स्यान्नतु ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धि- प्रसक्तिः । एवमेवादृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वाङ्गीकारेऽपि तस्य पुण्यपापानुसंधान- जनितत्वाद्विरोधापत्तिः । कथं यद्यदृष्टं नित्यं केवलपापानुसंधानजनितं तदा तु तस्य ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वप्रसंगः स्यात् परंतु तन्न संभवति, असद्देशकालादिवैषम्येण निरन्तरं पापकर्मानुष्ठानायोगात् । यदि त्वदृष्टं केवलपुण्यानुसंधानजनितं तदा अदृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वाङ्गीकारपक्षेऽपि तस्य ज्ञप्तिमात्रस्वरूपात्मोपलब्धि- हेतुत्वप्रसंग एव स्यान्नतु ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वप्रसक्तिः। एवमन्यतरनियमे दूषणत्वात् सर्वदा ज्ञप्तिमात्रस्वरूपात्मनो नियमाभाव एवोपपन्नः ।

हेत्वन्तरायत्तज्ञानसर्वगतात्मवादेऽपि स एव दोषः । तथा हि सर्वेषामात्मनां सर्वगतत्वे सति ज्ञानहेतूनां मनःप्रभृतीनामदृष्टहेतूनां च कर्मणामपि सर्वसाधारणतया संयोगेन संकोचाभावाद्धेतोः आत्मनि नित्यं सर्वगतत्वोपलब्धिप्रसंगः स्यात्; तथात्वेऽपि सर्वदानुभूतत्वाद्विद्यमानायाः सर्वगतत्वानुलब्धेरपि सर्वगतत्वमेव स्वयं नित्यं हेतुः स्यात्,

तस्मिन्नित्यं विद्यमाने सति हेत्वन्तरेणापि तन्निवारणासंभवात् । एवं च सति सर्वगतत्वस्यैव सर्वगतत्वानुपलब्धिहेतुत्वमभिमतम्; अथवा युगपद्विरुद्धकार्योत्पादनायोगात् सहैव सर्वगतत्वोपलब्ध्यनुपलब्धी विरुद्ध्येते । तत उपलब्धेरनुपब्धेर्वा किंचिन्मनः संयोगादिरूपमदृष्टरूपं च हेत्वन्तरं कल्प्यते चेत्तदा तयोर्मध्येऽन्यतरनियमः स्यात् ।

तथाहि - सर्वात्मनां सर्वगत्वेन स्वस्वाधारणादृष्टानां सर्वसाधारणत्वाददृष्टं सर्वात्मनि सर्वगतत्वस्योपलब्धेरेव नित्यं हेतुः स्यात्, अनुपलब्धेरेव वा नित्यं हेतुः स्यात् नतूभयोः, कुतः, उभयधर्मयोर्युगपदेकत्र विरोधित्वात्; एवमन्यतरनियमेन सर्वदा सर्वगतत्वस्यानियम एव दोष इति अत्र दूषणान्तरं चोपपद्यते । किं तत्-आत्मनः सर्वगतत्वे अदृष्टहेतूनां शुभाशुभकर्मणामपि सर्वसाधारणत्वापत्त्या सर्वात्मनां स्वस्वासाधारणादृष्टेनोच्चावचशरीरोपलब्धिव्यवस्थापि समूलमुत्पाटिता । किञ्च यस्याशुभादृष्टापतौ शुभादृष्टवति प्रविश्य स शुभादृष्टमेवानुभविष्यति नाशुभादृष्टम्; अतः पूर्वोक्तमात्मनोऽणुत्वं ज्ञातृत्वमेव समंजसम् ।

कर्त्रधिकरणम् ॥२-३-९॥

## कर्ता शास्त्रार्थवत्वात् ॥२-३-३३॥

ज्ञातृत्वमणुत्वं च निरूपितमात्मनः कर्तृत्वमस्ति नवेति सन्देहः अकर्तुरात्मनः कर्तृत्वं न संभवति

'अहंकारविमूढात्मा कर्ताहमिति मन्यते' (गीता. ३-२७)

'नान्यं गुणेभ्यः कर्तारम्' (गीता. १४-१९)

इत्यादिषु प्रकृतिगुणानामेव कर्तृत्वस्मरणात् । गुणात्मिकायाः प्रकृतेस्तदुत्पन्नबुद्धेश्च वा कर्तृत्वमुचितमकर्त्तुरात्मनस्तु तन्नोपपन्नमिति पूर्वः पक्षः । सिद्धान्तस्तु आत्मा कर्तैव; कुतः, शास्त्रार्थवत्त्वात् । ज्ञातुस्तस्य स्वर्गमोक्षोपायविधिबोधकशास्त्राणामर्थवत्वात्प्रयोजनवत्त्वात्; नत्वचेतनानां बुद्धिविशिष्टगुणानां तथाभूतायाः प्रकृतेश्च कर्तृत्वमुचितम् ।

'यजेत स्वर्गकामः' (आप.श्रौ.प्र.१० कं. २-१)

'मुमुक्षुर्ब्रह्मोपासीते'ति शास्त्रशिक्षा चैतनस्य ज्ञातुरेव संभवति नत्वचेतनस्य । अन्यथा शास्त्रस्य वैयर्थ्यापत्तिः स्यात् ।

'नान्यं गुणेभ्यः कर्तारम्' (गीता.१४-१९)

इत्यादिवचनवृन्दं कर्तुर्जीवात्मन उदासित्वजनकत्वेन गुणविमुक्तिबोधनपरं न तु तस्याकर्तृत्वबोधनपरम् ।

## उपादानाद्विहारोपदेशाच्च ॥२-३-३४॥

'एवमेवैष एतान्प्राणान् गृहीत्वा स्वशरीरे यथाकामं परिवर्तते' (बृह. ४-१-१८)

इति उपादानविहारोपदेशाभ्यां चायं कर्तैव । यदुक्तं बुद्धिप्रकृत्योरेव कर्तुत्वमिति तत्र बुद्धेः कर्तृत्वपक्षं दूषयति-

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥२-३-३५॥

'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' (तै. आन. अनु. ५-१)

इत्यादिना यज्ञादिक्रियायां कर्तृत्वव्यपदेशाच्चात्मैव कर्ता। विज्ञानशब्देन बुद्धेर्व्यपदेशो नात्मन इति चेन्न; तथा सति

'विज्ञानेन यज्ञं तनुते' (तै.आन.अनु.५-१)

इति निर्देशविपर्ययः स्यात् । अन्यत्र हि बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते । तथाहि-

'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ. ४-१-१७) इति ।

अतो बुद्धेः करणत्वात्कर्तृत्वं नास्तीति । प्रकृतेः कर्तृत्वपक्षं दूषयति-

## उपलब्धिवदनियमः ॥२-३-३६॥

प्रकृतेः कर्तृत्वे त्वात्मनो न भोक्तृत्वं, तस्याः सर्वजीवसाधारणत्वेन पूर्वोक्तोपलब्ध्य-नियमवत्फलानियमः स्यात् ।

## शक्तिविपर्ययात् ॥२-३-३७॥

प्रकृतेः कर्तृत्वे कर्तुरिव भोक्तृत्वमिति सैव भोक्त्री स्यात्, ततश्चात्मनो भोक्तृत्वशक्तेर्विपर्ययो हानिः स्यात्; अतो न प्रकृतेः कर्तृत्वमुचितम् ।

## समाध्यभावाच्च ॥२-३-३८॥

किञ्च प्रकृतेरेव कर्तृत्वे

'प्रकृतेरन्योऽस्मी'ति जीवस्य मोक्षसाधनभूतज्ञानजन्यसमाध्य भावप्रसंगाच्चाकर्तृत्वं नास्ति; ततो जीवात्मैव कर्ता । समाधिप्रसंगे त्वकर्तृत्वं संभवेदेव ।

## यथा च तक्षोभयथा ॥२-३-३९॥

जीवात्मनः कर्तृत्वे भोगवांछया कर्म करोति जीवोऽन्यथा न करोतीत्युभयव्यवस्था । यथा च तक्षा शिल्पी स्वेच्छया कार्यं करोति न करोति तथेति ।

बुद्धेरपि इच्छासंभवान्न पूर्वोक्तव्यवस्थेति चेन्नैवं वाच्यम्; इच्छायाश्चेतनधर्मत्वात् । तस्मादात्मनः कर्तृत्वं न बुद्धेः, नापि प्रकृतेरिति निर्णयः ।

## परायत्ताधिकरणम् ॥२-३-१०॥

## परात्तु तच्छ्रुतेः ॥२-३-४०॥

ज्ञातृत्वं कर्तृत्वं च प्रतिपादितमात्मनः। तत्कर्तृत्वं स्वायत्तं नारायणायत्तं वेति सन्देहः। स्वायत्तमिति प्राप्तम्। अन्यथा कर्मस्विष्टानिष्टरूपेषु व्यापारयन् जीवं नारायणो वैषम्यादिदोषभाजनं स्यात्। किञ्च जीवप्रवृत्तेर्नारायणायत्तत्वे तस्य कर्तृत्वाभावाद्विहितप्रतिषिद्धकर्मवैयर्थ्यं च स्यात्। तस्माज्जीवस्य स्वायत्ता प्रवृत्तिरिति प्राप्ते ब्रूमः- नारायणायत्तमेव जीवस्य कर्तृत्वं न स्वायत्तम्; तज्जीवात्मनः कर्तृत्वं तु परात् क्षराक्षरपरतयाभिहितात्परमात्मन एव सिद्ध्यति। कुतः,

'अन्तः प्रविष्टः शास्ता जनानाम्' (तै.आर. ३-११-१,२),

'यो भूतान्यन्तरो यमयति य आत्मानमन्तरो यमयति' (बृ. ५-७-३,२६ (मा.पा.)

इत्यादिश्रुतेः। यदुक्तं नारायणस्य जीवं प्रवर्तयतो वैषम्यादिकमस्य जीवस्य च विधिप्रतिषेधवैयर्थ्यमिति तत्राह-

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥२-३-४१॥

जीवः स्वेच्छया प्रवृत्तिनिवृत्तिहेतुं यत्नं करोति। स्वकर्मपाकवशेन जीवकृतप्रयत्नं प्रवृत्तिनिवृत्तिहेतुमवेक्ष्य तदनुमतिदानेन परः प्रवर्त्तयतीति विधिनिषेधावैयर्थ्यं निग्रहानुग्रहादिभ्योऽवगम्यते। यथा स्वमस्तकाद्यारोपितगुरुतरदार्वादिहरणं बालः स्वमस्तकाद्यारोपकप्रबलसहायः कुर्वन्नपि निर्बाधसबाधतया तद्भारवहनरूपे स्वप्रयत्ने विधिनिषेधयोग्यो भवति एवं जीवः स्वेन्द्रियान्तःकरणादिप्रकाशकान्तर्यामिसहायः प्रवर्त्तमानोऽपि स्वयं विधिनिषेधयोग्यो भवति। अतो जीवकृतप्रयत्नापेक्षत्वात्कर्मसु जीवस्य करणप्रकाशकत्वेन प्रवर्तकः परो न वैषम्यभाक्। जीवस्यापि स्वाधीनप्रवृत्तिसद्भावात् विधिनिषेधादि वैयर्थ्यं च न संभवतीति सिद्धमिति सूत्राशयः। अथ सूत्रपदार्थो वर्ण्यते-जीवात्मना कृतो यः प्रयत्न उद्योगस्तमपेक्षते इति कृतप्रयत्नापेक्षः परस्तु जीवप्रयत्नानुगुणबुद्धिप्रदाने वैषम्यभाग् न भवति। कुतः, विहितप्रतिषिद्धावैयर्थ्यादिभ्यः तथा। सति वेदविहितप्रतिषिद्धानां जीवकर्मणां वैयर्थ्यं न स्यात्, आदिशब्दग्राह्याणां तत्कर्मफलभूतानामनुग्रहनिग्रहादीनां चापि वैयर्थ्यं न स्यात्। अतः

'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते य एष वासाधु कर्म कारयति तं यमधो निनीषते' (कौषी. ३-६४)

इति श्रुत्यभिहिता जीवानामुन्निनीषा अधोनिनीषा च परस्य नोपपद्यते, अतोऽस्याः श्रुतेरर्थस्तूक्तसूत्रव्याख्यानुसारेण विधीयते- यो नारायणः यं साधु कर्म कर्तुमिच्छन्तं जनं एभ्योनिकृष्टेभ्यो लोकेभ्यः ऊर्ध्वं नेतुमिच्छति स एष जनेन्द्रियान्तःकरणप्रकाशकान्तर्यामी तं यदा साधु कर्म कर्तुमुद्यन्तं तदैव साधु कर्म कारयति, तत्प्रकाशितेन्द्रियान्तःकरणो जनः साधु

कर्म तु स्वयमेव करोति तत्प्रकाशिततत्वादेष कारयतीत्युक्तम्; यमसाधु कर्म कर्तुमिच्छन्तं जनं उत्कृष्टलोकेभ्योऽधो निनीषते अधो नेतुमिच्छति एष च तमसाधु कर्म कर्तुमुद्यन्तं जनं यदा तदैवासाधुकर्म कारयति पूर्ववत्कारयतीत्यस्यार्थानुसंगतिः। अन्यथाव्याख्याने कृते सति अस्याः

'साधुकारी साधुर्भवति पापकारी पापोभवति पुण्यः पुण्येन कर्मणा पापः पापेन कर्मणा'

(बृ. ६-४-५)

इत्यादिश्रुत्यन्तरस्य च परस्परव्याघातप्रसंगापत्तिः॥

अंशाधिकरणम् ॥२-३-११॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥२-३-४२॥

नित्यो ज्ञाताऽणुः कर्ता नारायणसहायापेक्षप्रवृत्तिर्जीव इति पूर्वत्र निरूपितम्; स इह नारायण एव किंवा तदंशभूत इति संशये नारायण इति पूर्वः पक्षः। नारायण एव बहुविधोपाधिवशात् जीवभावमुपगतो दृश्यते; यथैक आकाशो घटाद्युपाधिवशान्नानाकारो दृश्यते परिच्छिन्नश्च। तथाहि श्रुतिः

अयमात्मा ब्रह्म (बृह.६-४-५) इति वदति,

तस्मान्नारायण एवाज्ञानाज्जीवभावमुपगत इति प्राप्ते सिद्धान्तं ब्रूमः- जीवात्मा नारायणस्यांशः, कुतः, तच्छरीरत्वतद्व्याप्यत्वनित्यत्वाजत्वाच्छेद्यत्वादितद्धर्मवत्त्वतन्नियाम्यत्व-तत्पाल्यत्वतदधीनत्वादिनानाव्यपदेशात्। नतु खण्डत्वेन तदंशो जीवः। तथाहि

'य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्मात्मा शरीरं य आत्मानमन्तरो यमयति एष त आत्मान्तर्याम्यमृत' (बृ. ५-७-२६ (मा.पा.) इति,

'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्,
तमात्मस्थं येऽनुपश्यन्ति धीराः' (कठ.२-२-१३) इति,

'द्वावजावीशानीशौ' (श्वेता. १-९) इति

'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (श्वेता. ४-५) इति,

'अन्तः प्रविष्टः शास्ता जनानाम्' (तै.आर. ३-११-१,२) इति,

'पृथगात्मानं प्रेरितारं च मत्वा' (श्वेता.१-६) इति,

'सर्वस्य वशी सर्वस्येशानः' (बृ. ६-४-२२)

इत्यादिश्रुतिषु तच्छरीरत्वादिश्रवणात्। यदुक्तमयमात्मा ब्रह्मेत्यादिना ब्रह्मण एव जीवत्वमिति तत्राह-अन्यथा

'तत्त्वमसि' (छा.६-८-७)

'अयमात्मा ब्रह्म' (बृह.६-४-५)

इत्यादिकाद्व्यपदेशात्तयोर्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्वम्; अपि च तथैवानन्यत्वेन दाशकितवादित्वमधीयत एके आथर्वणिकाः।

'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा' (आथर्वणं ब्रह्मसूक्तम्) इति;

एवं ब्रह्मणोंऽशत्वेऽपि तेन व्याप्तस्य जीवस्य तद्व्यपदेशो युक्तः।

अच्युताक्षराच्छेद्यादिविशेषणविशिष्टस्य ब्रह्मणो विभागासंभवात्। यथा वह्निना व्याप्तस्य काष्ठादेर्वह्निव्यपदेशः तथापि तयोर्वह्निकाष्ठयोर्नाभेदः, एवं ब्रह्मणो भिन्नोऽपि जीवस्तद्व्याप्यत्वाद्ब्रह्मणोंशभूत एव तत्स्वरूपः प्रतिपाद्यते। ब्रह्मण एवाज्ञानाज्जीवभावकल्पने अज्ञत्वसर्वज्ञत्वादिधर्मबोधकानेकश्रुतिविरोधादिबहुदोषप्रसक्तिर्दुर्वारा।

## मन्त्रवर्णात् ॥२-३-४३॥

'पादोऽस्य विश्वाभूतानि' (पु.सू. ३)

इति मन्त्रवर्णाच्च ब्रह्मांशो जीव उक्तरीत्या पादशब्दोंऽशवाची।

## अपि स्मर्यते ॥२-३-४४॥

'ममैवांशो जीवलोके जीवभूतः सनातनः' (गीता. १५-७) इति,

जीवस्य परमात्मांशत्वं स्मर्यते च नित्यत्वाजत्वाच्छेद्यत्वादिधर्मैर्जीवस्य परमात्मसमानत्वात् परमात्मांशत्वं वदन्ति श्रुतिस्मृतयः। तस्य ब्रह्मस्वरूपांशत्वे तु तद्गतदोषा ब्रह्मण्येव प्रसज्येयुरित्याशङ्क्याह-

## प्रकाशादिवस्तु नैवं परः ॥२-३-४५॥

तुशब्दो ब्रह्मैकदेशांशशङ्कानिवृत्यर्थः प्रकाशस्तेज आदिर्मुख्यो येषां ते प्रकाशादयो मणितारकादयस्तद्वत्ततुल्यं जीवात्मवस्तु यथाऽल्पप्रकाशवत्वा ल्पज्ञत्वानाद्यविद्याबद्धत्वकर्माधीनत्वेन्द्रियारामत्वादिदोषबहुलं भवति एवं तथा न परःअनवधिकातिशयप्रकाशवत्त्व-सर्वज्ञत्वसत्यसंकल्पत्वास्पृष्टसकलदोषत्वाद्यसंख्यगुणगणनिधिः परमात्मा पुरुषोत्तमो भवतीत्यर्थः।

## स्मरन्ति च ॥२-३-४६॥

'अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुरा' (भा. ८-२४-४६) इति,

'अनाद्यविद्यायुक्तस्य पुरुषस्य' (भा. ११-२२-१०) इति

'बन्धोऽस्याविद्ययानादिः' (भा. ११-११-४) इति

'तयोरन्यः पिप्पलं स्वाद्वत्ति' (मुण्ड-३-१-१/श्वेता.४-६)

इत्यादिषु जीवात्मदोषान् स्मरन्ति मुनयः।

'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तदृष्टिः।
अनन्तशक्तिश्च विभोर्विभुज्ञाः षडाहुरङ्गानि महेश्वरस्य'॥(वायु. पूर्वार्धे १२-३१) इति

'सत्यव्रतं सत्यपरम्' (भा. १०-२-२६) इति

'सत्यं शौचं दया क्षांतिः त्यागः संतोष आर्जवम्' (भा. १-१६-२६) इत्यारभ्य

'एते चान्ये च भगवन्नित्या यत्र महागुणाः।
प्रार्थ्या महत्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित्'॥ (भा. १-१६-२९)

इत्यादिषु च परमात्मगुणगणान् स्मरन्ति। अतः शरीरभूतस्य जीवस्य दोषाः शरीरिणं परमात्मनं न स्पृशन्ति। एवं जीवपरयोरंशांशिभावेऽपि स्वरूपस्वभावादिभिरनादिरत्यन्तश्च भेदः सिद्धः।

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥२-३-४७॥

सर्वेषां जीवानां ब्रह्मशरीरत्वेन सामान्येऽपि तेषां मध्ये केषाञ्चिज्जीवानां स्पर्शाध्ययनादेरनुज्ञा-आज्ञा केषाञ्चित्स्पर्शादेः परिहारो-निषेधः कथमिति चेत्तत्रोच्यते-ब्राह्मणादिदेहसंबंधात्तदुपपत्तिः। यथाग्न्यादेः श्रोत्रियागारश्मशानादिसंबन्धात्तद्वत्।

## असन्ततेश्चाव्यतिकरः ॥२-३-४८॥

अव्यतिरेक इति पाठान्तरम्। जीवानां प्रतिशरीरं भिन्नत्वात्तत्र तत्राणुत्वेन युक्तत्वाच्च असंततेः-देहान्तरेष्वव्याप्तेर्हेतोः स्थूलोऽहं कृशोऽहं सुख्यहं दुःख्यहं ब्राह्मणोऽहं क्षत्रियोऽहमिति देहाभिमानिनां सांसारिकज्ञानसुखादेः अव्यतिकरोऽव्यतिरेकोऽभिन्नत्वं भवति। अत्रायमाशयो भवति-सर्वेषां देहाभिमानिनामक्षरब्रह्मात्मभावप्राप्त्यभावस्य स मानत्वात् सांसारिकं ज्ञानसुखादिकं परिमितं भवति; ततः परब्रह्मोपासनज्ञानाधिक्येनविगलितदेहाभि-मानानामुपगताक्षरब्रह्मात्मभावानां मुक्तात्मनां निरतिशयनित्यज्ञानसुखादिप्राप्त्या सांसारिकज्ञानसुखादिभ्यो व्यतिरेक इति सिद्धम्। अज्ञानोपाधिभ्यां ब्रह्मैव संबन्धमिति चेत् तत्र न व्यवस्थेत्याह-

## आभासा एव च ॥२-३-४९॥

सत्यमिथ्योपाधिभ्यां बद्धस्य ब्रह्मण एव जीवभाव इति पक्षद्वयेऽपि युक्तय आभासा एव-मरीचिकाजलतुल्या एव सन्ति। तथाहि-

## अदृष्टानियमात् ॥२-३-५०॥

सत्यमिथ्योपाधिभ्यां ब्रह्मणः सकाशात् जीवात्मनां कृतत्वे हि ब्रह्मण एवाज्ञानमुपाधिश्च।

तत्राज्ञानकृतेनादृष्टेनात्रानियमः अज्ञानेन ब्रह्मणो जीवत्वं ज्ञानेन पुनर्ब्रह्मत्वं पुनरेवं तस्य जीवत्वं पुनरेवं तस्य ब्रह्मत्वमित्थं नियमाभावः । अतस्ता युक्तय आभासमात्रा एव सन्ति ।

'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' (गीता. १५-६)

इति स्मृतेर्विरोधाच्च अज्ञानकृतभेदवादो मिथ्या । किञ्च-

**अभिसन्ध्यादिष्वपि चैवम् ॥२-३-५१॥**

अभिसन्ध्यादिषु ब्रह्मणो जीवभावप्रापकस्यादृष्टहेतोरुपाधिरभिसन्धानादिषु एवमेव नियमाभावश्च । एकस्य ब्रह्मणो हि द्वितीयाभावपक्षे वस्त्वन्तराभावादुपाधिरपि वक्तुमशक्यः । अत उपाधिकृतभेदवादपक्षोऽपि मिथ्या । पुनराशङ्क्य परिहरति-

**प्रदेशादिति चेन्नान्तर्भावात् ॥२-३-५२॥**

प्रदेशात्-उपाधिसंबंधिब्रह्मप्रदेशभेदात् । उपाधिकृतजीवव्यवस्था सत्येति चेन्न, कुतः, अन्तर्भावात्-उपाधिषु नष्टेषु सत्सु सर्वप्रदेशानां ब्रह्मान्तर्भावात्; तथा सति सत्यमिथ्योपाधिभ्यां परिच्छिन्नस्य ब्रह्मणो जीवत्वं तन्नाशे पुनर्ब्रह्मत्वं तत्संबन्धे पुनर्जीवत्वमिति पक्षद्वयेऽपि न व्यवस्था संभवति । ततो जीवब्रह्मणोरनादित्वमनादिभेदश्च ब्रह्मणः शरीरतया व्याप्ततया च नित्यत्वाजत्वाच्छेद्यत्वादि तद्धर्मतया च जीवोंऽशभूतो नतु सकलत्वेनेति सिद्धम् ॥

इति
श्रीशुद्धेकान्तधर्मप्रवर्त्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
द्वितीयाध्यायस्य तृतीय पादः ॥ ३ ॥



## द्वितीयाध्याये चतुर्थपादः ।

प्राणोत्पत्त्यधिकरणम् ॥२-४-१॥

### तथा प्राणाः ॥२-४-१॥

पूर्वत्राकाशादीनि भूतानि समुत्पद्यन्ते इति निरूपितम्;

जीवो नित्योऽजोऽणुर्ज्ञाताऽनाद्यज्ञानेनानादिबद्ध इति च । इह भूतानामिवेन्द्रियाणां ब्रह्मण उत्पत्तिः उत जीववन्नित्यत्वमिति विचार्यते । यथा नित्यत्वान्न जीवः समुत्पद्यते तथेन्द्रियाण्यपि । जीववदमीषामपि नित्यत्वे श्रुतिसंभवात् । तथाहि

'असद्वा इदमग्र आसीत् (तै.उ.आन. अनु. ७-१)

'ऋषयो वा व ते' अग्रेऽसदासीत् तदाहुः, के ते ऋषय' इति, प्राणा वा ऋषय'

(श. ब्रा. ६-१-१)

इति प्रलयकाले प्राणानामिन्द्रियाणां स्थितिराम्नायते । प्राणास्ततो ब्रह्मणो नोत्पद्यन्त इति प्राप्ते ब्रूमः सिद्धान्तम् ।

### गौण्यसम्भवात्तत्प्राक् श्रुतेश्च ॥२-४-२॥

अत्र नकारोऽध्याहार्यः । तत्प्राक्-तेषां प्राणानां सृष्टेः प्राक् नावस्थितिः, किन्तु नारायणस्यैव 'सदेव सौम्येदमग्र आसीत्' (छा.६-२-१) इति श्रुतेः ।

अतः ऋषिशब्दः प्राणशब्दश्चनारायण एव वर्तते, तस्य बहुत्वासम्भवात्; बहुवचनश्रुतिस्तत्र गौणी; ततो ब्रह्मण एव प्रागवस्थितिश्रुतिर्नेन्द्रियाणाम् । युक्त्यन्तरमाह-

### तत्पूर्वकत्वाद्वाचः ॥२-४-३॥

वाचः नामरूपविभागसृष्टिबोधकवाण्याः सकाशात् तत्पूर्वकत्वात्

'एको ह वै नारायण आसीत्' (महो. १-१)

इति नारायणबोधकवाण्या तस्यैव पूर्वकत्वात्प्राथम्यात् प्राणशब्दो नेन्द्रियविषयः किन्तु परमात्मविषय एव ।

सप्तगत्यधिकरणम् ॥२-४-२॥

### सप्तगतेर्विशेषितत्वाच्च ॥२-३-४॥

पूर्वत्र सूक्ष्मावस्थावस्थिता । चिदन्तर्यामिब्रह्मकार्यतया सिद्धानीन्द्रियाणि कियत्संख्यानीति संदेहे सति सप्तेति पूर्वः पक्षः । कुतः

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह, बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्'

(कठ. २-३-१०)

इति सप्तानामेवावगतेः ।

'सप्त प्राणाः प्रभवन्ति' (तै.महा.अनु.१०-२)

इत्यादिश्रुतौ सप्तेति विशेषितत्वाच्चेत्येवं प्राप्ते ब्रूमः-

## हस्तादयस्तु स्थितेऽतो नैवम् ॥२-३-५॥

नैवं - सप्तैवेन्द्रियाणीति न मन्तव्यम्; हस्तादयोऽपीन्द्रियाण्येव; देहान्तःस्थिते जीवे तेषामुपकरणत्वाविशेषात्; अत इन्द्रियाण्येकादशैव

'दशेमे पुरुषे प्राणा आत्मैकादशेति' (बृह. ५-९-४)

'इन्द्रियाणी दशैकं च' (गीता. १३-५)

इति श्रुतिस्मृतिभ्यां ज्ञायन्ते । आत्मशब्दोऽन्तः करणवाची । आत्मा मन इति पक्षे बुद्ध्यादयस्तद्वृत्तयः ।

अणुत्वाधिकरणम् ॥२-४-३॥

## अणवश्च ॥२-४-६॥

एकादशेन्द्रियाणि सर्वगतानि किंवाणूनीति संदेहे चक्षुरादीनां दूरगतवस्तुग्रहणसामर्थ्यात्सर्वगतानीति प्राप्ते अणूनीत्युच्यन्ते; कथमिति चेत्तत्राह-

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती' (बृह. ६-४-२)

इति श्रवणात् न सर्वगतानीन्द्रियाणि सर्वगतत्वे हि न तेषां गतिःसंभवति- चक्षुरादेर्दूरगतवस्तुग्रहणसामर्थ्यं सर्वगतत्वेन न भवति, किन्तु तेजोरूपत्वेनाणुत्वेन भवति । शीघ्रगतिमत्त्वादिन्द्रियाण्यणून्येव ।

प्राणश्रैष्ठ्याधिकरणम् ॥२-४-४॥

## श्रेष्ठश्च ॥२-४-७॥

'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृह. ६-४-२)

इति सर्वप्राणश्रेष्ठतया श्रूयमाणः पञ्चवृत्त्यात्मा प्राणवायुर्ब्रह्मण उत्पद्यते नवेति संशये न जायते प्राणवायुः ।

'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः,
आनीदवातं स्वधया तदेकं तस्माद्वान्यं न परः किञ्च नास'

(ऋग्वेद. मण्डल.१० सूक्त. १२९-२, तै.ब्रा. २-८-९)

इत्यत्र आनीच्छब्देन सृष्टेः प्रागपि प्राणचेष्टायाः श्रवणादिति प्राप्ते वदामः- प्राणवायुरपि जायते एव; आनीच्छब्दो न प्राणस्य व्यापारं वक्ति; अवातमिति तन्निषेधात्; किंतु दिव्यमूर्तेर्ब्रह्मणः सत्त्वमेव ब्रूते; अतो न प्राणानादित्वं सम्भवति। अयं प्राणवायुरूत्पत्तिमान् भवतु, स तु सामान्यकरणवृत्तिः प्राणाद्यवयवः पञ्चेति

तन्त्रान्तरोक्तरीत्या समस्तेन्द्रियवृत्तिरूपोऽवगम्यते; अतस्तद्वृत्तिभ्यो वा यः प्राणः स वायुरितिश्रुत्या भूतवायोर्वा न पृथग्भूत इत्यत आह-

### न वायुक्रिये पृथगुपदेशात् ॥२-४-८॥

प्राणोऽयं न वायुः, न चेन्द्रियवृत्तिरूपक्रियाभूतः,

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'

(मुण्ड. २-१-३)

इतिश्रुत्या पृथगुपदेशात्। ततो वायोरिन्द्रियवृत्तिभ्यश्चान्य एव प्राणः। वायोरन्यत्वेऽपि न तस्य भूतान्तरत्वमित्याह-

### चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥२-४-९॥

तुशब्दो भूतान्तरशङ्कानिवर्तकः। नायं भूतान्तररूपः किन्तु वायुरेवावस्थान्तरं प्राप्तः। किञ्च अयं चक्षुरादिवत् जीवात्मोपकरणम्; तच्चोपकरणत्वं उपकरणरूपैरिन्द्रयैः सह शिष्ट्यादिभ्यः शासनादिभ्यो विज्ञायते; शिष्टिः शासनमुपदेश इति यावत्। प्राणसंवादादिषु चक्षुरादिकरणैः सहायं प्राण उपदिश्यते इति सूत्रमपि व्याख्यातम्।

### अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥२-४-१०॥

अकरणत्वमक्रियत्वं प्राणस्य जीवोपकारक्रियारहितत्वादपि। अस्योपकारविशेषरूपया शरीरेन्द्रियधारणादिरूपया च क्रियया जीवोपकरणोक्तो न दोषः। तथाहि दर्शयति श्रुतिः प्राणसंवादे

'यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' (छा. ५-१-७) इति। कुत एतत् प्रजापतिवचनानन्तरं वागाद्युत्क्रमणेऽपि देहस्येन्द्रियाणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे देहेन्द्रियशैथिल्याभिधानात्।

### पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥२-४-११॥

प्राण एक एव स्ववृत्तिभिः प्राणापानादिपञ्चभिः संज्ञाभेदभाग्भवति। यथा मन एकमेव कामादिभिः स्ववृत्तिभिः संज्ञाभेदं भजति-कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा-

धृतिरधृतिर्भीर्धीह्रीरित्येतत्सर्वं मन एवेति वचनात्, तथा स पञ्चवृत्तिभिः संज्ञाभेदं भजति, अतः प्राण एक एव पञ्चभूतान्तर्वर्ती वातादीन्द्रियवृत्तिर्वायोश्च व्यतिरिक्तो जीवोपकारक इति व्यपदिश्यते ।

प्राणाणुत्वाधिकरणम् ॥२-४-५॥

## अणुश्च ॥२-४-१२॥

पञ्चवृत्तिरयं प्राणवायुरिन्द्रियवदणुर्विभुर्वेति सन्देहे सति नाणुरयम्

'स म एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' (बृह. ३-३-२२),

'प्राणे सर्वं प्रतिष्ठितं सर्वं हीदं प्राणेन वृतमि'तिश्रुतेः सर्वावधारकतया व्यापी प्राण इति प्राप्ते ब्रूमः - अणुरेव प्राणवायुः

'प्राणमनूत्क्रामन्तम्' (बृह.६-४-२)

इति तस्य गतिश्रवणात् । आधिदैविकस्य हिरण्यगर्भप्राणस्य समष्टिस्वरूपस्य विभुत्वं न व्यष्टिरूपस्येति न विरोधः । तस्मादणुरेव प्राणः पञ्चवृत्तिरिति ।

ज्योतिराद्यधिकरणम् ॥२-४-६॥

## ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥२-४-१३॥

'इहादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' (ऐ. १-२-४)

इत्यादिना चक्षुरादीनामादित्याद्यधिष्ठानं श्रूयते, जीवस्य च रूपादिग्रहणाय तदधिष्ठानमुपदिश्यते । एवमेष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते इति तदिदं जीवेन सहेन्द्रियाधिष्ठानम् । आदित्यादीनां नारायणायत्तं उत स्वतन्त्रमिति संशये

'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' (ऐ. १-२-४)

इत्यादिषु स्वातन्त्र्यश्रवणादादित्याद्यधिष्ठानं न नारायणयत्तमिति पूर्वः पक्षः । सिद्धान्तुस्तु नारायणायत्तमिन्द्रियाद्यधिष्ठानमादित्यादीनाम्; कुतः,

'य आदित्यमन्तरो यमयति' (बृ. ५-७-१३,२६)

'आत्मानमन्तरो यमयति' (बृ. ५-७-२६ (मा.पा.)

इत्यादिश्रवणान्नारायणसंकल्पपूर्वकत्वाञ्च सर्वप्रवृत्तीनां तस्मादिन्द्रियाद्यधिष्ठानं जीवस्यादित्यादीनां च नारायणायत्तमेव ।

अथ सूत्रशब्दार्थवर्णनम्-प्राणवता जीवेन सह ज्योतिराद्यधिष्ठानं तु ज्योतिरादीनामादित्यादीनां चक्षुराद्यधिष्ठानं तु तदामननात् -तस्य नारायणस्य आभिमुख्येन मननं संकल्पस्तस्मात् नारायणसंकल्पादेव भवतीत्यर्थः,

'आदित्यमन्तरो यमयति आत्मानमन्तरो यमयति' (बृ. ५-७-१३,२६) इत्यादिशब्दात् ।

## तस्य च नित्यत्वात् ॥२-४-१४॥

तस्योक्तस्य सर्वस्य च नारायणनियम्यत्वं नित्यमेव । अतोऽपि नारायणसंकल्पायत्तमेवैषामधिष्ठातृत्वम् ।

इन्द्रियाधिकरणम् ॥२-४-७॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥२-४-१५॥

इह पूर्वोक्तानि वागादीनीन्द्रियाणि प्राणवृत्तिभ्यो भिन्नानि नवेति संशये मुख्यप्राणव्यवहारसामान्यात् प्राणशब्दनिर्दिष्टानि तानि; तस्मात्प्राणादनन्यानीन्द्रियाणीति पूर्वपक्षे प्राप्ते मुख्यप्राणादन्यान्येवेन्द्रियाणीति सिद्धान्तं ब्रूमः । श्रेष्ठात्प्राणात्ते प्राणाः अन्यत्रान्ये प्राणशब्दनिर्दिष्टानीन्द्रियाण्यन्यान्येव तद्व्यपदेशात्

'इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' (गीता. १३-५)

इत्यादिवचने तेषामिन्द्रियाणामेव पृथग्व्यपदेशात् ।

## भेदश्रुतेर्वैलक्षण्याच्च ॥२-४-१६॥

'एतस्माज्जायते प्राणा मनः सर्वेन्द्रियाणि च' (मुण्ड-२-१-३)

इति प्राणेन्द्रियाणां भेदेनोत्पत्तिश्रवणात् इन्द्रियाद्युपरमेऽपि प्राणवृत्त्यनुपरमरूपं वैलक्षण्यं च दृश्यते, अतोऽपि प्राणवृत्तिभ्यो भिन्नानीन्द्रियाणि ।

संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥२-४-८॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२-४-१७॥

पूर्वं भूतेन्द्रियादीनां समष्टिव्यष्टिक्षेत्रज्ञशरीराणां च कर्तृत्वं परस्मान्नारायणादेवेत्युक्तं, तदनन्तरं जीवात्मनां स्वेन्द्रियाधिष्ठानं नारायणायत्तमिति च स्मारितम्; इदानीं स्थावरजंगमात्मकव्यष्टिसर्गः किं समस्तब्रह्माण्डात्मकात्पुरुषाद्वा परब्रह्मसंज्ञाद्धरेरिति सन्देहः । केवलात्समस्तब्रह्माण्डात्मकात्पुरुषादिति पूर्वः पक्षः ।

'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरणवाणि' (छा. ६-३-२)

इति श्रुतेः जीवस्य परमात्मांशत्वेनाहं व्याकरवाणीति उत्तमपुरुषनिर्देशोऽपि कथंचिदुपपद्यते । सिद्धान्तस्तु 'नामरूपे व्याकरवाणी'ति तासां त्रिवृत्तं त्रिवृत्तमेकैकां करवाणीति त्रिवृत्करणं कुर्वत एव नामरूपव्याक्रियोपदेशात् परमात्मन एव नामरूपव्याकरणरूपः स्थावरजंगमात्मकव्यष्टिसर्गो भवतीति युक्तम् त्रिवृत्करणं तु ब्रह्माण्डात्मकपुरुषेण न शक्यं, ब्रह्माण्डात्मकपुरुषोत्पत्तेश्चतुर्विंशतितत्वात्मकसर्गोत्तरकालभावित्वात् त्रिवृत्कृतैरेव

तेजोऽबन्नैरण्डसर्गसंभवाच्च। तथाहि स्मर्यते

'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन्जज्ञे स्वयं ब्रह्म' (मनु. १-९) इति;

'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना।

नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ (वि.पु. १-२-५२)

समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। (वि.पु. १-२-५३)

महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते'॥ (वि.पु. १-२-५४) इति।

तस्माद्ब्रह्माण्डात्मकपुरुषरूपशरीरकात् पुरुषोत्तमादेव व्यष्टिसर्गः। एवं च सति 'परब्रह्माहं व्याकरवाणी' त्युत्तमपुरुषनिर्देशः समीचीनः। अनेन जीवेनेति भिन्ननिर्देशोऽपि आत्मना स्वशरीरभूतेन पुरुषरूपजीवेनेत्यन्वयादुचितः।

पुरुषवाचकजीवशब्दस्तेजः प्रभृतिशब्दवज्जीवशरीरकपरब्रह्मवाचीत्यभिहितम्। इत्थं जीवेनात्मनेत्येकत्वनिर्देशः। तथा अहं प्रविश्येति, अहं नामरूपे व्याकरवाणीति समानकर्त्तृत्वव्यपदेशश्च तस्मिन्मुख्यः। अथ सूत्रार्थवर्णनम्-तुशब्दः पूर्वपक्षव्यावर्तकः संज्ञामूर्त्तिक्लृप्तिस्तु नामरूपविभागकल्पनं तु परमात्मन एव कर्म, कुतः त्रिवृत्कुर्वतः त्रिवृत्क्रियां विदधतस्तस्यैव नामरूपव्याकरणोपदेशात्। यथा

'खलु सौम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहि' (छा. ६-४-७) इति,

'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' (छा. ६-५-१)

इत्यादिना चतुर्मुखसृष्टपुरुषादिनां शरीरेषु त्रिवृत्प्रकारो ह्युपदिश्यते; तमेव दर्शयति-

## मांसादिभौमं यथाशब्दमितरयोश्च ॥२-४-१८॥

'अन्नमशितं त्रेधा विधीयते' (छा. ६-५-१)

इत्यादौ प्राक् निरूपितात् त्रिवृत्करणादर्थान्तरभूत एवाण्डान्तर्वर्तिपुरुषोपभुक्तान्नादीनां परिणामप्रकार उच्यते नतु त्रिवृत्करणम्। अन्यथा हि मांसमनसोः पुरीषादणुत्वेनाणिष्ठत्वेन चाप्यत्वतैजसत्वप्रसंगः, तथा सत्यन्नमशितं त्रेधेति भूमेरेव त्रैविध्योपक्रमः

'अन्नमयं हि सौम्य मनः' (छा. ६-५-४)

इति मनसो भौमत्वं च विरुध्येत, तथेतरयोरप्तेजसोस्त्रैविध्यं विरुध्येत। तमेव परिणामप्रकारमाह- मांसादिभौमं यथाशब्दमितरयोश्चेति यथाशब्दमन्नमशितमिति श्रुतिशब्दमनतिक्रम्य मांसादिभौमं पुरीषवन्मांसमनसी अपि भौमे इष्येते इत्यर्थः। इतरयोरप्तेजसोरपि कार्यत्रयं यथाशब्दं बोध्यम्; तथा हि मूत्रवल्लोहितप्राणावाप्यौ; तथास्थिवन्मज्जावाचौ तेजस्यौ; प्राणस्य जलायत्त स्थितित्वेन जलकार्यत्वोक्तिः, तथा मनसोऽप्यन्नभक्षणात्स्वास्थ्येन तत्कार्यत्वोक्तिस्तथा

वाचोऽग्निदेवताप्रकाश्यत्वेन तेजः कार्यत्वोक्तिरिति ज्ञेयम् ।

नन्वन्नमशितमापः पीतास्तेजोऽशितमिति त्रिधा त्रिधा परिणतानामन्नादीनां मध्ये एकैकस्य पूर्वमेव तेजोऽबन्नात्मकत्वेन त्रिवृत्कृतस्य प्रत्येकमन्नमापस्तेज इति संज्ञा कथमुच्यते इत्यत आह-

**वैशेष्यात्तु तद्वादस्तद्वादः ॥२-४-१९ ॥**

सत्यपि त्रिवृत्करणे मनुष्यादौ देवादीनां व्यवहारसिद्ध्यर्थे प्रतिशरीरमन्नाद्यन्यतमभूयस्त्वेन वैशेष्यात् विशेषभावात्तु तद्वादोऽन्नादिवादः । द्विरुक्तिस्त्वध्यायसमाप्तिप्रकाशिका । तस्मात्त्रिवृत्कुर्वतः परस्माद्ब्रह्मणः

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविशष्य नामरूपे व्याकरवाणि'

(छा. ६-३-२) इति

पुरुषरूपजीवेनात्मना चेतनाचेतनानां समस्तनामाकृतिसर्गोऽन्नादित्र्यात्मक इति समञ्जसम् ।

इति

श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिवरचित्ते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने

द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः ॥४॥

समाप्तश्चायं द्वितीयाध्यायः ॥२॥



श्रीसहजानन्दाय नमो नमः

## तृतीयाध्याये प्रथमपादः ।

### तदन्तरप्रतिपत्त्यधिकरणम् ॥३-१-१॥

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥३-१-१॥**

द्वितीयेऽध्याये प्रथमाध्यायसिद्धस्य ब्रह्मकारणवादिसमन्वयस्य विरोधः परिहृतः। तथाहि द्वितीयस्य प्रथमे पादे सांख्यादितर्कविरोधः परिहृतः, तस्य द्वितीये प्रधानकारणवादादिषु तर्कविरोधः प्रदर्शितः, तृतीये श्रुत्युक्तभूतसृष्ट्यवान्तरविरोधपरिहारपूर्वकं जीवश्च नित्यत्वादिधर्मैर्निरूपितः, चतुर्थे प्राणेन्द्रियाणां स्वरूपं ब्रह्मणः सकाशात्तेषामुत्पत्तिमप्यभिधाय सर्वेषां नामरूपव्याकरणं च निरूपितम्। अस्य तृतीयाध्यायस्य प्रथमपादे नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणं क्रियते तस्य द्वितीये तदवस्थानिरूपणपूर्वकं नारायणस्य स्वरूपलक्षणमुच्यते; तृतीये तदुपासनाविशेषाणां गुणोपसंहारः, चतुर्थे त्वाश्रमादिधर्म इति विवेकः। अस्याध्यायस्य प्रथमाधिकरणे जीवो लोकान्तरगमनागमनेषु देहान्तरप्राप्तये भूतसूक्ष्मैर्वेष्टितो याति उतावेष्टित इति संशयः। जीवो देहान्निर्गच्छन् भूतसूक्ष्मैर्भाविशरीरबीजैरपरिष्वक्त एव याति, भूतानां सर्वत्र सुलभत्वेन भूतरक्षणायासस्यापार्थकत्वात् इति प्राप्तेऽधिकरणार्थेन सह सिद्धान्तं ब्रूमः - संज्ञामूर्त्तिक्लृप्तिरित्यतो मूर्त्तिशब्दस्तच्छब्देनानुकृष्यते। स च देहवाची। तदन्तरप्रतिपत्तौ जीवो देहान्तरप्राप्तौ भूतसूक्ष्मैः परिष्वक्तो रंहति प्रयातीति पञ्चाग्निविद्यायां प्रश्ननिरूपणाभ्यां प्रश्नोत्तराभ्यामवगम्यते। तथाहि

'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा. ५-३-३) इति प्रश्नः। इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति स उल्बावृतो गर्भ इत्युत्तरं च। तत्र चायमर्थः- सपिण्डितः ब्राह्मणादिदेहस्थो जीवः स्वाहादानादिकर्म कृत्वा तत्फलभोगायास्माद्देहादुत्थाय गच्छन्नेतद्देहस्थाभिरद्भिर्भूतान्तरसंसृष्टाभिः सूक्ष्माभिः परिष्वक्तोऽग्नित्वेन रूपितं द्युलोकं प्राप्य ताभिरेवामृतमयदेहाकारेण परिणताभिरद्भिः परिष्वक्तो देवभावमुपगम्य देवैः सह भोगविशेषाननुभूय भुक्तावशिष्टेन ब्राह्मणादिदेहप्रापकेण कर्मणा सह पुनरिममागमिष्यन् कर्म कर्तुं ताभिरेव परिष्वक्तोऽग्नित्वेन रूपितं पर्जन्यं प्राप्य वर्षधाराभिः सहाग्नित्वेन रूपितां पृथिवीमुपगम्य व्रीह्यादिसस्येन भोजनीयान्नाकारपरिणतेन सहाग्नित्वेन रूपितं पुरुषं प्राप्य तत्र शुक्राकारपरिणताभिस्ताभिरद्भिः परिष्वक्तोऽग्नित्वेन रूपितां योषितं प्राप्य तत्र देहाकारपरिणताभिः पुरुषशब्दाभिलपनीयाभिस्ताभिः परिष्वक्तः कर्मानुरूपब्राह्मणादिदेहेन जायत 'इति तदेतत्सर्वमुत्तरत्राभिव्यज्यते। तस्मात्पुरुषो भूतसूक्ष्मवेष्टित एव देहान्तरं प्राप्नोतीति।

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥३-१-२॥

सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वाद्भूतान्तरसंसृष्टा एव आपस्तासां भूयस्त्वादप्शब्देनोच्यन्ते; अतः पञ्चम्यामाहुतावाप इत्यत्र केवलाप्शब्दग्रहणेऽपि न विरोधः ।

## प्राणगतेश्च ॥३-१-३॥

'तमुत्क्रामन्तं प्राणोऽनुत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृह.६-४-२) इति स प्राणेन जीवेन सहेन्द्रियगतेरिन्द्रियाश्रयत्वेन सूक्ष्मदेहगमनमपि प्रतीयते । तथाहि स्मर्यते-

'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' (गीता. १५-८) इति ॥

अतोऽपि सूक्ष्मदेहवेष्टित एव जीवो यातीति आशङ्क्य परिहरति-

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥३-१-४॥

यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं घ्राणश्चक्षुरादित्यमि'त्यादौ इन्द्रियाणामग्न्याद्यभिगमः श्रूयते; ततो न जीवेन सहेन्द्रियाणां गमनं, येन सूक्ष्मदेहगमनप्रतीतिः स्यात्; अतः

'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृह.६-४-२)

इति जीवेन सहेन्द्रियगतिश्रुतिरन्यथा नेयेति चेन्न, वागाद्यभिमानिदेवतासु वागादिप्राप्तिवाक्यानां भाक्तत्वात् गौणत्वात् ।

'ओषधीर्लोमानि वनस्पतीन् केशाः' (बृ. ५-२-१३)

इत्यनश्यद्भिर्लोमादिभिः सह पाठाद् गौणत्वम्, अतो जीवेन सहेन्द्रियाणां गमनमेव भवतीति निश्चीयते ।

## प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥३-१-५॥

प्रथमे द्युलोकाग्नौ अपामश्रवणात् भूतान्तरसंसृष्टां आपो न गच्छन्ति

'तस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा. ५-४-२)

इति होम्या श्रद्धैव हि श्रूयत इति चेन्न, हि यतस्ता एव आप एव श्रद्धाशब्देन प्रतिवचनोपक्रमे तत्रोच्यन्ते, कुतः

'वेत्थ यथा पञ्चम्यामाहुतौ' (छा. ५-३-३) इति प्रश्नस्य

'यो देवाः श्रद्धां जुह्वति' (छा. ५-४-२) इति प्रतिवचनोपक्रमस्तद्गतेन श्रद्धाशब्देन द्युलोकाग्नौ होम्यत्वेनास्यैवोपपत्तिः, अन्यथा प्रश्नप्रतिवचनयोरसंगत्यापत्तिः स्यात्; श्रद्धाशब्दश्चाप्सु युज्यते 'श्रद्धा वा आप' इति श्रुतेः पुनराशङ्क्य परिहरति-

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥३-१-६॥

'आपः पुरुषवचसो भवन्ति' (छा. ५-३-३) इति

'देवाः श्रद्धां जुह्वति' (छा. ५-४-२) इत्यादिषु प्रश्नप्रतिवचनयोराप एव श्रूयन्ते; जीवस्याश्रुतत्वात् न तत्परिष्वक्तो जीव इति चेन्न; उत्तरत्र

'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षं अपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति' (छा. ५-१०-३),

'मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसं एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' (छा. ५-१०-४),

'तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति' (छा. ५-१०-५),

'अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवति' (छा.५-१०-६)

इति वाक्ये द्युलोके सोमराजशब्दोक्तामृतमयदेहवैशिष्ट्येन पुण्यफलमनुभूय पुण्यकर्मावसाने पुनरिहागत्य गर्भं प्राप्नुवतामिष्टादिकारिणां प्रतीतेः पञ्चाग्निविद्यायामपि । इहापि तेषामेव

'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति' (छा.५-४-२)

इत्यत्र यत्र सोमराजशब्देन प्रत्यभिज्ञानात् । तस्मात्प्रश्नप्रतिवचनयोरप्यद्भिः परिष्वक्तस्तच्छरीरको जीव आप इति गम्यते ।

## भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥३-१-७॥

'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' (छा. ५-१०-४)

इति सोमराजभावापन्नस्य देहस्यैव देवैर्भक्ष्यमाणत्वश्रवणान्नासावप्संज्ञो जीव इति चेत्तत्राह- केवलेष्ट्यादिकारिणां अनात्मवित्त्वात् देहाभिमानित्वात् एतत् देवभक्ष्यत्ववचनं भाक्तं वा गौणमेव-अनात्मज्ञत्वेन देवोपकरणभावाभिप्रायपरमित्यर्थः । तथाहि

'पशुरेव स देवानाम्' (बृह. १-४-१०)

इति श्रुतिरनात्मविदां पशुवद्देवोपकरणत्वं दर्शयति । तस्मादात्मविदां नारायणोपकरणत्वं अनात्मविदां देवोपकरणत्वमिति मंतव्यम् । अतः सर्वथा जीवो भूतसूक्ष्मवेष्टित एव रंहतीति सिद्धम् ।

## कृतात्ययाधिकरणम् ॥३-१-१॥

### कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥३-१-८॥

सर्वत्र भूतसूक्ष्मशरीरयुक्त एव जीवः स्वर्गादिकमुपेत्य देवादिशरीरे निजकर्मानुगुणं भोगं प्राप्नोतीति सिद्धम् । इह त्विष्ट्यादिकर्मभोगानन्तरं स जीवः पुनरिमं लोकं सकर्मशेषोऽवतरति निःशेषभुक्त कर्मा वेति संशयः । तथा सति पुरुषो निरनुशय एव स्वर्गादिमं लोकमवरोहतीति युक्तम् । अनुशयो नाम कर्मशेषः जीवमनुशेत इति व्युत्पत्तेः । न स्वर्गादवरोहतोऽनुशयः संभवति; अनुशयफलस्य तत्र भुक्तत्वात्

'यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' (छा. ५-१०-५)

इति श्रूतिस्तद्विषया ।

अत्र संपातः कर्मसमूहः, संपातमनतिक्रम्येति यावत्संपातमित्युच्यते; अतो निःशेषं कर्मफलं भुक्त्वा कर्मरहित एव स्वर्गादवरोहति जीव इति पूर्वः पक्षः । सिद्धान्तस्तु कृतात्यये इष्ट्यादिसुकृतक्षये स्वर्गात्पुनरिमं लोकमवरोहन् सकर्मशेष एवागच्छति ।

ननु यावत्संपातमुषित्वेति सकलकर्मफलभोगानन्तरमवरोहः श्रूयत इति चेन्न, तत्र यावत्पदस्य स्वर्गे भोक्तव्येष्ट्याद्यशेषकर्मपरत्वं नतु ततः पूर्वसंचितवासनावत्प्रारब्धभूत-प्रबलकर्मान्तरानुपमर्दितानारब्धफलककर्मपरत्वमन्यथा स्वर्गादिष्ट्यादिपुण्यकर्मशेषेणेह्यवरोहतां श्वसूकरादियोनिप्राप्तिश्रवणं सद्यः समुत्पन्नस्य बालस्य सुखदुःखभोश्चापि न संभवेत्; कथमगम्यते श्रुतिस्मृतिभ्याम् ।

'तद्य इह रमणीयचरणा अभ्याशो यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा ।

अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' (छा. ५-१०-७) इति श्रुतिः,

'जायन्ते पुण्यकर्माण' इत्यादिका स्मृतिः ।

तस्मादनुशयवानेवावतरति । नन्वसावारोहणे येन मार्गेण सोमराजपदं प्राप्तस्तेनैव मार्गेणावतरत्युत मार्गविशेषेण वेति चेत्तत्रोत्तरमाह-

'यथेतमनेवं चे'ति आरोहणमार्गे श्रुतयोर्धूमाकाशयोरेवावरोहणमार्गे श्रुतत्वाद्यथेतं यथागतमवतरतीति गम्यते । आरोहणमार्गे श्रुतानां रात्र्यादीनामत्राश्रवणाद्वाय्वाद्यधिक-श्रवणाच्चानेवं आरोहणमार्गाद्विपरीतमार्गेणैवावतरति नतु यथाश्रुतारोहणमार्गेणेत्यर्थः। पुनराशङ्क्य मतान्तरेण परिहरति-

## चरणादिति चेन्न, तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥३-१-९॥

'रमणीयचरणाः कपूयचरणा' इति चरणशब्दान्नानुशयसिद्धेः चरणशब्दस्य स्मार्त्ताचारविषयस्य योन्यापत्तिहेतुभूतस्य चानुशयाद्भिन्नत्वादिति चेन्न, सः अनुशयपर्यायः कर्मशेष एवोपलक्षणेन अर्थो यस्याः सा तदुपलक्षणार्थेयं चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते; नहि केवलात्स्मार्ताचारादेव रमणीयारमणीययोन्यापत्त्या साक्षात्सुखदुःखप्राप्तिः संभवति; कुतस्तर्हीति चेत् पुण्यपापकर्मानुष्ठानादेव; अतश्चरणशब्दोपलक्षितोभयविधिकर्मानुशयस्यैवेह सुखादिसाधकत्वमुचितमिति तदभिप्रायः ।

## आनर्थक्यमिति चेन्न, तदपेक्षत्वात् ॥३-१-१०॥

एवं च सति स्मार्ताचारस्यानुपयोगादानर्थक्यं स्यादिति चेन्न, तदपेक्षत्वात्-इष्टादिसुकृतकर्मणः स्मार्ताचारापेक्षत्वात्

'आचारहीनं न पुनन्ति वेदाः' (वृद्धयाज्ञवल्क्य वासिष्ठ स्मृ.६-३) इति,

'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।,
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्' ॥ (दक्ष स्मृ. २ - १९,२०)

इत्यादिवचने स्मार्ताचारः प्रदर्शित इति कार्ष्णाजिनिमतम् ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥३-१-११॥

बादरिस्तु

'रमणीयचरणाः कपूयचरणा' (छा. ५-१०-७)

इति चरणशब्देन सुकृतदूष्कृते एवोच्येते, 'पुण्यं कर्माचरति पापं कर्माचरती'ति प्रसिद्धेरिति मन्यते । एतदेव सूत्रकारस्य मतं यदाचारशब्दः सुकृतदुष्कृतयोर्वाचकः नतु लक्षक इति बादरेर्मतम्। अत्र स्मार्ताचारापेक्षं कर्मेति तु स्वीकृतमेव; अतः सुकृतदुष्कृतानुशयवानेव स्वर्गादवरोहति जीव इति सिद्धम् ।

### अनिष्टादिकार्यधिकरणम् ॥३-१-३॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥३-१-१२॥

इह यथेष्टापूर्त्तादिकारिणां चन्द्रगमनं तथा अन्येषामप्यस्ति नवेति संशयः । इष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनमस्त्येवेति पूर्वः पक्षः

'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौषी. १-९)

इत्यविशेषेण सर्वेषां चन्द्रगमनश्रवणात् । यद्यपि तत्र पापिनां भोगो नास्ति तथापि पुनरागत्य

शरीरग्रहार्थे पञ्चमाहुतेर्लाभाय स्वर्गगतिरपेक्ष्या। तस्मादिष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनं युक्तमिति प्राप्ते सूत्रेण सिद्धान्तं ब्रूमः-

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥३-१-१३॥

इतरेषामिष्टापूर्ताद्यकुर्वतां चन्द्रगमनं नास्ति; किन्तु ते यमसदने कर्मफलमनुभूय प्रत्यवरोहन्ति। एवं भूतावेव तेषामारोहावरोहौ।

'वैवस्वतं संगमनं जनानाम्' (ऋ. सं. १०-१४-१/ तै.आर. प्र. ६ अनु. १-१)

इति तद्गतिदर्शनम् इष्टाद्यकुर्वतां यमलोकप्राप्तिदर्शनम्, अतो यमलोकप्राप्तिरेवोचिता तेषाम्।

## स्मरन्ति च ॥३-१-१४॥

इममर्थं स्मरन्ति च पराशरादयः

'सर्वे चैते वशं यान्ति यमस्य भगवन् किल' (वि.पु. ३-७-५) इत्यादिना।

## अपि सप्त ॥३-१-१५॥

सप्त रौरवादीनपि पापिनां महानरकान् स्मरन्ति। ननु पापिनां यमवशत्वमुक्तं तदयुक्तम्, रौरवादिषु चित्रगुप्तादीनां यातनादापनाधिपत्वस्मरणादिति चेत्तत्राह-

## तत्रापि तद्व्यापारादविरोधः ॥३-१-१६॥

तत्रापि चित्रगुप्ताद्यधिष्ठातृकेषु नरकेष्वपि तेषां प्रेरकस्य यमस्य तदधिष्ठातृत्व-व्यापारविद्यमानत्वात्सूर्यसुताधीनत्वस्य विरोधाभावः।

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥३-१-१७॥

विद्याकर्मणोः फलभोगाद्यर्थं ब्रह्मगमनं चन्द्रगमनं च। कुतः

'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्ति (छा. ५-१०-१),

'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' (छा. ५-१०-३) इति ब्रह्मगमने चन्द्रगमने च विद्याकर्मणोरेव प्रकृतत्वात् - प्रसंगत्वात्, अतो न पापिनां तद्गतिप्रसंगः।

## न तृतीये तथोपलब्धेः ॥३-१-१८॥

केवलपापकर्मिणां तृतीयं स्थानम्; तस्मिन्स्थाने देहारंभाय पञ्चमाहुत्यपेक्षा नास्ति; कुतः तथोपलब्धेः-तथा तेषां द्युलोकगमनानर्हत्वात्पञ्चमाहुतिनियममन्तरेणैव तृतीयस्थाने देहोपलब्धेः।

'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न संपूर्यते' (छा. ५-१०-८)

इति तृतीयं स्थानं पापकर्मिणां प्राप्यनरकादिस्थानमुक्तम् । अतः पापिनां न स्वर्गगमनम् ।

## स्मर्यतेऽपि च लोके ॥३-१-१९॥

लोके द्रोपेदेयधृष्टद्युम्नादीनां पुण्यकर्मणामपि पञ्चमाहुत्यनपेक्षा देहारंभाय स्मर्यते ।

## दर्शनाच्च ॥३-१-२०॥

लोके जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुर्विधदेहेषु स्वेदजोद्भिज्जदेहयोः स्त्रीपुंसंबन्धं विनैवोत्पत्तेर्दर्शनात्पञ्चमाहुत्यनपेक्षत्वम् । ननु

'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम् (छा. ६-३-१)

इति श्रुतौ स्वेदजग्रहणं कुतो नास्तीति चेत्तत्राह-

## तृतीयशब्दावरोधः संशोकजस्य ॥३-१-२१॥

संशोकजस्य स्वेदजस्यापि तृतीयेनोद्भिज्जशब्देनावरोधः संग्रहोस्तीत्यर्थः, अतः पापकर्मिणां न स्वर्गगमनमिति निश्चीयते ।

तत्स्वाभाव्यापत्त्यधिकरणम् ॥३-१-४॥

## तत्स्वाभाव्यापत्तिरुपपत्तेः ॥३-१-२२॥

पूर्वत्र फलभोगानन्तरं स्वर्गात्सानुशयोऽवतरतीति निरूपितम्; तस्यावरोहत-आकाशादिभावः श्रूयते

'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छा. ५-१०-५,६) इति;

अत्र यो जीवस्याकाशादिभावः स किं देवमनुष्यादिवत्तत्स्वरूपापत्तिः किंवा तत्तत्साद्दश्यापत्तिरिति सन्देहः । तत्र भूत्वेतिशब्दादाकाशादिस्वरूपापत्तिर्जीवस्येति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः अवरोहतो जीवस्य नाकाशादिस्वरूपापत्तिः किन्तु तत्स्वाभाव्यापत्तिस्तत्साद्दश्यापत्तिरित्यर्थः । कुतः उपपत्तेः तत्र सुखदुःखाद्यनुभवाभावोपपत्तेः। सुखाद्यनुभवार्थं हि तत्तच्छरीरैकत्वसंबन्धः, स च तस्य न भवति, अन्यस्यान्यत्वानुपपत्तेश्च; तस्मात्तत्साद्दश्यापत्तिरवरोहत इत्येवोपपद्यत इति निर्णयः ।

नातिचिराधिकरणम् ॥३-१-५॥

## नातिचिरेण विशेषात् ॥३-१-२३॥

अत्रावरोहं कुर्वन् जीवस्तत्र तत्र विलम्बते न विलम्बते वा उतानियम इति संशयः । तत्र प्रवर्षणानन्तरं व्रीह्यादिभावः श्रूयते,

'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' (छा. ५-१०-६) इति;
प्रागेतस्माच्चिरस्थायिनोर्व्रीहियवादिभावादाकाशादौ विलम्बत्वरयोर्न नियम इति प्राप्ते ब्रूमः- नातिचिरेण व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति जीवः कुतः विशेषात्- व्रीह्यादिभावानन्तरं विशेषः कथम्

'अतो वै खलु दुर्निष्प्रपतरम्' (छा. ५-१०-६)
इति व्रीह्यादिभावान्निर्गमनं दुःशकमिति हि श्रूयते । अतो व्रीह्यादौ विलम्बकथनेनान्यत्र त्वरेत्यवगमादाकाशादौ न विलम्बते जीव इति ।

अन्याधिष्ठिताधिकरणम् ॥३-१-६॥

## अन्याधिष्ठते पूर्ववदभिलापात् ॥३-१-२४॥

इह व्रीह्यादावपि जीवस्य संश्लेषमात्रमुत जन्मेति संशये

'व्रीह्यादिरूपेण जायन्त' इति श्रवणात्तस्य व्रीह्यादिरूपं जन्मेति पूर्वपक्षे प्राप्ते सिद्धान्तं वदामः-अन्येन जीवेनाधिष्ठिते ब्रीह्यादौ जीवस्य संश्लेषमात्रमस्ति; कथं पूर्ववदाकाशादौ यथाऽवरोहतस्तस्य तत्र जननहेतुसंकीर्त्तनविरहिताभिलापाज्जायन्त इति श्रुतिर्गौणी ।
यत्र ब्राह्मणादिषु जन्मास्ति तत्र

'रमणीयचरणाः कपूयचरणाः' (छा.५-१०-७) इति जन्महेतुरभिलप्यते, अतो ब्राह्मणादावेवास्य जन्माभिलापात् अन्यत्रास्या संबन्धमात्रमिति निर्णयः ।

## अशुद्धमिति चेन्न शब्दात् ॥३-१-२५॥

नन्ववरोहतः पुरुषस्य पूर्वानुष्ठितयागादिष्वग्नीषोमीयादौ कृतं हिंसामिश्रं कर्म
'हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति' (तै. सं. ४-६-९),
'न वा उ एतस्मिन्म्रियसे न रिष्यसि' (तै. ब्रा. ३-७-७-१४)
इत्यहिंसनभावशब्दाच्छुद्धं प्रतीयते इति चेन्न, रसलोलुपतया मांसभक्षणासक्तस्य हिंस्रशीलस्याहिंसाधर्मपालनासक्तस्य पुरुषस्य शुद्धवदाभासमानमप्यशुद्धमिति निश्चयात्; तथाहि श्रूयते स्मर्यते च

'केवलेन नः पशुनेष्टमसदिति' (ऐ.ब्रा. पञ्चिका. २ अ. ६ ख. ८) ऐतरेयब्राह्मणे,
'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म,
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति' (मुण्ड. १-२-७) इति मुण्डके च
'अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ,
नैष धर्मः सतो देवा यत्र वध्येत वै पशुः' (म.भा.शा. ३२४-४,५) इति;
एवं च सति तत्कर्म कृतवतोऽप्यवरोहतो नरस्य व्रीह्यादिभावप्राप्तिरेव हिंस्त्रयज्ञफलमिति नोक्तं किन्तु फलान्तरमेव वक्ष्यति; अतो व्रीह्यादौ संश्लेषमात्रमेव । उपपत्त्यन्तरमाह-

## रेतःसिग्योगोऽथ ॥३-१-२६॥

'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' (छा. ५-१०-६) इत्यत्रावरोहतो जीवस्याथ ब्रीह्यादिभावानन्तरं रेतः सिञ्चा पुरुषेण सह योगमात्रमुच्यते, अतः पूर्वमपि व्रीह्यादिषु योगमात्रम् ।

## योनेः शरीरम् ॥३-१-२७॥

यस्य यदा योषिदादियोनेः प्राप्तिस्तस्य तदैव शरीरमुत्पद्यते; शरीरोत्पत्त्यनन्तरं सुखदुःखादिसंबन्धाधिक्यं भवति; अतः पूर्वं सर्वत्र तु संश्लेषमात्रमिति भावः । अहिंसयज्ञकर्तुरवरोहतो जीवस्य समीचीनब्राह्मणादिदेहोपलब्धिः, हिंसामययज्ञकर्तुस्तस्य कुत्सितपुरुषाश्वादिशरीरप्राप्तिश्च तथा च श्रुतिः,
'तद्य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन् अथ य
इह कपूयचरणा अभ्यासो ह यत्ते कपूयाम्' (छा. ५-१०-७)
इत्यादिः, शतपथब्राह्मणश्रुतिश्च
'स यं पुरुषमालभन्त स किं पुरुषोऽभवद्यावश्वं च गां तौ गौरश्वश्च गवयश्चाभवतां
यमविमालभन्त स उष्ट्रोऽभवद्यमजमालभन्त स शरभोऽभवत्तस्मादेतेषां पशूनां
नाशितव्यमपक्रांतमेधा हैते पशव' (शतपथब्राह्मण) इति ।

इति
श्रीशुद्धेकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते
द्वैपायनीयशारीरकसूत्रभाष्यरत्ने तृतीयाध्यायस्य
व्यासाभिप्रायबोधके
प्रथमः पादः ॥१॥

श्रीहरिकृष्णाय नमो नमः

## तृतीयाध्याये द्वितीयपादः ।

### सन्ध्याधिकरणम् ॥३-२-१॥

## सन्ध्ये सृष्टिराह हि ॥३-२-१॥

पूर्वत्र जीवस्य गत्यागतिनिरूपणं कृतम्; इह तदवस्था विचार्यते । सन्ध्ये स्वप्ने

'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत' (बृ. ६-३-१०)

इत्यादिना सृष्टिरभिधीयते । सैषा जीवकृता नारायणकृता वेति संशयः ।

एवं सति जीवकृतेत्यवगम्यते

'अथ वेशान्तान्पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता' (बृ. ६-३-१०)

इति स्वप्नदृशं जीवमेव कर्तारमाह हि श्रुतिः । किञ्च-

## निर्मातारं चैके पुत्रादयश्च ॥३-२-२॥

'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (कठ. २-५-८)

इति जीवमेव स्वप्ने कामानां निर्मातारं एके शाखिनोऽधीयते । ततः कामशब्दनिर्दिष्टाः काम्यमानाः पुत्रादयः प्रतीयन्ते । पूर्वत्र

'सर्वान्कामान् छन्दतः प्रार्थयस्व'(कठ. १-१-२६)

इत्युक्त्वा तदनन्तरम्

'शतायुषः पुत्रपौत्रान् वृणीष्व' (कठ. १-१-२६)

इति तेषामेव प्रकृतत्वात्, ततश्च जीवकृतैव स्वप्नसृष्टिरिति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते -

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३-२-३॥

स्वप्ने यत् रथादिसृष्टमर्थजातं तदिदं मायामात्रं नारायणकृतं न जीवकृतम्; स्वप्नदृशैकेनानुभाव्यं तत् कालमात्रावसायीत्याश्चर्यतया मायामात्रमित्युक्तम् । जीवस्य सत्यसंकल्पत्वादिकं नारायणोपासनेनानाद्याविद्यातिरोधानानन्तरं श्रुतिस्मृतिषु निश्चितमतस्तस्य रथादिसृष्टिसामर्थ्यं न संभवति; अतः पुरुषो निर्मिमाण इति न जीवविषयं किन्तु

'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते, तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन'

(कठ. २-५-८)

इति वाक्यशेषान्नारायणविषयम्; तदैकार्थ्यात्स हि कर्तात्यपि तद्विषयमेव, अतो नारायणकृता स्वप्नसृष्टिरिति । इदानीं सूत्रार्थवर्णनं - स्वप्ने यदिदं सृष्टं मायामात्रं तत्तु नारायणकृतमेव न जीवकृतम् ; कुतः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् अनाद्यविद्ययाऽनादिबद्धस्य जीवस्य निःशेषतया नारायणोपासनमृते सत्यसंकल्पत्वादेः स्वस्य चाभिव्यक्तस्वरूपत्वाभावात् । अथ जीवस्वरूपानभिव्यक्तिहेतुमाह-

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥३-२-४॥

पराभिध्यानात्-परस्य नारायणादन्यप्राकृतविषयस्य अभिध्यानात्संकल्पादनाद्यविद्या-रूपवासनात् एवेत्यर्थः, जीवस्य निजस्वरूपं तिरोहितमनादिकालतोऽन्तर्हितम्; तथा स्मृतिः-

'अनाद्यविद्योपहतात्म संविदस्तन्मूलसंसारपरिश्रमातुरा' (भा. ८-२४-४६)

इति नारायणाभिध्यानात्तु तदाविर्भूतमिति भावः । ततस्ताभ्यां नारायणानुपासनोपासनाभ्यां अस्य जीवस्य बन्धविपर्ययौ बन्धमोक्षौ भवतो हि एव । तथाहि स्मर्यते-

'एकस्यैव ममांशस्य जीवस्य हि महामते ।
बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतर' ॥ (भा. ११-११-४) इति
'मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पत' ॥ (गीता. १४-२६) इति

## देहयोगाद्वा सोऽपि ॥३-२-५॥

सोऽपि जीवस्य स्वरूपतिरोधानभावोऽप्यनाद्यविद्यामयलिङ्गाख्यदेहयोगाद् भवति । वा शब्दोऽनुक्तसमुच्चयार्थे । नारायणज्ञानपूर्वकोपासकत्वाभावाच्च । एवं तस्य कृष्णोपासनरहिततयाऽनधिगतसत्यसंकल्पत्वादिकस्य तात्कालिकविचित्रसृष्टिसामर्थ्ये स्वप्ने न संभवति । उपपत्यन्तरमाह-

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥३-२-६॥

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति,
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने' (छा. ५-२-९)
'अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' (ऐ. आ. ३-२-४)

इत्यादिश्रुतेः शुभाशुभसूचकश्च स्वप्नः ।
स्वप्नाध्यायविदश्च शुभाशुभसूचकान् स्वप्नविशेषानाचक्षते, अतो न जीवसृष्टाः स्वप्नार्थाः । तेषां जीवस्रष्टृत्वे स्वाशुभसूचकानां सृष्ट्यभावप्रसंगापत्तिः, तस्मान्नारायणकृता स्वप्नसृष्टिरिति युक्तमेव ।

तदभावाधिकरणम् ॥३-२-२॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥३-२-७॥

'अथ तद्यत्रैत्सुप्तः समस्तः संप्रतिपन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवति (छा. ८-६-३) इति,

'अथ यदा सुषुप्तो भवति न कस्यचन वेद हि ता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेत' (बृ. ४-१-१९) इति,

'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति' (छा. ६-८-१)

इति चैताभिः श्रुतिभिः जीवस्य सुषुप्तौ सत्यां नाडीषु पुरीतति चात्मनि च शयनमवगम्यते। तेष्वस्य विकल्पः समुच्चयो वेति संशयः नाड्यादीनि स्थानानि विकल्पितानि भवितुमर्हन्ति, एकप्रयोजनत्वात्;

'यथा व्रीहिभिर्यजेत' (बोधायन श्रौ.प्र.२८-५),

'यवैर्यजेत' (बोधायन श्रौ.प्र.२८-५)

इत्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन विकल्पः स्वीक्रियते, तथा सुषुप्तिप्रयोजनस्यैकत्वात् कदाचिन्नाडीषु शेते कदाचित्पुरीतति कदाचिदात्मनि चेति विकल्प एवात्र समुचित इति पूर्वः पक्षः। समुच्चय इति सिद्धान्तः। कुतः नैकप्रयोजनत्वात्। तथाहि जीवस्य हृदयनिष्ठ-ब्रह्मगमनमार्गतया नाडीनां साधनत्वं तासु पुरीतति च ब्रह्मणि च शयनस्य प्रासादखट्वा-पर्यंकवदविरोधः। अतो नाडीभिरुपसृप्य पुरीतति हृदयान्तर्वर्ति स्थानविशेषे च आत्मनि कारणशरीर व्याप्तेऽन्तर्यामि रूपे ब्रह्मणि च जीवः शेत इति उपकारभेदात्समुच्चयः। सूत्रशब्दार्थविवेचनं विधीयते-तदभावः स्वप्नाभावः सुषुप्तिरित्यर्थः। सुषुप्तिर्नाडीष्वात्मनि चकारात्पुरीतति च तच्छ्रुतेः तेषां त्रयाणां सुषुप्तिस्थानत्वश्रुतेः। उक्तेन न्यायेन समुच्चयो न्यायोपेत इत्यभिप्रायः॥

## अतः प्रबोधोऽस्मात् ॥३-२-८॥

'अस्मात्सत आगत्य न विदुः सत आगच्छामः' (छा. ६-१०-२) इति कारणशरीरव्याप्तब्रह्मणः सकाशादस्य जाग्रद्रूपं प्रबोधं श्रुतिराहातः समुच्चय एव स्वीकार्यो नतु विकल्प इति समाधानम्।

कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥३-२-३॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥३-२-९॥

अस्य

'सता सौम्य तदा संपन्नो भवति' (छा. ६-८-१) इति विषयः।

पूर्वत्र जीवस्य सुषुप्त्यवस्था निरूपिता । तत्र ब्रह्मणि सुप्त एव जीवः पुनः प्रतिबुध्यते उतान्य इति संशयः । अन्यजीव इति प्राप्तम् । यद्गत्वा न निवर्तन्त इति ब्रह्मप्राप्तस्य जीवस्यावृत्तेरनुचितत्वात्; निरतिशयानन्दे ब्रह्मणि साम्यं प्राप्तस्य जीवस्य पुनर्न दुःखमयसंसारावृत्तिरुपपद्यते;

'सता संपन्न' इति ब्रह्मापन्नः कथमुत्तिष्ठेत् को वात्र विभाग इति प्राप्ते ब्रूमः सता संपन्नोऽपि यो जीवः स एव सुप्त एव प्रतिबुद्ध उत्तिष्ठति; कुतः कर्मानुस्मृतिशब्दविधिभ्यः- कर्म तावत् सुषुप्तेन पूर्वकृतं पुण्यपापरूपम्, परमात्मज्ञानराहित्येन कृतात्तेन जीवेनानुभोग्यात्कर्मणः अनुस्मृतेः

'य एवाहं सुप्तः स एव प्रजागरितोऽस्मी'ति पूर्वानुभूतस्मरणाच्च ।

शुद्धोऽपि सुप्तप्रबुद्धं व्याघ्रादिकं स एवायमिति दर्शयति । तथाहि -

'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्ति' (छा. ६-९-३ / छा. ६-१०-२)

इति तद्भावशब्दाच्च

'ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे.१-८ / ५-१३ / ६-१३) इति

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता.३-८/६-१५) इति,

'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' ॥ (गीता. ४-९) इति

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' ॥ (गीता. १४-२६) इति

'द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्' (गीता. १५-५)

इत्यादिश्रुतिस्मृत्यभिहित-मोक्षोपायविधेश्चैवं कर्मादिचतुर्भ्यः हेतुभ्यः सुप्तस्य साक्षाद्ब्रह्मप्राप्तौ सत्यां मोक्षोपायविधिवाक्यानर्थक्यप्रसंगाच्च । 'सत आगत्य न विदुरि'ति संपन्नस्य ब्रह्मानन्दज्ञानाभावोक्तेर्मुक्ताविव न ब्रह्मसंबन्धः, किन्त्वनाद्यज्ञानमय-त्रिगुणात्मककारणशरीरावृत्ततया जीवस्य सता तद्व्याप्तान्तर्यामिशक्तिरूपब्रह्मणा संपन्नत्वम्; अतो यो जीवः सुप्तः स एव पुनरुत्तिष्ठतीति युक्तम् ।

मुग्धाधिकरणम् ॥३-२-४॥

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥३-२-१०॥

'मूर्छितः पुरुष' इति व्यवहारात् मूर्छेति काचिदवस्थानुभूयते; सैषा सुषुप्त्यादिभ्यो भिन्ना नवेति सन्देहः । जागरस्वप्नसुषुप्तिभ्यो भिन्नाया अवस्थाया अप्रसिद्धत्वात् मूर्छा जागरादिष्वन्तर्भूतेति पूर्वपक्षे प्राप्त उच्यते - मुग्धे मूर्छिते पुरुषे या अवस्था सा मरणार्द्धसंपत्तिः,

कुतः, परिशेषात्-मूर्छितस्य कस्यचित्पुरुषस्य जीवनावशेषात् जागरादिभ्यो भिन्नेयं प्रपञ्चप्रतीतेरभावात् न तस्या जागरस्वप्नयोरन्तर्भावः। शब्दश्रवणादिक्रियोचितायाः सुषुप्तेः सकाशात् शब्दश्रवणादिव्यापारानर्हाऽप्रसन्नवदनादिलक्षणायाः अस्याः विशेषात् सुषुप्तो नान्तर्भावः, ततोऽप्यन्यावस्था मूर्छेति।

उभयलिङ्गाधिकरणम् ॥३-२-५॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥३-२-११॥

पूर्वेषु सूत्रेषु जीवस्य स्वरूपधर्मगत्यागत्यवस्थानां भेदनिरूपणं कृतम्; अतः परं नारायणस्य स्वरूपधर्मादिकं निरुप्यते।

'यः पृथिव्यां तिष्ठन्' (बृ. ५-७-७) इत्यादिषु नारायणस्य सर्वात्मकतया प्रवेशः श्रूयते; तस्य सर्वावस्थासु सर्वान्तर्य्यामितयावस्थितौ तत्तदोषकलङ्कः प्रसज्यते नवेति संशये प्रसज्यत इति पूर्वः पक्षः। तथाहि यदि प्रकृतिसंबन्धोऽप्यस्याभ्युपगम्येत तर्हि जीववदसावपि सकलविकारदोषास्पदं भवेदिति प्राप्ते सिद्धान्तं ब्रूमः -परस्य परमात्मनः सर्वावस्थासु सर्वान्तर्यामितयाऽवस्थानादपि न तस्य कश्चिद्दोषकलङ्कप्रसंगः, कथमिति चेत्तत्राह-सर्वत्र श्रुतिषु स्मृतिषु चास्य निरस्तसमस्तदोषकलङ्कत्वं निरतिशयमङ्गलगुणाकरत्वं चेत्युभयलिङ्गं हि प्रसिद्धम्

'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छा. ८-१-५)

'निरवद्यं निरञ्जनम्' (श्वेता.६-१९),

'यः सर्वज्ञः सर्ववित्' (मुण्ड.१-१-१०) इति,

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' (गीता. १०-३)

'परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे' (वि.पु. ६-५-८५)

इत्यादिकासु तासु। तस्मात्पृथिव्यादिष्वन्तर्यामितयावस्थानतोऽपि न दोषः।

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥३-२-१२॥

यथा जीवस्य परमात्मोपासनेनापहतपाप्मत्वादिगुणभाजनस्यापि देवादिशरीरसंबन्धित्वावस्थाभेदात्सकलदोषवत्वं तथा परस्यापि 'यस्य पृथ्वी शरीरमि'ति शरीर संबन्धित्वावस्थाभेदाद्दोषाः स्युरिति चेन्न, प्रत्येकं प्रतिपर्यायमतद्वचनात्-दोषासंबन्धित्ववचनात्

'यस्य पृथ्वी शरीरम्' (बृ. ५-७-७) इत्यादिषु

'एष त आत्मान्तर्याम्यमृतः' (बृ. ५-७-१३)

इत्यन्तास्वन्तर्यामिब्राह्मणश्रुतिष्वन्तर्यामिणो हि निर्दोषत्वमुच्यते। जीवस्य तु पराभिध्यानात्तत्स्वरूपं तिरोहितमित्युक्तम्।

## अपि चैवमेके ॥३-२-१३॥

अपि च एकस्मिन् शरीरे शरीरशरीरित्येनावस्थितयोरपि जीवपरयोर्दोषसंबन्धित्वतद्विपरीतत्वलक्षणो विशेषो यथा प्रसिध्यति तथैके शाखिनोऽधीयते

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते,

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्ड.३-१-१/श्वेता.४-६) इति; अतो न जीववन्नारायणे दोषप्रसंगः। जीवपरयोः शरीरस्थितिसाम्येऽपि स्थितिवैषम्यमाह-

## अरूपवदेव हि तत्प्रधानत्वात् ॥३-२-१४॥

तत् मूर्तिमत् परब्रह्म देवमनुष्यादिशरीरेषु शरीरितयावस्थितमपि अरूपवत्रूपरहितवस्तुवन्निर्लेपतयैव वर्तते; कुतः प्रधानत्वात्-तस्य चिदचिन्नामरूपनिर्वाहकत्वेन मुख्यत्वात्; तथाहि श्रूयते 'आकाशो ह वै नामरूपयोनिर्वहिता ते यदन्तरा तद्ब्रह्मे'ति नामरूयोरन्तराले तत्कार्यस्पर्शरहित एव वर्तते इति स्वातन्त्र्यमुक्तं, कर्मफलभोगार्थं हि जीवस्य शरीरे स्थितिरिति पारतन्त्र्यमुक्तम् अत उभयोर्वैषम्यम्।

## प्रकाशवच्चावैयर्थ्यात् ॥३-२-१५॥

यथा 'तच्छुभ्रं ज्योतिषां ज्योतिः' (मुण्ड. २-२-१०) इति,

तस्य भासा सर्वमिदं विभाति' (कठ. २-२-१५ / मुण्ड.२-२-११) इति,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. अनु. १-१)

इति वाक्यावैयर्थ्यात् प्रकाशवत् – असंख्यकोटिसूर्यचन्द्रतुल्यप्रकाशयुक्तं परब्रह्मणः स्वरूपमिति विज्ञायते; तथा

'यः सर्वज्ञः सर्ववित्' (मुण्ड.२-२-७),

'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (श्वेता.६-१६),

'परास्य शक्तिर्विविधैव श्रूयते' (श्वेता.६-८)

इत्यादिवचनावैयर्थ्याच्च निरवद्यं कल्याणगुणाकरं परब्रह्मणः स्वरूपमिति हि विज्ञायते, अतस्तदुभयलिङ्गमेव।

## आह च तन्मात्रम् ॥३-२-१६॥

'ज्योतिषां ज्योतिः' (मुण्ड. २-२-१०),

'सत्यं ज्ञानन्तं ब्रह्म' (तै.उ.आन. अनु. १-१)

इत्यादिश्रुतिवृन्दं ब्रह्मणस्तन्मात्र-प्रकाशबहुलावृतं स्वरूपमाह,

न तु कल्याणगुणगणविशिष्टपुरुषाकृतित्वं निवारयति ।

## दर्शयति चाथो अपि स्मर्यते ॥३-२-१७॥

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्' (श्वेता. ६-७),
'सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वेता. ६-९),
'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वेता. ६-८),
'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१),
'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः',
'शान्तं निरवद्यं निरञ्जनम्' (श्वेता. ६-१९)

इत्यादिश्रुतिकलापो ब्रह्मणोऽस्पृष्टसकलदोषत्वं कल्याणगुणगणवत्त्वं च दर्शयति; अथो स्मर्यतेऽपि च

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' (गीता. १०-३),
'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (गीता. १०-४२),
'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (गीता. १५-१७),
'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ।
सुहृदं प्रियमात्मानं साम्यासंगादयोऽगुणाः' (भा. ११-१३-४०) इति;

अगुणाः गुणत्रयपरिणामरहिता गुणा इत्यर्थः । तथा पराशरश्च

'स सर्वभूतप्रकृतिर्विकारान् गुणादिदोषांश्च मुने व्यतीत' (वि.पु. ६-५-५३)

इत्यादिस्मृतिगणेन हेयगुणराहित्येन कल्याणगुणसहिततया च ब्रह्मणो रूपमुभयलिङ्गं निरूप्यते।

## अत एव चोपमा सूर्यकादिवत् ॥३-२-१८॥

यतः पृथिव्यादिषु सर्वेषु चेतनाचेतनेषु स्थितस्यापि नारायणस्य निर्दोषत्वं कल्याणगुणगणाकरत्वं चोक्तम्, अत एव शास्त्रेषु जलदर्पणादिप्रतिबिम्बितसूर्यादिवत्परमात्मन उपमा क्रियते-

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्,
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्' (याज्ञ.स्मृ. ३-१४४) इति ।

अत्र वस्तुतः स्थितमाकाशं वस्तुनोऽनवस्थितं सूर्यं चोपमानमुपादत्ते, अनेनाभिप्रायेण यथैकमेवाकाशं घटादिषु पृथक् पृथगेव व्याप्य स्थितं तथैक एवात्मा-परमात्मा एकदेशस्थश्चेतनाचेतनेष्वन्तर्यामितया पृथक् पृथग्व्याप्य स्थित इति नारायणस्यैकस्य बहुषु स्थित्या नभ उपमानम्; जलाधारेषु वस्तुतोऽनवस्थितस्य सूर्यस्य यथा न तद्विकारादिदोषस्पर्शः तथा पृथिव्यादिषु वस्तुतोऽन्तर्यामिशक्त्या स्थितस्यापि नारायणस्य न तद्विकारादिदोषस्पर्श

इति सर्वान्तर्यामिणो नारायणस्य निर्दोषत्वं स्वरूपगुणहानिश्चेति सूर्योपमानं दिव्यपुरुषाकारस्य तस्यैकदेशस्थित्यान्तर्यामिशक्त्या सर्वत्र व्याप्त्या चापि तदुपमानम्, अत आकाशाद्युपमयापि सर्वात्मनो नारायणस्य सिद्धमुभयलिङ्गत्वम् । अत्राशङ्कते-

## अम्बुवदग्रहणात्तु न तथात्वम् ॥३-२-१९॥

अम्बुवदिति सप्तम्यन्ताद्वतिप्रत्ययः । अम्बुनि सूर्यस्य यथा वस्तुतोऽग्रहणाद्ग्रहणं नास्ति नारायणस्य तु न तथात्वम्; तदेव स्पष्टयति-अम्बुनि यथा भानुरवस्तुतया गृह्यते तथा चेतनाचेतनेषु नारायणोऽवस्तुतया न गृह्यते; किन्तु परमार्थतोऽन्तर्यामिशक्त्या तत्र स्थित एव गृह्यते, स्वैकान्तिकभक्तेषु तु स्वयमेव स्थितश्च । अतः कथमस्य निर्दोषत्वमिति शङ्कायाः परिहार उच्यते -

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥३-२-२०॥

नेत्यनुवर्तते । वस्तुतः पृथिव्यादिष्वन्तर्भावादपि नारायणस्य तद्गतवृद्धिह्रासभाक्त्वं न भवतीति पूर्वोक्तोभयदृष्टान्तग्रहणसामञ्जस्यादेव गम्यते । उक्तं हि वस्तुतोऽनवस्थितस्य सूर्यस्य स्थितस्य चाकाशस्योपमानत्वेन ग्रहणं सर्वत्रान्तर्यामितयाऽवस्थितस्यापि नारायणस्य न तद्दोषस्पर्श इति ज्ञापयितुमस्तीति; एवं दृश्यते विवक्षितधर्मसाम्यज्ञापनमात्रेण चन्द्रवत्मुखमिति दृष्टान्तः । तस्मादुभयलिङ्गसिद्धिः पृथिव्यादिषु वस्तुतः स्थितस्यापि नारायणस्य । अथवा

'अश्व इव रोमाणि विधूय पापम्' (छा. ८-१३-१)

इत्यादिश्रुतावपि दृश्यते विवक्षित-धर्मसाम्येन दृष्टान्तः - अश्वो यथा रोमाणि सहजानि स्वावयवभूतानि त्यजति तथा जीवस्तु स्वकृतान्यनवयवभूतानि कर्माणीति तदर्थः । अतो विवक्षितधर्मसाम्येनोभयदृष्टान्तसामञ्जस्यात् उभयलिङ्गमेव ब्रह्मेति सिद्धं, तथा सूर्याकाशदृष्टान्ताभ्यां मूर्तिमतो नारायणस्यैकदेशस्थत्वं सर्वगतत्वं च सिद्धम् । उभयलिङ्गासम्भवमाशङ्क्याह

### प्रकृत्तैतावत्त्वाधिकरणम् ॥३-२-६॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥३-२-२१॥

पूर्वत्र ब्रह्मण उभयलिङ्गत्वं साधितं तत्र बाधोऽस्ति नवेति सन्दिह्यते ।

'द्वे वा ब्रह्मणो रूपे मूर्तं चामूर्तं च' (बृ. ४-३-१)

इत्यादिना बृहदारण्ये पृथिव्यप्तेजोवाय्वाकाशात्मकं मूर्तामूर्तप्रपञ्चरूपं ब्रह्मण उक्त्या

'अथात आदेशो नेति नेति' (बृ. ४-३-६) इति श्रूयते ।

अत्रेति शब्दस्य पूर्वप्रकृतपरामर्शित्वात् ब्रह्मणः पूर्वप्रतिपादितं मूर्त्तामूर्त्तप्रपञ्चरूपत्वं निषिध्यत

इति प्राप्ते ब्रूमः - नेति नेतीति वाक्येन पूर्वप्रसिद्धं ब्रह्मणः प्रपञ्चरूपत्वं न निषिध्यते; प्रमाणान्तरैरप्रज्ञाततत्वेनाभिहितस्य स्वधामस्थस्य प्रपञ्चरूपतयोक्तस्य च ब्रह्मणस्तत्र व्यापकतया प्रतिषेधायोगात्; किन्तु प्रकृतैतावत्वं ब्रह्मणः प्रकरणप्राप्तमेतावन्मात्रत्वं न भवतीति प्रकृते ब्रह्मणीयत्तामेव नेति नेतीतिवाक्यं प्रतिषेधतीति युक्तं, ततश्चोक्तात्स्वरूपनिरूपणादपि भूयो भूयस्त्वं ब्रवीति नेति नेतीत्यादेशः । तथाहि न ह्येतस्मादिति वाक्येन नेतीति निर्दिष्टात् ब्रह्मणोऽन्यन्नास्त्युत्कृष्टमित्युच्यते;

'अथ नामधेयं सत्यस्य सत्यम् (बृ. ४-३-६)

इति ब्रह्मणो नामधेयमुच्यते; तदर्थनिर्वचनम्

'प्राणा वै सत्यं तेषामेष सत्यम्' (बृ.४-३-६) इति;

प्राणा जीवात्मानः सत्यं वियदाद्युत्पत्तिवदुत्पत्त्यभावात्तेषां तेभ्यः सत्येभ्यो ह्येष परमात्मा सत्यं तद्वज्ज्ञानसंकोचाद्यभावात्; इत्थं वाक्यशेषोदितसत्यशब्दोपलक्षितापहत-पाप्मत्वादिगुणजातयोगाद् ब्रह्मणो न मूर्तामूर्तरूपप्रपञ्चपरत्वं नेति नेतीति वाक्यस्य, किन्तु पूर्वकृतधर्मेयत्तामात्रप्रतिषेधपरत्वमिति निश्चीयते; अतो ब्रह्मणः पूर्वसिद्धमुभयलिङ्गत्वं न हीयते एवं; एवं तावत्तस्य प्रमाणान्तरागोचरत्वात्तच्छरीरतयोपदिष्टमूर्तामूर्तरूपप्रपञ्चस्य तच्छरीरानुवादावगतं यदेतावत्त्वं तत्प्रतिषिद्धम् । तदेव प्रमाणान्तरागोचरत्वं द्रढयति-

## तदव्यक्तमाह हि ॥३-२-२२॥

तद्ब्रह्मस्वरूपं प्रत्यक्षादिना प्रमाणान्तरेण नाभिव्यज्यते

'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' (श्वेता. ४-२०)

इत्यादिना यतः श्रुतिराह , अतः स्वधामस्थं ब्रह्मस्वरूपं यथावस्थितं प्रत्यक्षादिप्रमाणगम्यं न भवति । ब्रह्मस्वरूपग्रहणे ह्युपायमाह-

## अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥३-२-२३॥

अपि तु ज्ञानेन नवविधभक्त्या च सम्यगाराधने ब्रह्मस्वरूपं गृह्यते, ये परमभावयुक्ताः परब्रह्मोपासते तेषां ब्रह्मस्वरूपं ग्रहणयोग्यं भवतीति श्रुतिस्मृतिभ्यामवगम्यते;

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्' (कठ. १-२-२३) इति,

एष आत्मा परमात्मा स्वां तनूं स्वकीयां रमणीयां मूर्तिं वृणुते ददातीत्यर्थः ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति; 'निष्कलं ध्यायमानम्' (मुण्ड. ३-१-८) इत्यादिका श्रुतिः,

'नाहं वेदैर्न तपसा न दानेन न चेज्यया । (गीता. ११-५३)

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।

ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' ॥(गीता. ११-५४) इति
तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया' ॥ (भा. १-२-१२)
इत्यादिका स्मृतिश्च ।

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥३-२-२४॥

ज्ञानानन्दवत् चेतनाचेतनात्मकजगदैश्वर्यमपि परब्रह्मणो रूपमिति दर्शयति शास्त्रम्; एकेषां वामदेवादीनां दिव्यमूर्तिपुरुषोत्तमसंराधनरूपे कर्मणि अभ्यासात् प्रकाशश्च सञ्जातः ज्ञानानन्दमयमूर्तेर्नारायणस्य दर्शनं सञ्जातमित्यर्थः, तेषां तद्दर्शने जाते सति प्रकाशादिकं परब्रह्मणो ज्ञानानन्दादिधर्मवत् जगदैश्वर्यस्याप्यवैशेष्यं प्रतीयते शास्त्रे
'तथैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च' (बृ.३-४-१०/ ऋ.स. ४-२६-१) इत्यादौ । उभयलिङ्गत्वमुपसंहरति-

## अतोऽनन्तेन तथाहि लिङ्गम् ॥३-२-२५॥

अत उक्तैर्हेतुभिः अनन्तेनासंख्येन मङ्गलगुणगणेन सह योगः परब्रह्मणः प्रतिपादितः, तथा एवं सति तस्योभयलिङ्गत्वं सिद्धमेव ।
ब्रह्मशरीरभूतस्य स्थूलसूक्ष्मोभयावस्थावस्थितस्याचिद्वस्तुनो
'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामर्तं च' (बृ. ४-३-१)
इत्यादिना मूर्तामूर्तत्वमुपदिष्टं, तच्चाहिकुण्डलर्जुन्यायेन प्रपञ्चयति-

अहिकुण्डलाधिकरणम् ॥३-२-७॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥३-२-२६॥

अहिकुण्डलवदहिप्रसारकुण्डलभाववत् अचेतनप्रपञ्चस्य मूर्तामूर्तत्वे वेदितव्ये; तथाहि अहेः सर्पस्य यथा देहप्रसारो विकासः कुण्डलाकृतिः संकोचश्च, तद्वदचेतनशरीरकस्यान्तर्यामिरूपस्य परमात्मनोऽपि सृष्टिप्रलयकालयोर्विकाससंकोचाभ्यां मूर्तामूर्तत्वे वेदितव्ये; तत्र मूर्तत्वं नामरूपभाक्त्वम्; अमूर्तत्वं नाम रूपविभागानर्हभाक्त्वमिति विवेकः । सूत्रेऽनुक्तसमुच्चयवाचकचार्थस्तुशब्दोऽचेतनवस्तुनोऽप्यहिप्रसारकुण्डलभाववन्मूर्तामूर्तत्वे विज्ञापयति । अत्रायमाशयः सर्पस्य ऋजुभावकुण्डलभाववत्कार्यकारणोभयावस्थावस्थितचतेनाचेतनात्मकप्रपञ्चगते विकाससंकोचाभ्यां मूर्तामूर्तत्वे तत्तच्छरीरिणः परमात्मन एव संपद्येते इति; कुत एतन्मूर्तामूर्तत्वमवगम्यते उभयव्यपदेशात्-

'अस्मान्मायी सृजते विश्वमेतत्' (श्वेता. ४-९) इति

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि'

(छा. ६-३-२) इति

'ब्रह्मैवेदं सर्वमात्मैवेदं सर्वम्' (बृ.४-५-१/छा.७-२५-२)

इत्यादिश्रुतिषु कार्यकारणोभयावस्थावस्थितानां चेतनाचेतनानां नामरूपविभागभावाभाव-निर्देशात् । इत्थं चेतनाचेतनात्मकप्रपञ्चशरीरकस्य परमात्मनः कार्यकारणरूपावस्थाद्वयेन प्रतिपादितस्य मूर्तामूर्तात्मकरूपद्वयस्यैक्यमाह दृष्टान्तेन-

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥३-२-२७॥

वाशब्दोऽवधारणे । प्रकाशाश्रयवत्-दिव्यमूर्तेर्नारायणस्य प्रकाशः तदाश्रयो नारायणस्तयोः प्रभा-प्रभावतोर्यथा भिन्नत्वेऽपि तेजस्त्वात् प्रकाशत्वेनैकजातियोगादेकत्वमस्ति, तथा सूक्ष्मावस्थावस्थितचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म स्थूलावस्थावस्थितचिदचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्म तयोरवस्थाद्वयरूपविशेषणसंबन्धप्रयुक्तविषयवैलक्षण्येन भिन्नयोरपि चिदचिद्विशिष्टयोर्ब्रह्मणोरभेद एवेत्यर्थः । किञ्च-

## पूर्ववद्वा ॥३-२-२८॥

वाशब्दोऽवधारणार्थः । पूर्ववदेव यथा पूर्वत्र अंशो नानाव्यपदेशात् प्रकाशादिवत्तु, नैवं पर इत्युभयनिर्देशसिद्धये परमात्मनो निर्दोषत्वोपपत्तये च शरीरशरीरिवत् पृथक्सिद्ध्यनर्हता जीवस्य ब्रह्मांशत्वमभिहितम्, एवमचिद्वस्तुनोऽपि ब्रह्मांशत्वमभिहितम् तथा आत्मपृथिव्यादिचेतनाचेतनवाचकशब्देनापि चिदचिद्वस्तु विशिष्टं ब्रह्मैवाभिधेयमस्ति; तथा श्रुतिषु शरीरशरीरिभावेन जगद्ब्रह्मणोः

'आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वम्' (छा. ७-२५-२ / बृ. ४-५-१)

इत्यभेदव्यपदेशोऽस्ति; जगद्ब्रह्मणोः स्वरूपस्वभावादिभेदज्ञापनाय तयोः पृथक् पृथिग्निरूपणेन भेदव्यपदेशश्चोपपद्यते;

'यस्य पृथिवी शरीरं यं पृथिवी न वेद' (बृ. ५-७-७),

'यस्यात्मा शरीरं यमात्मा न वेद' (बृ. ५-७-२६),

'क्षरं त्वविद्या ह्यमृतं तु विद्या' (श्वेता.५-१),

'विद्याविद्ये ईशते यस्तु सोऽन्यः' (श्वेता. ५-१), इत्यादिना ब्रह्मणो निर्दोषत्वं च ।

## प्रतिषेधाच्च ॥३-२-२९॥

'स वा एष महानज आत्माऽजरोऽमरः' (बृ. ६-४-२५)

'नाऽस्य जरयैतज्जीर्यति विजरो विशोको विमृत्युः' (छा. ८-१-५)
इत्यादिषु ब्रह्मणोऽचेतनधर्मप्रतिषेधाच्च व्यापकभावेन शरीरशरीरिभावेन चांशांशिभाव इत्यभिप्रायः ।

पराधिकरणम् ॥३-२-८॥

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥३-२-३०॥

'जन्माद्यस्य यतः' (भा. १-१-१)
इत्यादिना प्रतिषेधाच्चेत्यन्तेन यः परमकारणतया प्रतिपादितो नारायणः, अतः परमपि वस्त्वस्ति नवेति संशये परमस्तीति पूर्वः पक्षः । तथाहि

'अथ य आत्मा स सेतुर्विधृतिः (छा. ८-४-१)

एतं सेतुं तीर्त्वा अन्धः सन्ननन्धो भवति' (छा. ८-४-२)

इत्यत्रास्य सेतुत्वव्यपदेशात्; एतं सेतुं तीर्त्वेत्यत्रास्य तरितव्यत्वव्यपदेशाच्चात्रोक्तात्पर-मन्यद्ब्रह्मास्तीति गम्यते ।

'चतुष्पाद्ब्रह्म' (छा.३-१८-२)

'षोडशकलम्' (प्रश्न.६-१)

इति परिमितत्वेन चोन्मानव्यपदेशादपरिमितमन्यदस्तीत्यवगम्यते;

'अमृतस्यैष सेतुः' (मुण्ड. २-२-५) इति प्रापकत्वेन श्रुतिव्यपदेशाच्च प्राप्यमन्यदस्तीति प्राप्यप्रापकत्वरूपसंबन्धात्प्रतीयते; तथा

'तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरम्' (श्वे.३-९,१०)

इति पुरुषशब्दनिर्दिष्टाद्ब्रह्मण उत्तरत्वेन भेदव्यपदेशाच्चान्यत् परमस्तीति प्राप्ते वक्ष्यमाण-सूत्राण्यालम्ब्य सिद्धान्तं ब्रूमः- न ह्येतस्मादिति नेत्यन्यत्परमस्तीत्युपदिष्टात्परब्रह्मणः परमन्यन्नास्तीति परत्वनिषेधेन सर्वकारणात्परब्रह्मणः परं वस्त्वन्तरं नास्तीति निश्चीयते । तस्य सेतुत्वव्यपदेशस्त्वेषां लोकानामसंभेदायेति सकललोकासंकरताकारकत्वात्; एतं सेतुं तीर्त्वा सेतुरूपमेतं नारायणं प्राप्येति प्राप्तिवाचकस्तरतिधातुः वेदान्तं तरतीतिवत्; चतुष्पाद्ब्रह्म षोडशकलमित्युन्मानव्यपदेशोऽपि

'वाक्पादः प्राणपादश्चक्षुष्पादः' (छा. ३-१८-२)

इति वदुपासनप्रयोजनतया सम्भवति । अपरिमितस्याऽपि ब्रह्मणोऽमितत्वानुसंधानं तत्तद्देशसंबन्धितयावसेयम् ।

'अमृतस्यैष सेतुः' (मुण्ड. २-२-५)

इति स्वस्यैवामृतस्य स्वमेव प्रापकमित्युच्यते,

'यमेवैष वृणुते तेन लभ्यः' (कठ. १-२-२३) इत्यादिश्रुतेः,
'ततो यदुत्तरतरमि'ति वचनं तेनेदं पूर्णमिति निर्दिष्टात् पुरुषादन्यस्य न परत्वमाह, अपितु
'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता.३-८ / ६-१५)
इति पूर्वप्रतिज्ञातपुरुषवेदनस्यामृतत्वे हेतुत्वं वदति; तद्वेदनादन्यस्य चाऽयथात्वं वददुपसंहरति;
'यस्मात्परं नापरमस्ति किञ्चित्' इत्यारभ्य;
'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वेता.३-९)
इति परस्य पुरुषस्य सर्वस्मात्परत्वम् अन्यस्य परत्वाभावं प्रतिपाद्य यदुत्तरतरं पुरुषतत्त्वं तदेव रूपमनामयं यतः ततो हेतोर्ये एतत्पुरुषतत्त्वं विदुः त एवामृता भवन्ति अथेतरे दुःखमेवाऽपियन्तीति प्रतिज्ञातमनेन पूर्वपक्षो व्यावृत्तः । तान्येव सूत्राण्याह-

## सामान्यात्तु ॥३-२-३१॥

तु शब्दः पूर्वपक्षव्यावर्तकः । तस्य सेतुत्वव्यपदेशस्तु तस्मान्नारायणान्नान्यबोधकः, कुतः, सामान्यात्-लोकविधृतरूपेण सेतुसादृश्याद्धेतोः, अतस्तस्य तथा व्यपदेशोऽस्तीति श्रुतिरेव सेतुशब्दं वक्ति,
'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' (छा. ८-४-१) इति;
यद्यत्स्वभावान् लोकानसृजत तत्तत्स्वभावाऽसंकराय सर्वान् लोकानयमेव सेतुवदन्तर्यामिरूपेण बिभर्ति इति हेतोः स सेतुरित्यर्थः ।

## बुद्ध्यर्थः पादवत् ॥३-२-३२॥

पाद्वत्-'वाक्पादः प्राणपादश्चक्षुष्पादः' (छा. ३-१८-२) इतिवत् चतुष्पाद्ब्रह्म ।
'पादोऽस्य विश्वाभूतानि' (पु. सू. ३) इत्युन्मानव्यपदेशो बुद्ध्यर्थः- वेदनरूपोपासनार्थः ।

## स्थानविशेषात्प्रकाशादिवत् ॥३-२-३३॥

अपरिमित एव यद्यपि नारायणस्तथाप्यस्य स्थानविशेषात्परिच्छेद्यतयानुसन्धानं युज्यते; यथा विततस्य प्रकाशादेरपि वातायनघटादिस्थानविशेषसंबन्धात् परिमितत्वमस्ति तथा युज्यते। अथ प्राप्यस्य प्रापकत्वं चास्तीत्याह-

## उपपत्तेश्च ॥३-२-३४॥

प्राप्यस्यैव नारायणस्य प्रापकत्वं चोपपद्यते यथाह
'यमेवैष वृणुते तेन लभ्य' (कठ.१-२-२३) इति; अतो नारायणान्नास्ति परमित सिद्धम् ।

## तथान्यप्रतिषेधात् ॥३-२-३५॥

'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' (कठ.१-३-११),

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१)

'तमाहुरग्र्यं पुरुषं पुराणम्' (श्वेता. ३-१९),

'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वेता. ३-९),

'यस्मात्परं नापरमस्ति किञ्चित्' (श्वेता. ३-९)

यस्माद्दिव्यपुरुषाकाराद् ब्रह्मणः सकाशादपरं किञ्चित् किमपि वस्तु परमुत्कृष्टं नास्तीत्यर्थः- इत्यादिश्रुतिषु यथा पुरुषाकृतेर्नारायणादन्यस्य श्रेष्ठत्वप्रतिषेधः तथा तेन नारायणेन सहान्यस्य सदृशत्वप्रतिषेधात् स एव सर्वोपास्यस्तद्ज्ञानेनैव मोक्षो भवतीति निश्चीयते। तथाहि श्रूयते-

'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वेता.४-२०),

'न संदृशे तिष्ठति रूपमस्य' (श्वेता. ६-८),

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता.३-८ / ६-१५) इति,

'एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति' (श्वेता. ३-१०) इति,

स्मर्यते च

'निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः' (भा. २-४-१४) इति।

पुनरपि नारायणेन सदृशं तदुत्कृष्टं च किञ्चिदपि वस्तु नास्तीत्याह-

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥३-२-३६॥

आयामो व्याप्तिः, अनेन दिव्यविग्रहपुरुषोत्तमस्य प्रकाशात्मकान्तर्यामिरूपेण सर्वगतत्वं

'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.३-९) इति

'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.महा. ११-६)

'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति' (मुण्डक.१-१-६) इति,

व्याप्तिवाचकशब्देभ्योऽवगम्यते; एवं विज्ञानमेव तस्माद्ब्रह्मणोऽन्यच्छ्रेष्ठं वस्तु निषेधतीति तात्पर्यम्; आदिशब्देन

'सर्वं खल्विदं ब्रह्म' (छा. ३-१४-१)

'आत्मैवेदं सर्वम्' (छा. ७-२५-२)

'ब्रह्मैवेदं सर्वम्' (बृ. ४-५-१) इत्यादयो गृह्यन्ते।

'जन्माद्यस्य यतः' (भा. १-१-१)

इत्यादिभिः सूत्रैरभिहिताज्जगत्कारणाद्ब्रह्मणोऽन्य उत्कृष्टो नास्ति, तेन सदृशोऽपि नास्तीति निश्चीयते।

एवमुक्तः सर्वात्मा नारायणः स्वोपासनरूपाणां च वेदोक्तकर्मणां तत्तद्देवतान्तर्यामिरूपेण स्वयं च फलदाता भवतीति निरूपयितुमिदमधिकरणमाह-

फलाधिकरणम् ॥३-२-९॥

## फलमत उपपत्तेः ॥३-२-३७॥

पूर्वत्र सर्वेश्वरतया प्रतिपादितस्य नारायणस्यैव सर्वेषामनुष्ठातॄणामनुष्ठानफलदातृत्वमुतान्यस्येति संशयः । अनुक्षणविनाशिनोऽपि कर्मणोऽपूर्वं व्यवधानेन कालान्तरभाविफलदाने सामर्थ्यमस्त्येव, ततः कर्मणः फलदातृत्वे सिद्धे सति तदतिरिक्तफलप्रदायकनारायणकल्पने प्रयोजनाभावात्तस्य फलदातृत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु अतः नारायणादेवाराधितात्सर्वेषां कर्मफलसिद्धिः, उपपत्तेः- सेवितराजादिवदुपासितान्नारायणादुपासकानां फलसिद्ध्युपपत्तेः । न ह्यचेतनस्य कर्मणस्तदपूर्वसंज्ञसामर्थ्यस्य वा तारतम्येन प्रति नियतं फलं ज्ञातुं दातुं सामर्थ्यमस्ति । सेवाक्रियायामचेतनायां तथा दर्शनात् । इह शास्त्रसिद्धस्य नारायणस्याकल्प्यत्वान्न प्रयोजनाभावः। तथाहि श्रूयते

'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो निनीषते' (कौषी.३-६४)

इति श्रुतिर्नारायणस्यैव धर्माधर्मफलदातृत्वं देशकालप्रकृत्याद्यनुगुणमतिदानेन तत्कारयितृत्वं च वदति, प्रत्युत अपूर्वस्यैवाश्रुतस्य कल्पने प्रयोजनाभावं तस्मात्कर्मभिराराधितव्यो नारायण एव फलदाता न कर्मेति निर्णयः ।

## श्रुतत्वाच्च ॥३-२-३८॥

श्रूयते हि सर्वकर्मणां फलप्रदाता नारायण एव

'स वा एष महानज आत्मा अन्नादो वसुदानः (बृ. ६-४-२४)

एष ह्येवानन्दयति' (तै.उ.आन. अनु. ७)

इति वसुशब्दवाच्यं भोगापवर्गाख्यफलं ददातीति फलप्रदातृत्वेन श्रुतत्वात् स फलप्रदाता सर्वयज्ञाराध्यश्चेत्यवगम्यते । पक्षान्तरमाह-

## धर्मं जैमिनिरत एव ॥३-२-३९॥

धर्मं यागादिकं कर्म भगवदाराधनरूपं कर्म चैव फलदायिनं जैमिनिराचार्यो मेने; कुतः अत एव उपपत्तेः श्रुतत्वाच्च; उपपत्तिस्तावत् कृष्यादिकर्मणो धान्यादिमर्दनकर्मणश्च

साक्षात्परंपरया वा फलसिद्धिदर्शनं श्रुतं च कामिनानुष्ठितं यागादिकमैव स्वपक्षवस्थारूपेण कामिनः फलसाधनमिति ।

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥३-२-४०॥

तुशब्द उक्तमतं निरासयति । पूर्वमभिहितं कर्मणः फलदातृत्वं नारायणस्यैवास्तीति भगवान्बादरायणो मन्यते; कुतः हेतुव्यपदेशात्-भूतिकामस्य वायुयजनं ततः फलप्राप्तिश्चोक्ता

'स एवैनं भूतिं गमयति' (तै. स. २-१)

इत्यादिषुवाय्वादिशरीररूपेणावस्थितस्य नारायणस्य कर्मविधिष्वेव फलहेतुव्यपदेशात् ।

'यो वायौ तिष्ठन् यं वायुर्न वेद वायुमन्तरो यमयति यस्य वायुः शरीरम्' (बृ.५-७-११) इति वाय्वात्मना तस्यैवावस्थाने श्रूयते तत्परित्यागेनाकर्मणोऽपूर्वद्वारा फलसाधनत्वकल्पनं फलप्रदातृत्वकल्पनं च । कर्मणोऽपूर्वत्वकल्पनं च श्रुतिविरुद्धमेव; अतः सकलदेवतात्मतया सर्वकर्मफलप्रदाता स एवास्तीति तात्पर्यम् । तथाहि स्मर्यते -

'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ (गीता. ७-२१)
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान् हि तान्' ॥ (गीता. ७-२२)
'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (गीता. ९-२४) इति;

एवं सर्वशास्त्रेषु तस्यैव सर्वाराध्यत्वं सर्वयागादिकर्मफलप्रदातृत्वं च सिद्धम् ।

इति
श्रीशुद्धेकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनि विरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
तृतीयाध्यायस्य द्वितीयः पादः ॥२॥



श्रीहरये नमः

## तृतीयाध्याये तृतीयपादः ।

पूर्वत्र नित्यत्वादिगुणको जीव उपासको निरूपितः, सर्वज्ञत्वादिगुणगणवान्नारायण उपास्यश्च । अत्र कथमुपासनमित्याकांक्षायां तन्निरूपणमुत्तरत्र प्रतिपादयति-

सर्ववेदान्तप्रत्ययाधिकरणम् ॥३-३-१॥

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥३-३-१॥

सर्वेषु वेदान्तेषु दहराद्युपासनं श्रूयते; तदेकमुत शाखाभेदादिना भिन्नमेवेति सन्देहः शाखाभेदेन प्रकरणभेदात्प्रतिशाखमुपासनं भिद्यते । तथा छान्दोग्ये तैत्तिरीयब्राह्मणे च ब्रह्मोपासनमाम्नायते । एकत्र

'एष आत्मा अपहतपाप्मा विजरो विमृत्युः' (छा. ८-१-५)

इत्यारभ्य अपहतपाप्मत्वादयो गुणा आम्नाताः । अन्यत्र

'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्' (तै.उ.आन. अनु.१-१)

इत्यारभ्य सत्यज्ञानानन्दादयो गुणाश्चाम्नाताः । तत्र गुणभेदेन उपासनं भिद्यते; छान्दोग्ये पञ्चाग्निविद्यायां कौथुममिति नाम, बृहदारण्यके वाजसनेयमिति नाम; तत्र नामभेदादुपासनं भिद्यते; एकस्यां शाखायामविशेषतया पुनः पठितायाः श्रुतेः प्रतीयमानप्रकरणान्तरस्य च भेदहेतुत्वावगमाच्छाखान्तरे चापि तथैव पठितायाः प्रकरणान्तरं च प्राप्नुवत्यास्तस्यास्तथावगमाच्चोपासनं भिद्यते; मुण्डकशाखायां शिरोव्रताख्यो धर्मः श्रूयते-

'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' (मुण्ड. ३-२-१०) इति;

शिरोव्रतं नाम व्रतविशेषः, आथर्वणिकान्प्रति विहितो नेतरान्प्रति; अतो धर्मभेदादुपासनभेदः; ततः शाखादिभेदादुपासनभेद इति पूर्वः पक्षः । सिद्धान्तस्तु सर्वेषु वेदान्तेषूपनित्सु प्रत्ययो ज्ञानं यस्य तत्सर्ववेदान्तप्रत्ययं दहराद्युपासनमेकमेव; कर्मविधिष्विव चोदनाफलसंयोगरूपाख्यानामविशेषात् भेदाभावात् विद्यादुपासीतेत्युभयविद्या चोदना तावत् शाखाभेदेऽप्यविशिष्टा, फलसंयोगो ब्रह्मप्राप्तिरूपोऽविशिष्टः, वैद्यमपि वैश्वानरादिरूपं ब्रह्माविशिष्टम्, आख्यापि वैश्वानरविद्येत्येवमादिर विशिष्टैवेत्येकमेवोपासनम्; अतः शाखादिभेदेऽप्युपासनं न भिद्यते । तथाहि

'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छा. ८-१-१) इति छान्दोग्ये दहरविद्याविधिः,

'यो वेद निहितं गुहायाम्' (तै.उ.आन. अनु. १-१) इति तैत्तिरीयब्राह्मणे तद्वेदनविधिश्च ।

तत्र स्थानाद्यभेदादुपास्यस्य ब्रह्मणोऽप्यभेदादुभयत्रोक्तानां धर्माणां परस्परमविरोधाच्च

विद्यैक्यमेवास्ति;, तथा छान्दोग्यबृहदारण्यकशाखयोर्द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यस्याग्नि-पञ्चकस्य वेद्यतया यत्स्वरूपमाम्नातं तदुभयत्रापि समानम्, अतो न विद्याभेदः यश्चैकस्यां शाखायामित्यादिना विद्यैक्ये विरोध उपक्षिप्तस्तमनूद्य परिहरति-

## भेदान्नेति चेदेकस्यामपि ॥३-३-२॥

विद्याया अविशेषेण पुनः पठिता श्रुतिः प्रकरणान्तरसहिता सती भेदप्रतिपादिका दृश्यते, ततो न विद्यैक्यमिति चेत्तत्रोत्तरम्-एकस्यामपि विद्यायां शाखान्तरे सति विद्याप्रतिपत्तृभेदात् भिन्नतयोपपन्नापि सा श्रुतिरभेदावहा, एकविद्ययैकोपास्यस्यैवावगमात् । अयं भावः -यस्यां शाखायामेकस्मिन्विद्यागृहीतरि सति ह्यविशेषतया पुनः श्रुतिः पठिता स्यात् प्रकरणान्तरं च तत्र वर्तेत तद्वते तदनुपपत्त्या कर्तव्यभेदाद्विद्याभेदः प्रतीयते; यत्र च विद्यागृहीतुर्भेदे प्रतीयमाने तु तस्य विद्योपदेशार्थत्वेनाविशेषपुनःश्रुत्याद्युपपत्तेस्तत्र कर्तव्यान्तरासंभवान्न विद्याभेद इति शिरोव्रतवतो ब्रह्मविद्यायामधिकार इति यदुक्तं तदसंगतमित्याह-

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३-३-३॥

अथर्ववेदे

'तेषामेवैतां ब्रह्मविद्यां वदेत' (मुण्ड. ३-२-१०)

इति तन्नियमः शिरोव्रतनियमः स्वाध्यायस्य तथात्वेन ह्यङ्गत्वेनास्ति नतु विद्याङ्गत्वेन । तथाहि

'नैतदचीर्णव्रतोऽधीते' (मुण्ड. ३-२-१०)

इति तस्याध्ययनसंबन्धावगमः श्रूयते समाचारे समाचारसंज्ञे ग्रन्थे;

'इदमपि वेदव्रतेन व्याख्यातम्' (समाचाराख्ये आथर्वणे ग्रन्थे)

इति तस्याधिकाराच्च वेदव्रतत्वप्रतिपादनाच्च ब्रह्मविद्यामित्यत्र ब्रह्मशब्दो वेदवाचकोऽपि तस्मात् सववच्च तन्नियमः । यथा सवहोमस्तेषामेव तथा शिरोव्रतमपि अतस्तत्र धर्मभेदेऽपि न विद्याभेदः।

## दर्शयति च ॥३-३-४॥

श्रुतिरेव विद्यैक्यं दर्शयति । तथाहि छान्दोग्ये दहरविद्यायाम्

'अथ यदिदमस्मिन्नित्यारभ्य 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (छा. ८-१-१)

इत्यन्तेनापहतपाप्मत्वादिगुणाष्टकविशिष्टस्य नारायणस्योपासनमभिहितम्;

तैत्तिरीयके तु छान्दोग्यस्थमुपासनप्रतिदर्शनमाजीव्यं विशोकस्तस्मिन्यदन्तस्तदुपा-सितव्यमिति गुणाष्टकयुक्तस्य तस्यैवोपासनमभिहितम्; तदुभयत्र विद्यैकत्वे सति संभवति,

अतस्तत्र विद्याभेदिका श्रुतिरिति शङ्कायाः नावकाशः, तत श्चोदनाद्यविशेषात् सकलवेदान्तप्रत्ययं एकमेवोपासनम्; तद्भेदकशब्दान्तराद्यदर्शनादिति सिद्धम् ।

सर्ववेदान्तचोदितानां विद्यानामैक्यप्रतिपादनफलमाह-

उपसंहाराधिकरणम् ॥३-३-२॥

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥३-३-५॥

एवं सर्ववेदान्तेषु विद्यैक्येनोपासने समाने सत्यपि शाखान्तरसिद्धानां गुणानां शाखान्तर उपसंहारो न कर्तव्यः कर्तव्यो वेति संशये कर्तव्य इति पूर्वः पक्षः । तथाहि छान्दोग्ये दहरविद्यायामपहतपाप्मत्वादयो गुणा आम्नाताः न ते तैतिरीयशाखीयब्राह्मणे आम्नाताः, न तत्र तेषामुपसंहारः कर्तव्यः तत्रानुक्तत्त्वात् विद्योपकारस्तत्रोक्तैरेव सत्यज्ञानानन्दत्वादिगुणैर्भविष्यति किमप्रेरितेनोपसंहारेणेति प्राप्ते सिद्धान्तं ब्रूमः -सर्वत्र विद्यैक्ये छान्दोग्यादिषूक्तानां दहराद्युपासनधर्माणामपहतपाप्मत्वादीनामन्यत्र तैत्तिरीयशाखीय-ब्राह्मणादिषूपसंहारः कर्तव्यः, कुतः, अर्थाभेदात्-विद्योपकाररूपस्यार्थस्यैकत्वात् विधिशेषवत् यथैकविधिशेषतया विहितानामङ्गानामग्निहोत्रादिषूपसंहारस्तथैव नोदनादिभिः समाने दहराद्युपासने गुणानां प्राप्तिरिति गुणोपसंहारो युक्त एव ।

अन्यथात्वाधिकरणम् ॥३-३-१॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥३-३-६॥

वाजिनां छन्दोगानां चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं विधीयते, तत्र विद्यैक्यमस्ति नवेति सन्देहः । तत्र वाजिनां प्राणदृष्ट्योपासनमुद्गानकर्तृविषयमिति

'अथ ह इममासन्यं प्राणमूचुस्त्वं न उदगायेति तथेति तेभ्य एष प्राण उदगायत्'

(बृ. ३-३-३)

इति शब्दात्प्रतीयते । छान्दोगानां तु तदुपासनमुद्गानकर्मविषयमिति

'य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे' (छा. १-२-७)

इति शब्दात् प्रतीयते; तस्माच्चोदनाद्यविशेष्येऽप्यन्यथात्वं विद्ययोर्नैक्यमिति सिद्धान्ती वदेच्चेत्तर्हि पूर्वपक्षी नेत्याह कुतः, अविशेषात्

'द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवाः ज्यायांसः असुरास्त एषु लोकेषु अस्पर्धन्त ते ह देवा ऊचुः हंतासुरान्यज्ञ उद्गीथेनात्ययाम' (बृ. ५-३-१) इत्येकत्र, अन्यत्र च

'देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा

उद्गीथमाजहुरनेनैनानभिभविष्यामः' (छा. १-२-१)

इत्यादि; एवं द्वयोरुपक्रमवचनाविशेषादुभयत्र विद्यैक्यमिति प्राप्ते सिद्धान्तमाह-

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥३-३-७॥

परोवरीयस्त्वं उत्तरोत्तरं श्रेष्ठादपि श्रेष्ठत्वं नोभयत्र विद्यैक्यं प्रकरणभेदात्। तथाहि

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१)

इत्युद्गीथावयवभूतप्रणवविषयमुपासनप्रकरणं छान्दोगानां, वाजिनां तु

'हंतासुरान् यज्ञ उद्गीथेनात्ययाम' (बृ. ३-३-१)

इति कृत्स्नोद्गीथविषयमित्युपक्रमभेदेन रूपभेदाद्विद्याभेदः, परोवरीयस्त्वादिवत्-यथैकस्यामपि शाखायामुद्गीथोपासनेषु परमात्मदृष्टिविधानसाम्येऽपि

'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् (छा. १-९-१),

'स एष परोवरीयानुद्गीथः स एषोऽनन्त' (छा. १-९-२)

इति प्राणाद्यपेक्षयोत्तरोत्तरं श्रेष्ठतयोद्गीथे संपादितस्यापरिमितैश्वर्यतया ततः पृथगवस्थितस्य च तस्य प्राणाद्युद्गीथेषूपासनमादित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनादर्थान्तर-मिति रूपभेदः, तथात्रापि। आशङ्क्य परिहरति-

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥३-३-८॥

संज्ञात-उद्गीथविद्येतिसंज्ञैक्यादुभयत्राभेद इति चेत्तत्रेदमुत्तरं वाच्यं-तद्विद्याभिन्नत्वं पूर्वमुक्तमस्ति हि। विधेयभेदेऽपि तत्संज्ञैक्यं भवति यथा नैयमिकाग्निहोत्रे कुण्ड्यायिनामयनाग्निहोत्रे च नामैक्येऽपि कर्मभेदस्तद्वदत्रापि न विरोधः।

व्याप्त्यधिकरणम् ॥३-३-४॥

## व्याप्तेश्च समञ्जसम् ॥३-३-९॥

छान्दोग्ये

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१) इति श्रूयते;

इह प्रणवोद्गीथयोर्मिश्रितमुपासनम् उतैकविषयमिति संशये पूर्वः पक्षः- यद्यपि प्रणवोद्गीथयोः सामानाधिकरण्यमवगम्यते तच्च विशेषणविशेष्यतया संभवति। यथाप्युद्गीथेन प्रणवो विशिष्यते प्रणवे चोद्गीथ इत्यत्र नियामकाभावात् तन्त्रमुपासनमित्येवं प्राप्ते ब्रूमः - न मिश्रितमुद्गीथप्रणवयोरुपासनम्; छान्दोग्ये प्रथमप्रपाठके 'ओमित्येत-दक्षरमुद्गीथमुपासीतोमिति ह्युद्गायती'ति तस्योपक्रमवदुत्तरत्रापि

'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' (छा. १-१-१०)
इति प्रणवस्य उपास्यत्वव्याप्तेरुद्गीथेन प्रणवो विशेष्यत इत्युपासनस्य प्रणवविषयत्वमेव समञ्जसम्, अतः प्रणव एवोपास्यः, तस्य परब्रह्मवाचकत्वादुपासनं युक्तमेव ।

सर्वाभेदाधिकरणम् ॥३-३-५॥

## सर्वाभेदादन्यत्रेमे ॥३-३-१०॥

'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च'
(छा. ५-१-१)
इति छन्दोगा वाजिनश्च प्राणविद्यायां प्राणस्य ज्येष्ठत्वादिकमधीयते कौषीतकिनश्च; एभिस्त्रिभिरपि वागादिकरणग्रामस्थितेस्तत्कार्यस्थितेश्च हेतुत्वेन प्राणस्य ज्यैष्ठ्यमुपपादितम् । वागादिगतवसिष्ठत्वादिसंबन्धित्वमपि प्राणस्य छान्दोग्ये बृहदारण्ये चोक्तं
'अथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति
अथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति;
अथ हैनं श्रोत्रमुवाच यदहं संपदस्मि त्वं तत्संपदसि' (छा. ५-१-१३) इति;
'अथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसि' (छा. ५-१-१४) इति;
'सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति;
चक्षुर्यद्वा अहं प्रतिष्ठामि त्वं तत्प्रतिष्ठोऽसि' (बृ. ८-१-१४)
इत्यारभ्य
'मनो यद्वा अहमायतनमस्मि त्वं तदायतनमसि' (बृ. ८-१-१४) इति च ।
कौषीतकिब्राह्मणे तु नोक्तमपि तद्वसिष्ठत्वादिकमुपसंहार्यं नवेति संशये
'य एवं विद्वान्' (छा. ५-२४-२) इत्येवं शब्देन तच्छाखोक्तगुणानामेव ग्रहणादन्यत्रोपसंहार्यमिति प्राप्ते ब्रूमः -अत्रानुक्तमपि वसिष्ठत्वादिकमुपसंहार्यमेव, एवं शब्देनानुक्तगुणानामप्युक्तगुणवत् परामर्शेन प्राणस्य गुणिनो गुणानामप्येकत्वेन बुद्धिस्थतत्वात्।

यथा देवदत्तो मथुरायामध्यापयन् दृष्टः माहिष्मत्यामनध्यापयन्नप्यध्यापकत्वेन प्रत्यभिज्ञायते तथा छान्दोग्यादिषु वसिष्ठत्वादिनोक्तः पुनरन्यत्र केवल उच्यमानोऽपि प्राणस्तद्गुणविशिष्टतया बुद्धिस्थो भवति; तत एवं शब्देन परामर्शात् वसिष्ठत्वादिकमुपसंहार्यमिति । अथ सूत्रार्थवर्णनं विधीयते - अन्यत्र कौषीतकिप्राणविद्यायामनुक्ता अपि इमे वसिष्ठत्वादयो गुणास्तत्र सन्त्येव, कुतः सर्वाभेदात् सर्वत्र-प्राणगुणानां भेदाभावात् ।

आनन्दाद्यधिकरणम् ॥३-३-६॥

## आनन्दादयः प्रधानस्य ॥३-३-११॥

अभेदादिति परामृश्यते; प्रधानस्य मुख्यस्य ब्रह्मण आनन्दादयः आनन्दत्वानन्तत्वामलत्वविशोकत्वादयः श्रुतिप्रोक्ता गुणाः सर्वासु परविद्यासु उपसंहार्याः । तथाहि यथा नीलो धवलो रक्तः खण्डः पूणशृङ्ग' इत्यादीनामन्योन्यविरुद्धधर्माणामेव धर्मिभेदावहत्वं न तथा 'नीलं सुगन्धि महदुत्पलमि' त्यत्र नीलिमादीनाम्; एवं ब्रह्मणो गुणानां परस्पराविरोधान्न भेदावहत्वम्, तस्मात् गुणिनो ब्रह्मणः सर्वत्राभेदादुपसंहार्या आनन्दादय इति ।

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥३-३-१२॥

'तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा' (तै.उ.आन.अनु. ५)

इत्यत्राह प्रियशिरस्त्वादयो ब्रह्मधर्मत्वेन श्रूयन्ते; तेऽप्यानन्दादय इव परविद्यासूपसंहार्या नवेति संशये तेषामपि सत्यसंकल्पादिवदुपसंहारे को विरोध इति प्राप्ते ब्रूमः-नास्ति प्रियशिरस्त्वादीनामुपसंहारप्राप्तिः परविद्यासु सत्यसंकल्पत्वादिवत्तेषां दिव्यमूर्तिपरब्रह्म-गुणत्वाभावात्; तेषामुपसंहारे सति ब्रह्मणः शिरःपक्षादिकल्पितावयवभेदः स्यात् । दिव्यमूर्तेस्तस्य तस्मिन् कल्पितावयवभेदे सति ह्युपचयापचयौ प्रसज्येयातामनित्यत्वं च, अतः प्रियशिरस्त्वादयः

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.अनु. १)

'अजरोऽमृतः' (कौषी. ३-६२)

इत्यादिभिर्विरुद्धा भवेयुः, अतस्तेषां नोपसंहारः । आनन्दत्वामलत्वादीनामिव सर्वज्ञत्वादीनां परब्रह्मस्वरूपान्तर्भूतगुणत्वादुपसंहारे सत्यविरोध इत्याह-

## इतरे त्वर्थसामान्यात् ॥३-३-१३॥

इतरे सर्वज्ञत्वसत्यसंकल्पत्वनित्यतृप्तत्वादयो ब्रह्मस्वरूपान्तर्गततयार्थसामान्यात् सर्वत्रोपसंहार्याः । प्रियशिरस्त्वादीनां परब्रह्मस्वरूपे साक्षात्संबंधाभावान्नोपसंहार इति ।

आध्यानाधिकरणम् ॥३-३-७॥

## आध्यानाय प्रयोजनाभावात् ॥३-३-१४॥

इह पूर्वोक्तानन्दमयात्मानुसंधानवदन्नमयादीनामप्यनुसन्धानं नियतमस्ति नवेति संशयः । अन्नमयादि-चतुष्काभ्यन्तरस्यानन्दमयस्य ब्रह्मणोऽन्नमयाद्यनुसंधानक्रममृते

चतुष्टयाभ्यन्तरत्वेनोपासकस्यानुसंधानायोगात् तेषामनुसंधानं नियतमिति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते –

आध्यानाय परब्रह्मानुचिन्तनायैव अन्नमयादीनामनुसंधानं न नियतं प्रयोजनाभावात्; तस्यानन्दमयब्रह्मसिद्धिर्हि प्रयोजनम्, अतस्तत्सिद्धिपर्यन्तमेवान्नमयादीनामनुसंधानम्; अथवा स्वधाम्नि स्थितत्वान्मनोवागाद्यगोचरस्य दिव्यानन्दमयमूर्तेः पुरुषोत्तमस्य आध्यानायानुचिन्तनायैव प्रियादिभिः शिर आदिकल्पनं न तु तत्र प्रयोजनान्तरम्, अतस्तेषां न नियतमनुसंधानम् । किञ्च–

## आत्मशब्दाच्च ॥३-३-१५॥

'एतमन्नमयमात्मानमुपसंक्रामति एतमन्नमयमात्मानमुपसंक्रम्य
एतं प्राणमयमात्मानमुपसंक्रामति' (तै. उ. आन.अनु. ८)

इत्यादिष्वन्नमयादीनां प्रत्येकमात्मशब्दात् अन्नाद्यधिष्ठातुश्चेतनत्वमवगम्यते, अतस्तस्य ध्येयत्वेनानुसंधानमिति चेत् ब्रह्मव्यतिरिक्तानां चेतनानां मुमुक्षुध्येयत्वनिषेधात् ध्यानकाले तेषां नानुसंधानम् । तथा च गोपालतापिन्यां श्रूयते–

'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् ।
द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥ (गो.पू.ता.उ. १-२)
गोपगोपीगवावीतं सुरद्रुमतलाश्रयम् ।
दिव्यालङ्करणोपेतं रक्तपङ्कजमध्यगम् ॥ (गो.पू.ता.उ. १-२)
कालिन्दीजलकल्लोलसंगिमारुतसेवितम् ।
चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः।' (गो.पू.ता.उ. १-२) इति स्मर्यते च–
'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः,
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा' (लिंग पु.उ. ७-११)

इत्यादौ नारायणस्यैव मुमुक्षुध्येयत्वमुक्तं नेतरेषाम्, तोऽन्नमयादीनामनुसन्धानानियमः ।

## आत्मगृहीतिरितरवदुत्तरात् ॥३-३-१६॥

'इहान्योऽन्तर आत्मानन्दमयः' (तै.उ.आन.अनु.५)

इत्यात्मगृहीतः परमात्मविषया न प्रत्यगात्मविषया इतरवत् 'आत्मन आकाशः सम्भूत' इत्यत्रात्मशब्दवत् तदिदमुत्तरात्

'सोऽकामयत बहुस्यां प्रजायेय' (तै.आन.अनु.६-२)

इत्यानन्दमयशब्दवाच्यपरमात्मपरामर्शकतच्छब्दगर्भितादुत्तरवाक्यादवगम्यते । तस्मादानन्दामयात्मानुसंधानं मुख्यं ब्रह्मानसंधानमिति ।

## अन्वयादिति चेत्स्यादवधारणात् ॥३-३-१७॥

अन्नमयादीनामप्यात्मशब्दान्वयात् परमात्मत्वेन तेषामुपासनमविरुद्धमिति चेत्तत्रोत्तरम्-

'अन्योऽन्तर आत्मानन्दमयः' (तै.उ.आन.अनु.५)

इत्यानन्दमयस्य परमात्मनो नारायणस्यान्नमयादिभ्यो भिन्नत्वावगमात्

'चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः' (गो.पू.ता.उ. १-२) इति

'ध्येयो नारायणः सदा' (लिंग पु.उ. ७-११)

इत्यादिषु स्वधामस्थनारायणसेवारूपां मुक्तिं ध्यानेन प्रापयतः स्वस्यैकस्यैव ध्येयत्वेनाव-धारणान्निर्णयपूर्वं कथनाच्च तदात्मत्वेन तेषामुपासनं विरुद्धमेव ।

अत्र हि निरस्तसमस्तकलङ्कत्वेन निखिलमङ्गलभाजनत्वेन च कृष्णनारायणा-दिशब्देनानन्दभूमिः परब्रह्मोच्यते, अतस्तद्ध्यानेनैव तत्सेवारूपा मुक्तिः स्यात्, अतस्तदन्येषामन्नमयादीनां यथोपासनं फलमवगम्यते । एवं च सति तद्व्यतिरिक्तानामनुसंधानं न ह्यानन्दमयनारायणसेवारूपमुक्तिप्रापकम्; अत आनन्दमयो नारायण एक एवानुसंधेय इति तात्पर्यम् ।

कार्याख्यानाधिकरणम् ॥३-३-८॥

## कार्याख्यानादपूर्वम् ॥३-३-१८॥

छान्दोग्यवाजसनेयकयोयोः

'ह ज्येष्ठं च श्रेष्ठं च वेद' (छा. ५-१-१ / बृ. ८-१-१)

त्यारभ्य

'किं मे वास' (छा. ५-२-२ / बृ. ८-१-१४)

इति वागादीन्प्रति प्राणप्रश्नस्योत्तरे अपां प्राणस्य वासस्त्वमुक्तम् । अथ

'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवति'(छा. ५-२-२) इति छान्दोग्ये;

तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ. ८-१-१४)

'तस्मादेवं विदशिष्यं नाचामेदशित्वाचामेदेतमेव तदन्नमनग्नं कुरुत'

(बृ. ८-१-१४ (माध्यिन्दिन पाठ)

इति वाजसनेयके च श्रूयते ।

इहाशनात्प्राक् अशनानन्तरं च विधीयमानमाचमनीयानामपामाचमनं प्राणवासस्त्वं चेत्युभयं विधीयते उत तासां केवलं प्राणवासस्त्वमेवेति सन्देहे उभयत्वोक्तौ

विशेषाभावादुभयमप्यस्तीति प्राप्ते तासामाचमनस्य 'अमृतोपस्तरणमसि स्वाहा' तं मन्त्रमुच्चरेत्।
'आपोऽशनमिति प्राहुर्भोजनादौ पिबेज्जलम्।

'अपोशनमकृत्वा तु यद्भुङ्क्ते द्विजसत्तमः।
अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणं चरेत्'॥ (प्रायश्चित्तमयुखे संवर्तः)

इति स्मृत्याचारप्राप्तत्वादपूर्वपूर्वमप्राप्तमेव तासां यत्प्राणवासस्त्वं तदत्र विधीयते; कुतः कार्याख्यानात्-अप्राप्तस्यैव विधेयत्वाख्यानात्। अप्राप्ते प्राप्तुमर्हे चाचारो विधिकल्पना; तस्मादपूर्वं प्राणवासस्त्वानुसंधानमेव विधेयमिति युक्तम्।

समानाधिकरणम् ॥३-३-९॥

## समान एवं चाभेदात् ॥३-३-१९॥

अग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्या आम्नायते-
'एकत्रात्मानमुपासीत मनोमयं प्राणशरीरं भारूपं
सत्यसंकल्पमाकाशात्मानम्' (अग्निरहस्यम् . १-१०-६/ छा.३-१४-३) इति; इतरत्र
'मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये व्रीहिर्वा यवो वा स एष सर्वस्य वशी
सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' (बृ. ७-६-१) इति;
उभयत्रविद्या भिन्ना नवेति संशयः। एकत्र आकाशात्मत्वेन महत्त्वम्, इतरत्र यवसादृश्येनाल्पत्वम्, एकत्र सत्यसंकल्पत्वम्, इतरत्र वशित्वादिकमिति धर्मभेदाद्भिन्नेति प्राप्ते ब्रूमः- सर्वत्र मनोमयत्वादिके समाने सति आकाशात्मेत्यस्य वाक्यस्य आकाशवत्स्वच्छतापरत्वेन माहात्म्यपरतया स्तुत्यर्हपरत्वेन च 'व्रीहिर्वा यवो वे'त्यस्य चोपासकाल्पहृदयनिवासकपरत्वेन समानत्वोपपत्तेः। एवं च वशित्वादीनामपि सत्यसंकल्पत्वगुणविशेषरूपत्वेन तेषां तदभेदाच्च विद्यैक्यम्।

सम्बन्धाधिकरणम् ॥३-३-१०॥

## सम्बन्धादेवमन्यत्रापि ॥३-३-२०॥

पूर्वत्र यथा विद्यैक्यं प्रतिपादितमेवमन्यत्र बृहदारण्यके,
'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो
यश्चायं दक्षिणेऽक्षन्' (बृ.७-५-१) इत्युपक्रम्य
सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनादित्यमण्डलेऽक्षिणि चोपास्यत्वमुक्त्वा
'तस्योपनिषदहरित्यधिदैवतं तस्योपनिषदहमित्यध्यात्मम्' (बृ. ७-५-३)

इत्यत्रोपास्यस्योपासनशेषतया द्वे हरस्य नामनी आम्नायेते उभयत्रैकस्योपास्यत्वसम्बन्धात्; ते उभयत्रोपसंहार्ये नवेति संशये सत्युपास्यैक्याद्विद्यैक्यम्, अत उभयत्रापि प्रत्येकं द्वे नामनी उपसंहार्ये इति पूर्वपक्षे प्राप्ते उच्यते-

## न वा विशेषात् ॥३-३-२१॥

वा शब्दः पूर्वपक्षव्यावर्तकः । नात्र विद्यैक्यम्, आदित्याक्षिस्थानविशेषसंबन्धित्वेन हि विशेषादुपास्यरूपभेदात् । एवं स्थानविशेषतया विद्याभेदतस्तमेकं परमात्मानं प्रत्येवं द्वे नामनी नियते भवतः न तु प्रतिस्थानम् ।

## दर्शयति च ॥३-३-२२॥

छान्दोग्ये '
य एषोऽन्तरादित्ये हिरणमयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश
आप्रणखात्सर्व एव सुवर्णः' (छा. १-६-६) इति
'एषोऽक्षिणि पुरुषः' (छा. ४-१५-१)

इति श्रुतिद्वयं हिरणमयपुरुषोऽक्षिपुरुषश्चेति द्वे नामनी रुपे च दर्शयत्येकस्य परमात्मनः, अतो विद्याभेदेऽप्युभयेषां नामरूपाणां तत्रोपसंहारो विधीयते नतु प्रत्येकम् ।

सम्भृत्यधिकरणम् ॥३-३-११॥

## सम्भृतिद्युव्याप्त्यपि चातः ॥३-३-२३॥

तैत्तिरीयके राणायनीयानां खिलेषु श्रूयते
'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्मभूतानां प्रथमोऽत जज्ञे
नार्हति ब्रह्मणा स्पर्द्धितुं कः' (तै. यजु.अष्ट. ४-७, तै.ब्रा. ४-७२)

इति ब्रह्मणि ज्येष्ठानां गुणानां संभृतिः संधारणं तस्य द्युव्याप्तिश्चेत्यादिगुणवृन्दमाम्नातं यत्तत्सर्वासु परविद्यासूपसंहार्यम् अथवा कुत्रचिदुपसंहार्यं कुत्रचिन्नोपसंहार्यमिति संशये परविद्यासूपसंहार्यम् अथवा कुत्रचिदुपसंहार्यं कुत्रचिन्नोपसंहार्यमिति संशये अनारभ्याधीतत्वात्तद्गुणजातं सर्वासु परविद्यासूपसंहार्यमिति पूर्वपक्षे प्राप्तेऽभिधीयते यद्यपि स्थानविशेषसंबन्ध्युपासनमनारभ्याधीतमेतद्गुणवृन्दं भवति तथापि ज्यैष्ठैर्वीर्यशब्दवाच्यैर्गुण-गणैर्विशिष्टस्य ब्रह्मणो द्युव्याप्तिसामर्थ्यात्तदगुणजातस्य हृदयाद्यल्पस्थानेषूपसंहारायोगात् अतश्चान्यत्र महास्थानेषु तत्साहचर्याच्च एतदल्पस्थानविहितासु विद्यासु नोपसंहार्यम् अन्यत्र महास्थानविहितासु चोपसंहार्यम् ।

पुरुषविद्याधिकरणम् ॥३-३-१२॥

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥३-३-२४॥

अपिरवधारणार्थः । चकारो विद्याभेदज्ञापनार्थः । छान्दोग्यतैत्तिरीयकयोः पुरुषविद्याम्नाता

'पुरुषो वाव यज्ञः तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम्' (छा. ३-१६-१)

इत्यादिरेकत्र

'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिः' (तै.नारा. अनु. ६४)

इत्यादिरन्यत्र सोभयत्राभिन्ना भिन्ना वेति संशयः ।

उभयत्र पुरुषविद्येति नामाभेदाद्यज्ञावयवकल्पनाया असाम्येऽप्यभिन्नेति प्राप्तेऽभिधीयते तैत्तिरीये पुरुषविद्यायामितरेषां समाम्नातानां यजमानपत्न्यादीनां यज्ञावयवानां सवनत्रयादीनां च छान्दोग्येऽनाम्नानात् तत्रान्यथैव सवनत्रयादिकल्पनाच्च भिन्नैवोभयत्र पुरुषविद्या । तैत्तिरीयके हि

'यत्सायं प्रातर्मध्यं दिनं च तानि सवनानि' (तै.नारा. अनु. ६४)

इति सवनत्रयकल्पनं, छान्दोग्ये पुरुषायुषं त्रेधा विभज्य सवनत्रयकल्पनं तैत्तिरीये ब्राह्मणे

'त्वा महस ओमित्यात्मानं युञ्जीत' (तै. महा. अनु. ६३) इति ब्रह्मविद्यामभिधाय

'ब्रह्मणो महिमानमाप्नोत्' (तै. महा. अनु. ६३) इति तत्फलं चाभिधाय

'तस्यैवं विदुष' इत्यादिनाम्नाता पुरुषविद्या प्रस्तुतब्रह्मविद्याङ्गमस्ति; तत्फलं ब्रह्मप्राप्तिरेव छान्दोग्ये

'प्र ह षोडशं वर्षशतं जीवति' (छा. ३-१६-७)

इति फलं श्रुतं ततः फलभेदादवयवभेदाच्च न विद्यैक्यमिति ।

वैधाद्यधिकरणम् ॥३-३-१॥

## वेधाद्यर्थभेदात् ॥३-३-२५॥

तैत्तिरीयाणामुपनिषदुपक्रमे श्रुतौ

'शन्नो मित्रः शं वरुणः, सह नाववतु' (तै. उ. शिक्षा.अनु. १ (शान्तिपाठः)

इति मन्त्रौ विद्याङ्गभूतौ नवेति संशये विद्यासंधिवशाद्विद्याङ्गभूताविति प्राप्ते उच्यते - वेधादिवदिमावति शेषः । तथाहि यथा आथर्वणिकानामुपनिषदारम्भे पठितः

'सूक्तं प्रविध्य हृदयं प्रविध्ये'त्यादिमन्त्रो हृदयादिवेधप्रकाशनसामर्थ्य-रूपाल्लिङ्गादभिचारशेषः । यथा वा ऐतरेयिणां वाजसनेयिनां चोपनिषदारम्भे पठितं महाव्रतं प्रवर्ग्यरूपं च कर्म श्रुत्या विनियोगात्क्रतुशेषभूतं तथेमावपि मन्त्रौ

'ऋतं वदिष्यामि (तै.उ.(शान्तिपाठः), तेजस्विनावधीतमस्तु' (तै.उ.(शान्तिपाठः)
इत्यादिलिङ्गादध्ययनशेषभूतावेव न विद्याङ्गभूतौ; एवं च सति श्रुतिलिङ्गवाक्यैः अर्थ-भेदात्प्रयोजनभेदात् सन्निधेर्दुर्बलत्वमवगम्यते ।

हान्यधिकरणम् ॥३-३-१४॥

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥३-३-२६॥

विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनं कुत्रचिच्छाखायामाम्नातम्, विमुक्तयोस्तयोर्मध्ये पुण्यस्य प्रवेशस्थानं सुहृदः पापस्य प्रवेशस्थानं शत्रव इति स्थानं चेत्युभयमाम्नातम्, एतत्सर्वं चिन्तनीयमेव । इह विमोचनं प्रवेशस्थानं चेत्यनयोः समुच्चयेन सर्वत्र चिन्तनमुत विकल्पेनेति संशयः । किं तावत्प्राप्तं

'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि' ति शाट्यायनके श्रूयते; ताण्डिशाखायाम्

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य' (छा. ८-१३-१) इति श्रूयते,

'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मुण्ड-३-१-३) इति चाथर्वणे; अत्र विदुषः पुण्यपापपरित्यागप्रतिपादकश्रुतौ परित्यक्तयोः पुण्यपापयोः प्रवेशस्थानं नोपसंहार्यं परित्यागश्रुतत्वादिति प्राप्ते ब्रूमः -हानिर्विमोचनम्, उपायनं प्रवेशः । सूत्रे तुशब्देन हानिशब्दशेषत्वादिति हेतुः समुच्चीयते । तत्र हानिशब्द उपायनशब्दस्याप्युपलक्षणं तेन केवलायां हानावाम्नातायां केवले चोपायने आम्नाते इतरेतरसमुच्चय एव न्याय्यो न विकल्पः । कुतः उपायनशब्दशेषत्वात्-उपायनशब्दस्य हानिवाक्यशेषत्वात् विदुषा त्यक्तयोस्तयोः प्रवेशस्थानवाचिन उपायनशब्दस्य हानिशब्दापेक्षत्वाच्चेत्यर्थः । हानिशब्दशेषत्वाच्च पुण्यपाप-विमोचनवाचिनो हानिशब्दस्य तदुपादानभूतोपायनशब्दापेक्षत्वाच्चेत्यर्थः ।

ननु प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तरवाक्यं कथं शेषभूतमिति चेत् यथा
'वानस्पत्याः कुशाः' (कापिल श्रुतिः) इत्येतद्वाक्यशेषभूतम्
'औदुम्बर्याः कुशाः' इत्येतत्तद्विशेषकं प्रदेशान्तरस्थं यथा वा
'देवासुराणां छन्दोभिः स्तुवीत' इत्येतच्छेषभूतम्
'देवछन्दासि पूर्वाणि' (पैंगी श्रुतिः) इति, यथा
'षोडशिनः स्तोत्रमुपाकरोति' (कृ.यजु.तै.सं.काण्ड.६प्र.६-११)
इत्यत्र छन्दोगानां कालविशेषग्रहणाभावात् षोडशिनः पात्रविशेषस्य ग्रहणे अङ्गभूतं स्तोत्रं कदा कर्तव्यमित्येतच्छेषभूतम्

'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रम्' (कृ.यजु.तै.सं.काण्ड.६ प. ६-११)
इति तैत्तिरीयकवाक्यं यथा
ऋत्विज उपगायन्ती 'त्येतच्छेषभूतं
'नाध्वर्युरुपगायत्' (कृ.यजु. तै.सं. काण्ड.६ प्रपाठक. ३-१) इति शाखान्तरीयं निषेधवाक्यम्, एवमुपायनवाक्यस्य हानिवाक्यशेषतया निर्वाहे सति न विकल्पो न्याय्यः । तदुक्तं पूर्वमीमांसायां जैमिनिना- अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादिति । नन्वर्थवादः कथं देशान्तरस्यार्थवादसापेक्ष इति चेत् न, सामोपास्तिस्तावकत्वेन श्रुतस्य
'एकविंशो वा इतोऽसावादित्य'इत्यर्थवादस्य एकविशंत्वनिर्णयाय तैत्तिरीयकगतसत्रप्रकरणस्यार्थवादापेक्षत्वदर्शनात्
'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः'
(कृ.यजु. तै.सं. काण्ड. ७ प्र.३-१०/काण्ड.५ प्र.१-१०/काण्ड.५ प्र.४-१२)
इति हि तत्र संख्यानिर्वाह उक्तः । ततोऽर्थवाद- त्वेऽप्युपायनमुपसंहार्यम्, हान्युपायनयोरेकत्राप्यवगतिरस्ति कौषीतकिश्रुतौ
'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्'
(कौषी. १-३७) इति,
अतस्तयोः समुच्चयः ।

सांपरायाधिकरणम् ॥३-३-१५॥

## सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥३-३-२७॥

पूर्वोक्तं पुण्यपापविमोचनं देहवियोगकाल एव चिन्तनीयमुत मार्गे वेति सन्दिह्य उभयत्रेति पूर्वपक्षयति । तथाहि
'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' (छा. ८-१३-१)
इति कुत्रचिद्देहवियोगकाल एव श्रुता सुकृतदुष्कृतहानिः,
'कुत्रचित्स आगच्छति विरजां नदीं तां मनसात्येति,
तत्सुकृतदुःष्कृते विधूनुते' (कौषी. १-३७) इति,
अध्वनि श्रुता तद्धानिरिति प्राप्ते सिद्धान्तं ब्रूमः-एवमुभयश्रुतिसद्भावेऽपि सांपराये देहवियोगकाल एव चिन्तनीया तद्धानिः । तदूर्ध्वं या ब्रह्मप्राप्तिस्तदनन्तरं तर्तव्यस्यातिक्रमणीयस्य कर्मसाध्यस्य सुखदुःखभोगस्याभावात् । तथा ह्यधीयतेऽन्ये
'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छां. ६-१४-२)
इति देहवियोगादूर्ध्वं ब्रह्मप्राप्तिरेव ।

## छन्दत उभयाविरोधात् ॥३-३-२८॥

देहवियोगकाले पुण्यपापविमोचनं तदूर्ध्वं ब्रह्मप्राप्तिश्च श्रुयते, एवमुभयत्र श्रुत्यविरोधाद्धैतोस्तत्सुकृतदुष्कृते विधूनुत इति मार्गश्रुतिखण्डः छन्दतो यथेष्टं नेतव्यः

'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' (कौषी. १-३ (२१) इत्यारभ्य

'स आगच्छति विरजां नदीं तां मनसात्येति' (कौषी.१-४-(३७)

इत्यन्तद्वाक्यात्प्रागुपनेतव्य इत्यर्थः । अत्र पूर्वपक्षी वदति-

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥३-३-२९॥

देहवियोगकाले विरजानद्यतिक्रमणकाले चेत्युभयथा कर्मक्षये सत्येव देवयानगतेः अर्थवत्त्वं प्रयोजनवत्त्वम्; अन्यथा देहवियोगकाल एव सर्वकर्मक्षये सति सूक्ष्मशरीरधारक-कर्मनाशः स्यात्, तथा सति सूक्ष्मशरीरानुपलब्धेः देवयानगतिश्रुतिविरोध इति प्राप्ते ब्रूमः-

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३-३-३०॥

देहवियोगकाले सर्वकर्मक्षये सत्यपि गतिविधिरुपपन्न एव परब्रह्मोपासकानाम्; कुतः तल्लक्षणार्थोपलब्धेः- क्षीणकर्मणामप्याविर्भूतस्वरूपाणां तेषां भागवतीतनुसंबन्ध-लक्षणार्थोपलब्धेः ।

'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते

स तत्र पर्येति जक्षत्क्रीडन् रममाणः' (छा. ८-१२-३) ,

'स्वस्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति' (छा.७-२५-२)

इत्यादिषु भागवतीतनुसंबन्धः श्रूयते । लोकवत्-यथा लोके राजाश्रितानां पुरुषाणामितरपुरुषसाधारणसर्वार्थसिद्धिर्नास्ति किन्त्वधिकैव तद्वत् ।

तथा सति परब्रह्मैकान्तिकभक्तानां देहवियोगकाले सकलकर्मक्षयेऽपि परब्रह्मोपासनबलादुपगत-भागवतीतन्वा देवयानश्रुत्यभिहितमार्गगतिः तत्तद्देशविहारशशांकसंवादादिसर्वार्थसिद्धिसंभवश्च श्रूयते । अतो मार्गश्रूतेरपि न बाधः ।

'स आगच्छति विरजां नदीं तां मनसात्ये'ति, तत्सुकृतदुष्कृते विधूनुते' (कौषी.१-४-(३७)

इति श्रुतिस्तु

'छन्दत' (ब्र.सू. ३-३-२८) इति सूत्रे व्याख्याता ।

अथवा सा निरवयवाक्षरब्रह्मोपासकानां देहवियोगकालानन्तरं सुक्ष्मशरीरेणार्चिरादिमार्गे विरजानदीप्राप्त्यनन्तरं सुकृतदुष्कृतमयशरीरभङ्गपूर्वकनिरवयवाक्षरब्रह्मैक्यप्राप्तिबोधकेति निर्णयः । आधिकारिकाणां कथं मुक्तिप्रकार इति चेत्तत्राह-

यावदधिकाराधिकरणम् ॥३-३-१६॥

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३-३-३१॥

सर्वत्राभिहितं परब्रह्मोपासकानां शुभाशुभकर्मविमोचनमर्चिरादिमार्गेण ब्रह्मपुरप्राप्तिश्च। अत्र ब्रह्माण्डकलापे परब्रह्मोपासकानामाधिकारिकाणां देवानामृषीणां च अधिकारभोगसमाप्तिमृते ब्रह्मपुरप्राप्तिरूपा मुक्तिरस्ति नवेति संशयः । किं तावत्प्राप्तं वसिष्ठादीनामधिकारिणां तत्र तत्र पुराणादिषु जन्मान्तरश्रवणात्तेषां तत्त्वविदामधिकारसमाप्तिं विनापि मोक्षप्राप्तिरिति चेदत्रोच्यते- अधिकारिपुरुषाणां शापेन स्वेच्छया वा स्वाधिकारिक-देहपातादनन्तरप्राप्तमनुष्यादिदेहपातादनन्तरं न फलान्तरानुभवः, किन्तुआप्रारब्धाधिकारहेतु-कर्मविनाशादूर्ध्वमेवेति निश्चीयते ।

एवं च सति यावदधिकारसमाप्तिस्तावत्तद्धेतुकर्मानुभवाय तत्रैव तेषामवस्थितिर्नार्च्चिरादिगत्या ब्रह्मपुरप्राप्तिः । तेषां तदन्यज्ञानिनां च प्रारब्धकर्मभोगानन्तरमेव सर्वकर्म नश्यति, अतोऽधिकारिणामधिकारनिवृत्तेरनन्तरं मुक्तिर्न मध्ये मोक्षप्राप्तिः । प्रत्यक्षश्रीहर्यैकान्तिकभक्तानां तु तदिच्छात एव ब्रह्मपुरप्राप्तिर्नतु प्रारब्धकर्मभोगाधीना। परब्रह्मणः स्वातन्त्र्यादिति पक्षान्तरनिर्णयः ।

अनियमाधिकरणम् ॥३-३-१७॥

## अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥३-३-३२॥

उपकोसलाद्युपासनेष्वर्च्चिरादिगतिराम्नायते । सा किं तन्निष्ठानामेव उत सर्वेषां ब्रह्मोपासकानामिति संशयः । छान्दोग्ये पञ्चाग्निविद्यायामुपकोसलविद्यायां चार्च्चिरादिगतिः पठिता, इतरासु ब्रह्मविद्यासु न पठिता; यासु प्रकरणवशाच्छ्रुता तास्वेव नियता नापरास्विति पूर्वपक्षे प्राप्ते ब्रूमः-यासु श्रुता तास्वेवेति न नियमः, अपि तु सर्वासु परब्रह्मोपासनासु गतिर्भवति; तथा सत्येव शब्दानुमानाभ्यां-श्रुतिस्मृतिभ्यामविरोधः । पञ्चाग्निविद्यायां

'ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्च्चिषमभिसंभवति' (छा. ५-१०-१)

इति अविशेषेण श्रुतिः स्मृतिरपि-

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' ॥ (गीता. ८-२४)

इत्यविशेषिका । ततः सर्वेषां परब्रह्मोपासकानामर्च्चिरादिगत्या ब्रह्मपुरप्राप्तिर्नियतैव ।

अक्षराधिकरणम् ॥३-३-१८॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३-३-३३॥

बृहदारण्यके

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गम्' (बृ. ५-८-७)

इत्यादौ ब्रह्मस्वरूपबोधाय केचन निषेधाः श्रुताः, तथा चाथर्वणे

'अथ परा यया तदक्षरमधिगम्यते यत्तदद्दश्यमग्राह्यमगोत्रमवर्णम्' (मुण्ड-१-१-५,६)

इत्यादौ केचन निषेधाः श्रुताः, तेषामानन्दादिवदुपसंहारोऽस्ति नवेति संशयः। तत्र किं प्राप्नोति तेषां निषेधानामानन्दादिवद्गुणत्वाभावात् न सर्वासु परविद्यासूपसंहार इति प्राप्ते ब्रूमः - अक्षराख्यपरब्रह्मसंबन्धिनीनामस्थूलत्वादृश्यत्वादिनिषेधधियां तत्तन्निषेधबुद्धिरूपाणां गुणानां सर्वासु परविद्यास्ववरोध उपसंहार उचितः, कुतः, सामान्यतद्भावाभ्यां सकलमंगलगुणिनो ब्रह्मपुरस्थस्य दिव्यमूर्त्तेरुपास्यस्य परमात्मनः सर्ववेदेषु सामान्यादेकत्वागमात् तत्र तेषां धर्माणां भावाच्च एतैर्हि सकलेतरवस्तुविसजातीयपरब्रह्मानुसंधानोपपत्तिर्युक्तेतरथा नास्ति । हेयगुणसंबन्धानर्हानन्दादयो हि प्रत्यगात्मनः सकाशात् परब्रह्मणो वैलक्षण्यबोधकाः । नन्वस्थूलादृश्यत्वादयो धर्मा जीवात्मन्यपि संभवन्तीति चेन्नहि तस्यानाद्यविद्यावशत्वेन स्थूलत्वादिस्वभावसंबन्धादेते संभवन्ति; प्रधानानुवृत्तित्वं गुणस्य स्वभावः। तथात्वे निदर्शनमाह- औपसदवदिति; यथा

'जमदग्निः पुष्टिकामश्चतूरात्रेणायजते'ति यजुर्वेदविहिते जामदग्न्यहोत्रे पुरोडाशसंबन्धिन्य उपसदः इष्टयः उपदिष्टाः सन्ति । तत्र पठितानां पुरोडाशप्रदानमन्त्राणामग्नेवैं होत्रं विरध्वरमित्यादीनामुद्गातृसामवेदपठितत्वेन सामवेदस्वरस्योदात्तत्वबोधके उच्चैस्त्वे प्राप्तेऽपि तेषां याजुर्वैदिकाध्वर्युकर्तृकपुरोडाशसंबंध्युपसदनुवृत्तित्वादनुदात्तत्वबोधकमुपांशुगुणत्वं तथा गुणिनः प्रधानभूतस्य परमात्मनः स्वरूपवैलक्षण्यबोधाय यत्र कुत्रापि श्रुतानां तत्तन्निषेधबुद्धिरूपाणां गुणानां तदनुवर्तित्वम्। तदुक्तं धर्ममीमांसाप्रथमकाण्डे गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इति; नैतावता सर्वेषामुपसंहार्यत्वप्रसक्तिरित्याह-

## इयदामननात् ॥३-३-३४॥

आमननमाभिमुख्येन मननं इयदेव गुणजातं सर्वत्रोपसंहार्यं येन गुणजातेन सकलेतरव्यावृत्तं ब्रह्ममननं भवति, अतोऽक्षराराख्यपरब्रह्मसंबन्धिनीनां अस्थूलत्वादिनिषेधधियामेव

सकलेतरवस्तुव्यावर्तकधर्मरूपत्वादुपसंहारः परविद्यासु नतु 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस' (छा. ३-१४-२,३) इत्यादिनामपीति ।

अन्तरत्वाधिकरणम् ॥३-३-१९॥

## अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥३-३-३५॥

अन्तराशब्द उभयप्रश्नभेदसूचकः । बृहदारण्यके

'यत्साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व' (बृ. ५-४-१)

इति उषस्तप्रश्ने प्रतिवचनमेवमाम्नायते

'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तर' (बृ. ५-४-१) इत्याद्यतो 'अन्यदार्तम्' (बृ. ५-४-२) इत्यन्तम् ।

तदनन्तरम्

'यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व' (बृ. ५-५-१)

इति कहोलप्रश्ने तु प्रतिवचनमेवमाम्नायते

'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं हैवमात्मानं विदित्वा' (बृ. ५-५-१)

इत्याद्यतोन्यदार्त्तमित्यन्तम्; इहोभयत्र विद्यैक्यं नवेति संशयः । तथा सति य आत्मेत्युषस्तप्रश्नो भूतग्रामवत्स्वात्मनः देहवतः स्वकीयात्मनः संबन्धी प्रत्यगात्मविषय इत्यर्थः । अन्यथा स परमात्मविषय इत्युक्तौ

'यः प्राणेन प्राणिति स त आत्मा' (बृ. ५-४-१)

यत्र प्रतिवचनविषयः प्रत्यगात्मेत्युक्ते विरोधात् कहोलप्रतिवचनविषयस्याशनायाद्यतीतत्वहेतोः परमात्मनो भेदानुपपत्तिरित्युभयप्रश्नवचनपक्षे विद्याभेदरूपा पूर्वपक्षशङ्कास्तीति चेत्तत्र सिद्धान्तयति-नोपदेशवदिति उभयत्र प्रश्नैकरूप्यात् नारायण एवात्र प्रश्नविषयः न प्रत्यगात्मा । प्रतिवचनगतं निरुपाधिकं प्राणनादिहेतुत्वमशनायाद्यतीतत्वप्रयोजकत्वं च तत्रैव समुपपद्यते सद्विद्योपदेशवत् । प्रश्नप्रतिवचनावृत्तिरेकविषया प्रष्टृभेदो रूपभेदश्च न विद्याभेदावहः । तथा ह्याह-

## व्यतिहारो विशिंषन्ति हीतरवत् ॥३-३-३६॥

अर्थैक्ये निश्चिते सति तयोरुभयोः प्रष्ट्रोः प्रतिवचनगतबुद्धिव्यतिहारः परस्परं कर्त्तव्यः । तथाहि उषस्तेनाप्यशनप्रभृत्यतीत्त्वधीः कार्या तथा कहोलेनापि प्राणनादिहेतुत्वादिधीः कार्या । उभयत्र गतानि हि वाक्यानि नारायणं विशिंषन्ति इतरवत् यथेतरत्र सद्विद्यायां एकस्यैव प्रश्नप्रतिवचनगतत्वं तद्वत् अतो न विद्याभेदः ।

सत्याद्यधिकरणम् ॥३-३-२०॥

## सैव हि सत्यादयः ॥३-३-३७॥

यद्दृष्टान्तेन पूर्वाधिकरणनिर्णयः तत्रापि सद्विद्यायां संशयः भिन्नेयमभिन्ना वेति । प्रश्नश्रुतिदर्शनात् प्रतिवचनभेददर्शनेन प्रत्यावृत्तिभेदात् सा भिन्नेति प्राप्ते ब्रूमः -न भिन्नेयं सद्विद्या

'सेयं देवतैक्षत' (छा. ६-३-२)

इति प्रस्तुताया एव हरिदेवतायाः प्रश्नप्रतिवचनेष्वनुवृत्तेः यतस्तत्सत्यं स आत्मा तत्त्वमसीति पुनः पुनः सत्यादीनामावृत्तिर्गम्यते; अतो वस्त्वैक्यादभिन्नेयं विद्येति ।

कामाद्यधिकरणम् ॥३-३-२१॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥३-३-३८॥

छान्दोग्ये वाजसनेयिशाखायां च दहरविद्या श्रुता सेयमभिन्ना भिन्ना वेति संशये पूर्वः पक्षः

'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छा. ८-१-१)

इत्यारभ्य दहराकाशशब्दोक्तस्यदहरपुण्डरीकवर्तिनोऽपहतपाप्मत्वादिगुणाष्टकं मुख्यमाम्नातं वाजसनेयिशाखायाम्

'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते (बृ. ४-१-१७ / बृ. ६-४-२२)

'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' (बृ. ७-६-१)

इति वशित्वादयो धर्माः प्रदर्शिता । इत्युभयत्रोपास्यस्य धर्मिणः परमात्मन एकत्राकाशशब्द-वाच्यत्वमितरत्र चाकाशे शयानत्वम्; एवं तस्य रूपभेदाच्च विद्या भिन्नेति प्राप्ते सिद्धान्तं ब्रूमः। तत्र वाजनेयिशाखायामाकाशशयानस्य दिव्यमूर्तेः परमात्मनश्चिदाकाशशरीरतया

'यस्याकाशः शरीरम्' (बृ. ५-७-१२) इति श्रुतत्वात्, इतरत्र छान्दोग्ये शरीरशरीरिणोरभेदविवक्षान्यायत आकाशरूपतया श्रुतत्वाच्च पुण्डरीकायतनादिभ्यो विद्यैक्यमेव । अतः सत्यकामादिगुणजातं सर्वत्रोपसंहार्यं छान्दोग्यगतापहतपाप्मत्वादयो वाजिशाखागता वशित्वादयश्च सर्वे एते गुणा दहरविद्यायां दिव्यमनोहरमङ्गल-मूर्तेर्नारायणस्यानुसंधेयाः । ननु यथा प्राकृतावयविनः पुरुषस्यावयवादिलोपस्तथा दिव्यमूर्तेः परमात्मनोऽप्यवयवादिलोपः स्यादिति चेत्तत्राह-

आदराधिकरणम् ॥३-३-१॥

## आदरादलोपः ॥३-३-३९॥

पूर्वत्रापहतपाप्मत्वादिगुणगणविशिष्टमप्राकृतावयविपरब्रह्मस्वरूपं सत्यसंकल्पत्वादि-

गुणवृन्दं च निरूपितम् । इह तस्य मनोहररूपस्य तेषां गुणानां च तेजःपुञ्जरूपेऽक्षरब्रह्मणि कदाचिल्लोपः स्यादथवा कदाचिदपि लोपो न स्यादिति सन्देहः । अत्र किं तावत्प्राप्तम् उपासनार्थं परमात्मनि तस्य तेषां च कल्पितत्वात्कदाचिल्लोपो भवेदिति पूर्वपक्षे प्राप्ते सिद्धान्तयति-तद्दिव्यमनोहरावयवयुतस्वरूपस्य तेषां गुणानां चानादिसिद्धत्वेन सर्वत्र श्रुतिस्मृतिष्वभ्यासस्यादरादलोप एव । अत एवानादिसिद्धदिव्यावयविदिव्याप्राकृतगुणगण-विशिष्टमसंख्यकोटिसूर्यचन्द्रमससंनिभे ब्रह्मपुरे सदा वर्तमानं सपार्षदं परमात्मस्वरूपं निरन्तरालुप्तमुच्यते । तथा ह्युपनिषत्सु श्रूयते, पुराणेतिहासादिषु स्मर्यते च –

'चरणं पवित्रं विततं पुराणम्' (कृ.यजु.तै.काठक प्र.३ अनु.३-४) इति,

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१) इति,

पुरुषस्य द्विभुजनरस्य विधाः करचरणाद्यवयवा इव विधा यस्य इत्यर्थः ।

'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष स
व्योम्न्यात्मा प्रतिष्ठितः' (मुण्ड. २-२-७) इति

'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' (बृ. ७-६-१) इति

'हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश
आप्रणखात्सर्व एव सुवर्णः' (छा.१-६-६) इति

'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः
सत्यकामः सत्यसंकल्पः' (छा. ८-१-५) इति,

'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.३-९) इति,

'पुरुषान्न परं किञ्चित्सा काष्ठा सा परागतिः' (कठ.१-३-११) इति,

'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः
स वा एष पुरुषविध एव' (तै.उ.आन.अनु. ५) इति,

'स्वभक्तेभ्यो रमते स मे सर्वस्वमि'ति,

स्वभक्तैः साकं रमत इत्यर्थः,

'अक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः' (श्वेता. ४-८)

इति विश्वेभ्यः सर्वेभ्यो ब्रह्मादिभ्य आधिक्येन वर्तमानाः देवा दिव्याप्राकृतदेहा हरिपार्षदाः परमे भौतिकाकाशादुत्कृष्टे व्योमनि चिदाकाशाख्ये अक्षरे ब्रह्मणि निषेदुः तत्परिचर्यार्थं निषण्णा अभविन्नति तात्पर्यार्थः ।

'ददर्श कृष्णं ग्रीष्मस्य कोटिसूर्यसमप्रभम् ।
द्विभुजं मुरलीहस्तं किशोरं गोपवेषकम्' ॥
'परमात्मानमीशं च भक्तानुग्रहविग्रहम् ।
ब्रह्मविष्णुशिवाद्यैश्च स्तुतं मुनिगणैर्नुतम्' इति ।

'एका मूर्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः ।
ज्वालामालोपरुद्धाङ्गी निष्ठा सा योगिनां परा ॥ (मार्कण्डेय पु. ४-४५)
दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा ।
वासुदेवाभिधानासौ निर्मलत्वेन दृश्यते' ॥ (मार्कण्डेय पु. ४-४६) इति ।
'इति सञ्चिन्त्य भगवान् महाकारुणिको हरिः ।
दर्शयामास लोकं स्वं गोपानां तमसः परम्' ॥ (भा. १०-२८-१४)
सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् ।
यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः' ॥ (भा. १०-२८-१५)
'नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः ।
कृष्णं च तत्र छन्दोभिः स्तूयमानं सुविस्मिताः' ॥ (भा. १०-२८-१७) इति
'तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास परं न यत् परम्' (भा. २-९-९),
'प्रवर्तते यत्र रजस्तमस्तयोः सत्वं च मिश्रं न च कालविक्रमः ॥
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः' । (भा. २-९-१०)
ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् ।
सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम्' ॥ (भा. २-९-१४)
'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्' । (गीता. ४-६)
यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । (गीता. १०-३)
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ॥ (गीता. १४-२) इति ।

महाभारते च –

'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' ।

इत्यादिषु नित्यसिद्धत्वेन निरूपिता ये दिव्यावयविपुरुषोत्तमतल्लोकपार्षदगुणास्तेषां सच्छास्त्रेष्वत्यादरेण निर्णितत्वात् प्राकृतात्यन्तिकप्रलययोरपि लोपो न भवेदेवेति निश्चीयते ।

उपस्थिताधिकरणम् ॥३-३-२३॥

## उपस्थितेऽतस्तद्वचनात् ॥३-३-४०॥

इह पूर्वाधिकरणोक्तं परब्रह्मस्वरूपमेव मुक्तप्राप्यमुतान्यदिति संशयः । किं तावदत्र प्राप्यते
'अपाणिपादम् (श्वेता. ३-१९)
'निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वेता. ६-१९)
इत्यादिषु ब्रह्म निर्विशेषमेव श्रूयते;

'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड-३-२-९)

इति मुक्तस्य तत्स्वरूपापत्तिरेव मुक्तिरतो निर्विशेषमेव ब्रह्म मुक्तप्राप्यं नान्यदिति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः-पूर्वाधिकरणनिर्णितं दिव्याप्राकृतावयविदिव्याप्राकृतगुणगणविशिष्टं परब्रह्मस्वरूपं मुक्तप्राप्यं नान्यत्। कुतः तद्वचनात्-

'विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड-३-२-८)

इति प्राकृतनामरूपादिमुक्तो जीवात्मा नारायणोपासनोपलब्धया प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमित्यादिनोक्तया भागवतीतन्वा परात् सर्वोत्कृष्टादक्षरब्रह्मणः सकाशात्परमुत्कृष्टं दिव्यमप्राकृतं पुरुषं पुरुषाकृतिं पुरुषोत्तमं भगवन्तमुपैति प्राप्नोतीति तात्पर्यार्थः। इति मुक्तस्य तत्प्राप्यत्ववचनात्। एवं पुरुषाकारतया प्रतिपादिते परब्रह्मणि उपस्थिते समीपे स्थिते सति तद्दर्शनादिना भक्तजनस्य निरतिशयानन्दो भवति, अतस्तदेव प्राप्यमिति निश्चीयते। निष्कलं निष्क्रियमित्यादिवाक्यजातं प्राकृतावयवक्रियागुणनिषेधपरं न त्वप्राकृतावयवक्रिया-गुणनिषेधपरम्; तथाहि

'अपाणिपादम्' (श्वेता. ३-१९) इत्यादिना

'निष्कलं निष्क्रियम्' (श्वेता.६-१९) इत्यादिना च

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१) इत्यादिना

'ज्ञः कालकालो गुणी' (श्वेता. ६-१६) इत्यादिना

'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (श्वेता. ६-१६)

इत्यादिना च परब्रह्मणो निरवयकत्वे निर्गुणत्वे च सावयवत्वे सगुणत्वे च सामान्येन प्राप्ते सति

'चरणं पवित्रं विततं पुराणिम्' (कृ.यजु.तै.काठक प्र.३ अनु. ३-४) इति

'अन्योऽन्तर आत्मानन्दमयः स वा एष पुरुषविध एव' (तै.उ.आन.अनु. ५) इति,

'अपहतपाप्म' (छा. ८-१-५) इति,

'यः सर्वज्ञः सर्ववित्' (मुण्ड.१-१-१०)

त्यादिभिः श्रुत्यन्तरैर्निरवयवत्वनिर्गुणत्वप्रतिपादकश्रुतिभ्यः प्राकृतावयवहेयगुणराहित्यं सावयवत्वसगुणत्वप्रतिपादकश्रुतिभ्यश्चाप्राकृतावयवकल्याणगुणगणसाहित्यं चेति विज्ञायते। अतो दिव्यावयवमप्राकृतकल्याणगुणगणविशिष्टं परब्रह्मैव मुक्तप्राप्यं फलमिति सिद्धम्।

तन्निर्धारणानियमाधिकरणम् ॥३-३-१॥

## तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥३-३-४१॥

छान्दोग्ये

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१)

इति कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि कर्मसु नियतान्युतानियतानीति सन्देहः। अत्र किं तावत्प्राप्तं

तेषां कर्माङ्गत्वात्कर्मानुष्ठाने तानि नियमेनानुष्ठेयानीति पूर्वः पक्षः।

तेषां कर्मप्रकरणमनारभ्याधीतत्वेऽपि

'ओमित्येतदक्षरम्' (छा. १-१-१)

इत्यादिवाक्यादेव क्रतुसंबन्धोपपत्तेः। यथा

'यस्य पर्णमयी जुहुर्भवति' (कृ.यजु. तै.सं. काण्ड. ३ प्रपाठक. ५-७)

इत्यत्र अनारभ्याधीतस्य पर्णमयत्वस्य अव्यभिचरितक्रतुसंबन्धिजुहूद्वारा एतद्वाक्यतः क्रतुसंबन्धः, तथा

'य एवं विद्वानुद्गायति य एवं विद्वान्साम गायति' (छा. १-७-९)

इत्यव्यभिचरितक्रतुसंबन्धिसामोद्गीथादिद्वारा तदुपासनानां क्रतुसंबन्धिः, अतः कर्मसु नियतान्युद्गीथाद्युपासनानीत्येवं प्राप्ते सिद्धान्तं ब्रूमः-गोदोहनादिवदनियतान्युपासनानि। यथा

'चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्ये'ति अपां प्रणयनमाश्रित्य विधीयमानं गोदोहनमक्रत्वर्थत्वादैच्छिकमेव नतु गोदोहनेन सहापां प्रणयनादिवत्क्रत्वर्थे नियतं तथा कर्माण्याश्रित्य विधीयमानान्युपासनानि क्रत्वेर्थे नियतानि न भवन्ति,

'तेनोभौ कुरुतौ यश्चैतदेवं वेद यश्च न वेद' (छा. १-१-१०)

इत्यत्रोद्गीथाद्युपासनरहितस्यापि क्रत्वनुष्ठानदर्शनात्।

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १-१-१०) इति वर्तमाननिर्देशेऽपि क्रतोर्वीर्यवत्तरत्वसाधनतयोपासनाविधिकल्पनात् वीर्यवत्तरतानामप्रबल-कर्मान्तरप्रतिबन्धाभावेनाविलम्बितफलत्वमेव तथा कामवृष्ट्यादिपृथक्फलश्रवणाच्च, एवं विद्यायुक्तकर्मणः पृथक्फलम्, अतः कर्मसु न नियतान्युद्गीथाद्युपासनानि। अथ सूत्रपदार्थो वर्ण्यते-तन्निर्धारणानियमः तस्य मनसो निश्चयेन धारणं यस्मिंस्तदुद्गीथोपासनं तस्य कर्मस्वनियमः, कुतः तद्दृष्टेः-

'तेनोभौ कुरुत' (छा. १-१-१०)

इत्यनियमदर्शनात् पृथग्भूतं ह्युपासनस्य फलमित्यवगम्यते। तत्फलस्य चाप्रतिबन्धोऽविलम्बितत्वं शीघ्रप्राप्यत्वमित्यर्थः।

प्रदानाधिकरणम् ॥३-३-२५॥

## प्रदानवदेव तदुक्तम् ॥३-३-४२॥

एकस्यैव नारायणस्य परब्रह्मणः सर्वासु परविद्यासु तत्तद्गुणस्थानविशिष्टतया पृथक्चिन्तनीयत्वमुक्तं तत्संभवति नवेति संशयः। किं तावत्प्राप्तं गुणभेदेऽपि गुणिनो ब्रह्मण एकत्वादुपासनं न भिद्यते। यथैकस्य राज्ञस्तत्तद्भूषणादिविशेषणभेदेन युक्तस्यापिकार्यदर्शनव्यायामभोजनासनमृगयासमरादिव्यापारेषु सिंहासनादिस्थानभेदेऽपि भेदो

न दृश्यते तथा दहरादिस्थानभेदेऽपि तत्तद्गुणभेदविशिष्टस्यापि ब्रह्मण एकत्वात्तदनुसंधानमेकमेवेत्येवं प्राप्ते ब्रूमः- एकस्यैव परब्रह्मणो नारायणस्य स्वरूपाभेदेऽपि तत्तद्गुणादिविशिष्टस्वरूपतया गुणादिरूपविशेषणभिदया भेदात्तत्तद्विशिष्टगुण्यावृत्त्या-पृथक्तदुपासनप्रयोगः, इन्द्रप्रदानवत्;

'यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे'

(कृ.यजु. तै.सं. काण्ड. २ प्रपाठक. ३-६)

इति पुरोडाशत्रयवत्यामिष्टौ राजाधिराजस्वराजगुणभेदेन तद्विशिष्टदेवताभेदात्पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेदस्तद्वत्; तदुक्तं 'नाना वा देवता पृथक्त्वादि'ति संकर्षणेन। अत एकस्यापि परब्रह्मणो गुणभेदात् उपासनपृथक्त्वम्। यदुक्तमेकस्य राज्ञ इति तत्रापि राजस्वरूपाभेदेऽपि स्थानगुणादिभेदादुपासनप्रकारो भिन्न एव सेवकानामिति।

लिङ्गभूयस्त्वाधिकरणम् ॥३-३-१॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥३-३-४३॥

तैत्तिरीयाः पठन्ति

'सहस्रशीर्षं देवं सहस्राक्षं विश्वसंभवं विश्वतः परमं नित्यविश्वं नारायणम्'

(तै.महा.अनु. ११-१) त्यारभ्य 'सोऽक्षरः परमः स्वराडित्यन्तम्' (तै.महा.अनु. ११-१३)।

अस्मिन्ननुवाके उपास्योऽभिहितः। किमयं पूर्वाऽनुवाकोदितदहरविद्योपास्य विशेषनिर्द्धारणार्थः, उत सर्ववेदान्तोदितसर्वपर-विद्योपास्यविशेषनिर्द्धारणार्थ इति संशयः। दहरविद्याया आनन्तर्येण सान्निध्यात् स दहरविद्योपास्यविशेषनिर्द्धारणार्थ इति पूर्वः पक्षः। सहस्रशीर्षमित्यादि द्वितीयाविभक्तिनिर्देशस्य दहरविद्याभ्यन्तरोदितोपासिना पुरुषेण सह संबन्धस्यैव युक्तत्वादिति प्राप्ते सिद्धान्तं ब्रूमः- तदेव परमं ब्रह्म परंज्योतिः परमात्माऽक्षरशिवादिशब्दैः समस्तपरविद्योपास्यानामनुवादं कृत्वा अनेन वाक्येन तेषां नारायणत्वप्रतिपादनात्तस्य नारायणस्यैव प्रकरणाच्च स्वरूपबलीयस्त्वेन तस्यैव सर्वविद्योपास्यत्वनिर्द्धारणमस्तीति निश्चितम्। न च सहस्रशीर्षमिति द्वितीयानिर्देशः पूर्वेणोपासिना संबध्यते,

'तस्मिन्यदन्तस्तदुपासितव्यम्' (छा. ८-१-१) इति पूर्वेण कृत् प्रत्ययेन कर्माभिहितमिति तत्र द्वितीयानिर्देशायोगात्।

'नारायणः परं ब्रह्म व्याप्य नारायणः स्थितः' (तै.महा.अनु. ११ - ४, ६)

'परमात्मा व्यवस्थितः' (तै.महा.अनु. ११-१३)

इत्यादिभिरैक्यार्थ्यात् प्रथमार्थे द्वितीया। अथ सूत्रार्थविवेचनं विधीयते-

'सहस्त्रशीर्षं देवम्' (तै.महा.अनु. ११-१)

इत्यादिवाक्ये प्रासंगिकदहरविद्योपास्यस्यैव नोपादानं किन्तु सर्वपरविद्योपास्यमात्रस्य लिङ्गभूय स्तात् सर्वविधोपास्य निर्द्धारणे नाराणयस्य चिह्नभूतवाक्यभूयस्त्वादित्यर्थः। तद्धि लिङ्गवाक्यं प्रकरणाद्बलीयः बलवत्तरं तदपि पूर्वस्मिन्काण्डे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमित्यादिनोक्तम्; एवं सर्वोपास्यनिर्द्धारणे स्थिते सति दहरविद्यायामपि अयं नारायण एवोपास्यस्तस्यैव

'पद्मकोशप्रतीकाशम्' (तै.महा.अनु. ११-७)

इत्यादिना हृदयादिष्वभिधानं च युज्यत इति तात्पर्यम्; तस्मादसंख्यमुक्तकोटिसेव्यं नारायणाख्यं परं ब्रह्म सकलपरविद्योपास्यमिति सिद्धम्।

पूर्वविकल्पाधिकरणम् ॥३-३-२७॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥३-३-४४॥

वाजसनेयकेऽग्निरहस्यब्राह्मणे श्रूयतेऽस्य विषयः

'षट्त्रिंशतं सहस्त्राण्यपश्यदात्मनोऽग्नीन् अर्कान्मनोमयान्मनश्चितः'

(अग्नि. काण्ड.१० अध्या. ५ ब्रा.३-३) इति, तथा

'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्नीन्' (अग्नि. का.१० अ. ५ ब्रा.३)

इति पुरुषस्य शतसंवत्सरमिते आयुषि षट्त्रिंशत्सहस्त्राणि दिनानि; तत्रैकैकस्मिन्दिने यावत्यो मनोवृत्तयस्तासामेकैकाग्नित्वे मते सति अग्नयः षट्त्रिंशत्सहस्त्राणि संपद्यन्ते; ते च प्रत्यगात्मस्वरूपेण ध्यातव्याः। एवं वाक्चितादयोऽपि। ते सर्वे विद्यामयक्रत्वङ्गभूता उत क्रियामयक्रत्वङ्गभूता इति संशये पूर्वपक्षः प्रवर्तते। मनश्चिदादीनां सांपादिकाग्नीनाम्

'नैव वा इदमग्रे सदासीन्नैव सदासीत्' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-१)

इत्यादिना पूर्वप्रकृतेष्टकचिताग्निशेषभूतक्रियामयक्रत्वनुप्रवेशः स्यात्, ततश्च तेषामग्नीनां इष्टकचिताग्निना संकल्पः मानसवत्। यथा द्वादशाहे दशमेऽहन्यादिवाक्ये पृथिवीपात्रस्य प्रजापतिदेवताकस्य समुद्रद्रव्यस्य मानसग्रहस्य मनः संपाद्यग्रहणासादनस्तोत्रशस्त्रहवन-प्रत्याहरणभक्षणात्वेन संभूतस्य मानसस्यापि सत्कर्मणः क्रियामयक्रत्वङ्गत्वम्, एवमेषां मानसानामपि क्रियामयक्रत्वङ्गत्वम्। अथ सूत्रार्थवर्णनं-मनश्चिदादिसांपादिकाग्नीनां पूर्वेण

'नैव वा इदमग्रे सन्नैव सदासीत्' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-१)

इत्यादि पूर्वश्रुत्युक्तेनेष्टकचिताग्निना सह विकल्पः संकल्पः स्यात्, कुतः तत्रेष्टकचिताग्नेः प्रकरणात्। अत एव क्रियाः क्रियामयक्रत्वङ्गभूता ये मनश्चिदादयस्ते मानसवत् स्युः।

## अतिदेशाच्च ॥३-३-४५॥

'तेषामेकैक एव तावन्यावानसौ पूर्वः' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-११)
इति तेष्विष्टकचिताग्निकार्यस्यातिदेशाच्चारोपणादपि तदङ्गत्वमिति; एवं प्राप्ते सिद्धान्त उच्यते-

## विद्यैव तु निर्द्धारणाद्दर्शनाच्च ॥३-३-४६॥

विद्यैव ब्रह्मविद्यात्मका मनश्चिदादय एवैते विद्यामयक्रत्वङ्गभूता इत्यर्थः। तासां मनोवृत्तिनां सांपादिकाग्नित्वेन विद्यामयत्वे सिद्धेऽपि

'ते है ते विद्याचित एव' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-१२)

इति निर्द्धारणं हि विद्यामयक्रत्वङ्गत्वख्यापनाय। दृश्यते च विद्यामयः क्रतुः अत्रैव

'तेषु मनसैवाऽऽधीयन्त मनसाऽचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन् मनसा शंसन् यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियते' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-३) इति,

अतस्तेषां विद्यामयक्रत्वङ्गत्वमेव।

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥३-३-४७॥

'ते है ते विद्याचित एवे' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-१२) ति श्रुतिः,

'विद्यया है वै त एवं विदश्चिता भवन्ति' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-१२) ति वाक्यम्;

'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपत' (अग्नि.काण्ड.१०अ.५ ब्रा.३-१२)

इति लिङ्गं च - एवं श्रुत्यादित्रिभिरवगतस्य विद्यामयक्रत्वन्वयस्य बलीयस्त्वात् दुर्बलेन क्रियामयक्रतुप्रकरणेन तस्य न बाधः। ननु

'मनसैषु ग्रहा अगृह्यन्ते' (अग्निरहस्यम् काण्ड.१० अध्या. ५ ब्रा.३-३)

इत्यादिषु विध्यर्थलकारबोधकप्रत्ययाश्रवणात् क्रियामयात्क्रतोरन्यो विद्यामयः क्रतुर्नास्तीत्यत आह-

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥३-३-४८॥

'ग्रहा अगृह्यन्ते'त्यादिक्रत्वनुबन्धैर्ग्रहणस्तवनादिभिः 'ते है ते विद्याचित एवे'ति श्रुत्यादिभिश्च विद्यामयक्रतुविधिः कल्पनीयः। प्रज्ञान्तराणां बुद्धिगम्यानामन्यासां दहरादिविद्यानां क्रियामयात्क्रतोः पृथक्त्ववदस्यापि विद्यामयक्रतोः पृथक्त्वमवगम्यते; कुतः, अनुबन्धादिभ्यः- 'मनसैवाधीयन्त मनसा चीयन्ते'त्यादिश्रुतिभिर्मनः प्रभृतिवृत्तिषु कर्माङ्गानामनुबन्धात्संपादनात् आदिशब्दग्राह्यतत्प्रतिपादकश्रुत्यादिभ्यश्च दृष्टश्चानुवादस्वरूपे कल्प्यमानो विधिः,

यदेव विद्यया करोति' (छा. १-१-१०)

इत्यादौ, तदुक्तं वचनानि त्वपूर्वत्वादिति । अतो मनश्चिदादीनां सांपादिकाग्नीनां विद्यामयक्रत्वङ्गत्वमेव युक्तम्; आशङ्क्य परिहरति-

## न समान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥३-३-४९॥

'तेषामेकैक एव तावान्यावानसौ' (अग्नि.काण्ड.१० अध्या.५ब्रा.३-११)

इत्यत्रेष्टकचिताग्निचितफलसामान्येन मनश्चिदादीनामतिदेशात् इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलं तदेषां विद्यामयक्रतुप्रवेशेन फलमवगम्यते इति चेत् एतावता न पुनरिष्टकचिताग्नितुल्यदेशत्वमेषाम् । कुतः सामान्यादप्युपलब्धेः- केनापि सामान्यगुणेनातिदेशोपलब्धेः । तथाहि

'स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः' (अग्निरहस्यम् काण्ड. १० अध्या. ५ ब्रा.२-१३)

इत्यत्र संहर्तृत्वरूपसामान्यमात्रादतिदेशः । नहि तत्र सूर्यमण्डलस्थपुरुषस्य मृत्युवल्लोकापत्तिस्तद्देशप्राप्तिः, किन्तु तस्मिन् मृत्युवत्सर्वसंहर्तृत्वमेवातिदिश्यते; अतः केनचित्सामान्येनातिदेशे सति न विरोधः । हेत्वन्तरमाह-

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥३-३-५०॥

'परेण च अयं वाव लोक एषोऽग्निचितस्तस्यापः परिश्रिता' (अग्नि. काण्ड. १० अ. ५ ब्रा.४-१)

इत्यादिपरब्राह्मणवाक्येन अस्य मनश्चिदादिवाचिनः शब्दस्य शब्दवृन्दस्य ताद्विध्यंविद्यामयप्रतिपादकत्वमवगम्यते; न परवाक्येन पृथक्फला विद्या च, एवं चेत्तर्हि कथं कर्मप्रकरणे मनश्चिदादय उक्तास्तत्राह-क्रियाप्रकरणे मनश्चिदादीनामनुबन्धः प्रतिपादनं तु मनश्चिदाद्यग्निविद्यायां संपादनीयानां कर्माङ्गानां भूयस्त्वात् । तत एतेषां विद्यामयक्रत्वङ्गत्वम् ।

शरीरेभावाधिकरणम् ॥३-३-२८॥

## एक आत्मनः शरीरे भावात् ॥३-३-५१॥

इह तु पूवोक्तब्रह्मस्वरूपानुसंधानं जीवस्यैकात्मतया सर्वासु परविद्यासु युज्यते पृथक्तया वेति संशयः तत्रैके मन्यन्ते शरीरे भावात्-वर्तमानत्वादुपासितुरात्मनः कर्तृत्वभोक्तृत्वापत्तिरवगम्यते । तदात्मतयावस्थितस्य परमात्मनस्तु कर्तृत्वभोक्तृत्वादिलक्षणरूपानुसंधानं न युज्यते; अतो जीवस्य कर्तृत्वादिपरिहाराय सर्वासु परविद्यास्वेकात्मतया परब्रह्मानुसंधानमिति प्राप्ते सिद्धान्त उच्यते ।

## व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥३-३-५२॥

नैवं यत्कर्तृरूपान्नस्योपासितुरेकात्मतया परमात्मानुसंधेयः, किन्तु

कर्तृत्वादिपरिहाणायाप्युपास्यतया भिन्न एवानुसंधेयः ।

किञ्च सांसारिकस्वभावान्मुक्तेऽपहतपाप्मत्वादिप्राप्त्यर्हे शुद्धनिजात्मनि तु यो व्यतिरेकस्ततः पृथक्तया स्थितोऽपहतपाप्मत्वादिपरमात्मगुणकलापः सोऽनुसंधेयः कुतः, तद्भावभावित्वा-त्परमात्मपार्षदत्वोपलब्ध्या परमात्मभावभावित्वात् न तूपलब्धिवत्; यथा जीवात्मनः कृष्णोपासनेन स्वविषया स्वस्वरूपोपलब्धिस्तथाऽपहतपाप्मत्वादिगुणोपलब्धिः परमात्मोपासनेन स्वविषया न भवति, किन्तु तदुपासनेनैव परमात्मविषया तद्गुणलब्धिः स्यात् । ननु जीवस्य परमात्मोपासनेनापहतपाप्मत्वाद्यष्टगुणोपलब्धिकथने विजरविमृत्युत्वयोर्वस्तुतया जीवस्वरूपे विद्यमानत्वात्कथं पुनः परमात्मतस्तत्प्रादुर्भाव उक्त इति चेत्तत्रोत्तरम्-अनाद्यविद्या संबन्धबलेन जीवस्यानादिजन्ममरणादिप्रवाहप्राप्तौ जरामरणादिधर्मोपलब्धेर्नित्यविद्य-मानत्वाद्वस्तुतस्तु तौ परमात्मधर्माविव भवतो न तु जीवधर्मौ अतो न तत्र शङ्कावकाश इति, अत उपासकेन सर्वपरविद्यासु अपहतपाप्मत्वादिगुणानुसंधानेन सर्वात्मा परमात्मानुसन्धेयः ।

अङ्गावबद्धाधिकरणम् ॥३-३-२९॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥३-३-५३॥

कासुचिच्छाखासु श्रूयमाणा उपासनाङ्गावबद्धाः प्रणवाभ्यासतप्तचक्रादिधृतयः सर्वासूपासनास्वङ्गत्वेनोपसंहार्या नवेति संशयः । तथाहि

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१)

इति छान्दोग्ये उद्गीथविद्यायां प्रणवाभ्यासः श्रूयते, अथर्वणि

'देवा ये विद्युतेन बाहुनासुदर्शनेन प्रतप्ता लोकसृष्टिं वितन्वन्ति' इति

'एभिर्वयमुरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवामः' इति च

'अग्निना वै होतारश्चक्रं पाञ्चजन्यं सुतप्तं द्विभुजाभ्यां धारयत्' इति च

'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ॥
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं याति महान्महान्तम् ' ॥ इति;
धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं सांख्ययोगादिगम्यम् ।
स्मृत्वा विमुच्येत नरःसमस्तैः संसारपाशैरभियाति विष्णुम्' ॥ इति;

वासुदेवोपनिषदि च

'ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ' (वासुदेवोपनिषत् - १)

इत्यादिनोर्ध्वपुण्ड्रधारणविधिरुक्तः । शतपथब्राह्मणे च

'स होवाच याज्ञवल्क्यस्तत्पुमानात्महिताय हरिं भजेत्,
सुश्लोकमौलेर्वर्माण्यग्निना संदधते'

इत्यादिषु तप्तमुद्रोर्ध्वपुण्ड्रादिधारणविधिः श्रूयते, तेन च नारायणलोकप्राप्तिफलश्रवणात् तस्य

परविद्याङ्गत्वम्; एवं यासु विद्याङ्गावबद्धासु शाखासु श्रुताः याः प्रणवाभ्यासोर्ध्वपुण्ड्र-तप्तचक्रादिधृतय एतासु शाखासु विहितेषूपासनेषूपासकैस्ताः कार्याः संनिधानान्न सर्वत्रेति प्राप्ते ब्रूमः -प्रणवाभ्यासोर्ध्वपुण्ड्रतप्तचक्रादिधृतयः यासु शाखासु श्रुतास्तास्वेवेति न नियमः, किन्तु प्रतिवेदं सर्वासु शाखासु सर्वैरपि परब्रह्मोपासकैस्ताः कार्याः । एवमेकत्र सन्निधेर्नियमो नास्तीति निश्चीयते ।

## मन्त्रादिवद्वाऽविरोधः ॥३-३-५४॥

यथा क्रत्वङ्गभूतानां मन्त्राणां एकैकशाखागतानामपि सर्वशाखागतानामपि सर्वशाखागतक्रत्वन्वये विरोधो नास्ति तथात्रापि ।

### भूमज्यायस्त्वाधिकरणम् ॥३-३-३०॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥३-३-५५॥

इह वैश्वानरविद्यायां उपासनमंशेन समस्तेन वेति सन्दिह्यते । तथाहि तत्र द्युलोकसूर्य-वाय्वाकाशोदकपृथिव्यो वैश्वानरस्य मूर्द्धचक्षुः प्राणमध्यशरीरमूत्रस्थानपादरूपाध्यातव्या इति निरूपितम्, पृथक् पृथग् द्युप्रभृतिपर्यायबोधकैर्वाक्यैस्तेषामङ्गानामपि प्रत्येकमुपासनं हि

'अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवात्मानं वैश्वानरमुपास्ते' (छा. ५-१२-२)

इति वाक्येऽभिहितम् । एवं सत्युपास्तिशब्दस्य फलवचनस्य च प्रत्येकमुपलभ्य-मानत्वादंशोपासनमुचितमिति पूर्वः पक्षः । सिद्धान्ते तु समस्तोपासनमेव मुख्यमित्युच्यते; तथाहि तत्र त्रैलोक्यशरीरतयोपास्यस्य वैश्वानरात्मनः स्वर्लोकादिपृथिव्यन्तानां मुर्द्धादिपादान्तावयवत्वमभिधाय

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते
स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छा. ५-१८-१)

इति सर्वत्र व्यापकत्वेन कामचारत्वेन चान्नादनाद्ब्रह्मभावात्मकं फलमभिहितम् । तत्र द्युलोकादिरूपमूर्द्धाद्यवयवोपासनात् भूम्नः समस्तोपासनस्य ज्यायस्त्वं प्रामाणिकत्वेन श्रेष्ठत्वम् । तत्रैव ब्रह्मानुभवफलाभिधानात् तत्रावयवोपासनं फलकीर्तनं च क्रतुवद्विवक्षितम्;

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' (तै.यजु. काण्ड.२ प्रपा.२-५)

इत्युक्त्वा

'यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' (तै.यजु. काण्ड.२ प्रपा.२-५)

इत्यादिनोच्यमानमष्टाकपालादिकं तत्फलं च यथा विवक्षितं तद्वत्; तथाहि समस्तोपासनस्यैव

ज्येष्ठ्यं दर्शयति श्रुतिः, तत्र

'ह्यौपमन्यवकं त्वमात्मानमुपास्से' (छा. ५-१२-१)

'प्राचीनयोग्यकं त्वमात्मानमुपास्स' (छा. ५-१३-१) इत्यादिप्रश्नानन्तरम्

'दिवमेव भगवो राजन्' (छा. ५-१२-१)

'आदित्यमेव भगवो राजन्' (छा. ५-१३-१)

इत्यादिप्रतिवचनैरवयवोपासनेऽभिहिते

'अत्यन्नं पश्यति प्रियम्' (छा. ५-१२-२) इत्यादिना तत्र तत्र फलनिर्देशं कृत्वापि

'मूर्द्धा त्वेष आत्मन इति होवाच मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' (छा. ५-१२-२)

इत्यादिराजवचनैरनर्थं ब्रवीति, अतस्तस्य समस्तोपासनमेव मुख्यम्।

शब्दादिभेदाधिकरणम् ॥३-३-३१॥

## नानाशब्दादिभेदात् ॥३-३-५६॥

परविद्यानामेकीकरणेन परब्रह्मोपासनमुत भेदेनेतिसंशये नानाशाखाश्रुतानामपि विद्यानां वेद्यस्य ब्रह्मण एकत्वादेकीकरणेनोपासनमिति प्राप्ते उच्यते भूमविद्यादहरविद्योपकोशलविद्याशांडिल्यविद्यावैश्वानरविद्यानन्दमयविद्याऽक्षरविद्यादीनामनेकश्रुतिबोध्यानां विद्यानां एकीकृत्यानुष्ठानायोगात् स्वरूपैक्यैऽपि परब्रह्मणः गुणभेदाद्विद्याभेदः। यत्र गुणभेदाद्विद्याभेदो नास्ति तत्र स्थानादिभेदाद्विद्याभेदः, विप्रराजादिगुणभेदादिन्द्रस्य पुरोडाशदानभेदवत्, गार्हपत्यस्थानादिभेदादग्नेरुपचारभेदवच्च विद्याभेद उपपन्न इति निरूपितम्,

अतस्तस्यैकस्योपासने नानाप्रकारा विद्या भवन्ति शब्दाद्यनुबन्धभेदादिति निर्णयः। पुनरधिकरणारंभोऽयं ज्ञानस्याविधेयतानिरासार्थः।

विकल्पाधिकरणम् ॥३-३-३२॥

## विकल्पोऽविशिष्टफलत्वात् ॥३-३-५७॥

एवं नानाप्रकाराः परविद्या निरूपिताः। तासूपासकस्य विकल्पः समुच्चयो वेति संशयः। किं प्राप्नोति दहरविद्यासद्विद्यादीनां समुच्चयेनानुष्ठानमुचितं कर्मभूयस्त्वेन फलभूयस्त्वसंभवात्; विकल्पे तु किञ्चन्नियामकं नास्ति, अतो न विकल्पेनानुष्ठानमिति प्राप्ते ब्रूमः- एकस्मिन्नुपासके सर्वासां परविद्यानां विकल्प एव। कुतः अविशिष्टफलत्वात्-परब्रह्मणि साक्षात्कारे सति निरतिशयतदानन्दानुभवफलस्याविशिष्टत्वात् येनोपासनेन स्वप्रयोजनं सिद्ध्यति तदेव विधेयं किमन्यैरप्रयोजनैः। तदेकं स्वप्रयोजनसाधकमुपासनं परित्यज्यान्यत्र गमने चित्तविक्षेपः स्यात् अतो विकल्प एव।

## काम्यास्तु यथाकामं समुच्चीयेरन् नवा पूर्वहेत्वभावात् ॥३-३-५८॥

वा शब्दः पुर्वाधिकरणोक्तं विकल्पं व्यावर्तयति । काम्यास्तु ब्रह्मप्राप्तीतरफलाविद्यास्तु उपासकैः यथाकामं यथेष्टं समुच्चीयेरन्, न पूर्वाधिकरणन्यायवद्विकल्प्येरन् । कुतः पूर्वहेत्वभावात् पूर्वोक्तब्रह्मप्राप्तिरूपफलानुसंधानाभावात्; अतो ब्रह्मप्राप्तीतरफलेच्छूनां जनानां तासां विद्यानां समुच्चय एव युक्त इति निर्णीयते ।

यथाश्रयभावाधिकरणम् ॥३-३-३३॥

## अङ्गेषु यथाश्रयभावः ॥३-३-५९॥

इह पुनरुद्गीथादिक्रत्वङ्गावबद्धानामुपासनानां क्रत्वङ्गभावः स्वातन्त्र्यं वेति संशये पूर्वपक्षन्यायः प्रवर्तते-उद्गीथादिषु क्रत्वङ्गेषु

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१)

इत्यादिश्रुतानामुपासनानां यथाश्रयभावः - उद्गीथाद्यङ्गवत् क्रत्वङ्गभाव एवं

'गोदोहनेन पशुकामस्य प्रणयेदि'त्यत्र फलश्रवणं यथा तथा स्ववाक्ये फलाश्रवणात् ।

## शिष्टेश्च ॥३-३-६०॥

शिष्टिः शासनं विधिरित्यर्थः । उद्गीथमुपासीतेति विधेर्हेतोः

'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' (छा. १-१-१०)

इत्यत्र कर्मणो वीर्यवत्तरत्वं प्रति विद्यायाः साधनत्वाच्च तेषां क्रत्वङ्गभाव एव ।

## समाहारात् ॥३-३-६१॥

क्रतावुद्गात्रा ऋग्वेदोदितप्रणवस्य सामवेदोदितोद्गीथस्य चैक्येनोच्चारणे कृते सति तत्फलं श्रुतिराह,

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' (छा. १-५-५) इति ।

उद्गाता प्रणवोद्गीथयोरैक्यज्ञानमाहात्म्यात्स्वकृतं दुरुद्गीथमपि यथोचितस्वरादि-ग्रहणहीनत्वाद्दूषितमप्युद्गानं होतृषदनात्। होतृषदनशब्दोपलक्षिताद्धोतृकृतशंसनाख्यकर्मरूपात् सहायादनुसमाहरत्येव ह प्रतिसमादधात्येव खलु कुतःसमाहारात्- ऋग्वेदोक्तस्य होतृकर्मसम्बन्धोंकारस्य स्ववेदोक्तोद्गीथस्य चैक्येन चिन्तितत्वादित्यर्थः ।

एवं च सतिवेदद्वयोदितप्रणवोद्गीथयोरैक्यज्ञानस्यैतादृशं फलं ब्रुवद्वाक्यं सर्ववेदोदितानामप्यङ्गाश्रितोपासनानां समुच्चयं द्योतयति । सर्वोपासनेषु वेदान्तरोक्तोपासनस्य

वेदान्तरोक्तोद्गीथादिना संबन्धस्य समानत्वाच्च तेषां क्रत्वङ्गभावः ।

## गुणसाधारण्यश्रुतेश्च ॥३-३-६२॥

'तेनेयं त्रयीविद्या वर्तत ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति' (छा. १-१-९) इति गुणस्य गुणभूतप्रणवस्य साधारण्यश्रुतेः सर्वकर्मणि संचरतः प्रणवस्य गुणत्वेनोपासनस्य संचारादप्यङ्गत्वेनोपासनोपादाननियमोऽवगम्यते । तेनेति हि प्रकृतपरामर्शी शब्दः प्रकृतं सोपासनमेव प्रणवं परामृशति, अत उद्गीथाद्युपासनानां स्वातंत्र्यं न संभवतीति प्राप्ते सिद्धान्त उच्यते -

## न वा तत्सहभावाश्रुतेः ॥३-३-६३॥

यथा क्रत्वङ्गानामुद्गीथादीनां क्रत्वङ्गभावः श्रूयते तथा तेषामुद्गीथाद्यङ्गाश्रितानामुपासनानां यः सहभावः क्रत्वङ्गभावस्तस्या श्रुतेरश्रवणात् एषां न तद्भावः स्यादेव ।

'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' (छा. १-१-१०)

इति फलान्तरसाधनतयावगतानामुपासनानामङ्गभावाभावात्

'उद्गीथमुपासीत' (छा. १-१-१)

इत्युद्गीथाश्रयतामात्रप्रतिपादनात् न तेषामुद्गीथाद्यङ्गावबद्धानां क्रत्वङ्गभावः, किन्तु स्वातन्त्र्यमेव।

## दर्शनाच्च ॥३-३-६४॥

'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छा. ४-१७-१०) इति व्याहृतिहोमप्रायश्चित्ताभिज्ञस्य ब्रह्मणो वेदनेन सर्वरक्षणं वदन्ती श्रुतिरुद्गातृप्रभृति-वेदनस्यानियमेन क्रत्वङ्गतां दर्शयति-अतोऽपि समाहारादिहेतुद्वयोक्तं क्रत्वङ्गत्वयुक्तमेव ।

इति
श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रण्यमुक्तानन्दमुनिविरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥३॥

श्रीहरिकृष्णाय नमो नमः

## तृतीयाध्याये चतुर्थपादः ।

### पुरुषार्थाधिकरणम् ॥३-४-१॥

### पुरुषार्थोऽतः शब्दादिति बादरायणः ॥३-४-१॥

पूर्वत्र परविद्याप्रकारः प्रतिपादितः । अत्र तु विद्याङ्गभूतानाश्रमधर्मादीन् वर्णयितुं विद्यात विद्यात एव पुरुषार्थ इति प्रकाशयति-अतो विद्यातः एव पुरुषार्थः ।

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन.१-१)

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' (श्वे.३-८),

'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' (पु.सू. १७) इति,

'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।

त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' (गीता. ४-९) ॥

इत्यादिशब्दादिति भगवान्बादरायणो मन्यते, तत्संभवति नवेति सन्देहे सति पूर्वः पक्षः प्रवर्तते-

### शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥३-४-२॥

न विद्यातः पुरुषार्थः कुतः कर्मसु क्रियमाणेषु सत्स्वपि तत्कर्तुरेवात्मनस्तत्त्वमसीत्यादिसामानाधिकरण्येन ब्रह्मत्वावगमात् तद्वेदनस्य कर्तृसंस्कारतया कर्मशेषत्वात् ज्ञाने जातेऽपि कर्मणः करणीयतयावशिष्टत्वात् तत्र पुरुषार्थवादः, फलश्रुतिस्तु अन्येषु द्रव्यसंस्कारकर्मसु यथा तथार्थवादमात्रम् । तदुक्तं द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति, अस्यार्थः - पर्णमयी जुहूर्द्रव्यं यजमानस्थांजनादिः संस्कारश्च प्रयाजादिरूपं कर्म च तेषु नरस्य निर्दोषकीर्तिश्रवणादिफलश्रुतिः अर्थवादः कथनमात्रं स्यात्कुतः परार्थत्वात्-तेषु स्वर्गादिप्राप्तिफलान्तरार्थत्वादिति, अतो न विद्यातः पुरुषार्थ इति जैमिनिराचार्यो मन्यते ।

### आचारदर्शनात् ॥३-४-३॥

तथाचारोऽपि कर्मप्रधानो दृश्यते श्रुतिस्मृतिषु, अश्वपतिः कैकयो ब्रह्मवित् ,

'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' (छा. ५-११-५) इत्याह;

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृ. ५-१-१) इति,

'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (गीता. ३-२०)

इत्येवं केकयजनकादीनां परब्रह्मविदामपि कर्मप्राधान्येनाचारोऽवगम्यते, अतोऽपि विद्या कर्माङ्गमेव ।

## तच्छ्रुतेः ॥३-४-४॥

'यदेव विद्यया करोति' (छा. १-१-१०)

इति श्रुत्यैव विद्यायाः कर्मसु विनियोगादपि कर्माङ्गत्वम् यत्करोति तद्विद्यया परब्रह्मज्ञानेनेति श्रुतेरर्थः ।

## समन्वारम्भणात् ॥३-४-५॥

'तं विद्याकर्मणी समन्वारभेते' (बृ. ६-४-२)

इति विद्याकर्मणोरेकस्मिन्पुरुषे साहित्यं दृश्यते, अतश्च तदङ्गत्वमेव विद्यायाः ॥

## तद्वतो विधानात् ॥३-४-६॥

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' (बृ. ८-१५-१)

इत्यादावर्थज्ञानपर्यन्ताध्ययनवतः कर्म विधीयते, अतश्च ज्ञानस्य कर्माङ्गत्वम् ।

## नियमाच्च ॥३-४-७॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ईशा. २)

इत्यात्मपरमात्मविदां जीवनस्य कर्मसु नियोगो नियम्यते, अतश्च विद्या कर्माङ्गं, तस्मान्न विद्यातः पुरुषार्थ इति प्राप्ते सिद्धान्त उच्यते ।

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥३-४-८॥

तु शब्दः पूर्वपक्षनिरासार्थः । न विद्यायाः कर्माङ्गत्वम् अपि तु विद्ययैव पुरुषार्थ इति भगवतो बादरायणस्य मतमेवोचितम्; कुतः अधिकोपदेशात्-कर्मकर्तुर्जीवात्मवृन्दादधिकस्य स्वरूपस्वभावगुणविभूतिभिरत्युत्कृष्टस्य परमात्मनो मोक्षार्थं वेद्यतयोपदेशात् । तथाहि

'सोऽकामयत बहुस्यां प्रजायेयेति' (तै. आन. अनु. ६-२)

'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' (श्वेता. ६-९) इति

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्' (श्वेता. ६-७) इति

'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. ३-४-१) इति

'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिधत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छा. ८-१-५)

इत्यादिवाक्येषु वेद्यस्य नारायणस्याधिक्यं दृश्यते, अतो न विद्यायाः कर्माङ्गत्वम् । यदुक्तं कर्मप्रधानाचारदर्शनं तत्राह-

## तुल्यं तु दर्शनम् ॥३-४-९॥

विद्यायाः प्राधान्येऽपि ब्रह्मविदां तया तुल्यं कर्माचारदर्शनं न केवलं कर्मण एवाचारदर्शनम्। तथाहि

'एतद्ध स्म वैतद्विद्वांस आहुः ऋषयः कापेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे (ऐ. सं. ३-२-६)

किं प्रजया करिष्यामः' (बृ. ४-४-२२)

इत्यादौ ब्रह्मविदां कर्मत्यागो हि दृश्यते । फलाभिसंधानरहितस्य कर्मणो विद्याङ्गत्वेनानुष्ठानं त्यागस्तु फलाभिसंधानयुक्तस्येति विरोधाभावात् कर्मण एव विद्याङ्गत्वमिति विद्यायाः प्राधान्यमेव । यदेव विद्ययेति यदुक्तं तत्राह-

## असार्वत्रिकी ॥३-४-१०॥

'यदेव विद्यया करोती'त्यत्र न सार्वत्रिकी विद्योच्यते; यदेव विद्ययेति प्रसिद्धवन्निर्देशात्। 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' (छा. १-१-१०)
इति प्रकृतोद्गीथविद्यायास्तद्युक्तस्य कर्मणो वीर्यवत्तरत्वसाधनभावोऽभिधीयते इति न विद्या कर्माङ्गम् । यदुक्तं तं विद्याकर्मणी इति तत्राह-

## विभागः शतवत् ॥३-४-११॥

'तं विद्याकर्मणी समन्वारभेते' (बृ. ६-४-२)
इत्यत्र विद्याकर्मणोर्भिन्नफलत्वेन समारम्भः श्रूयते । तथाहि विद्या च स्वस्मै फलायान्वेति कर्म च स्वस्मै फलायान्वेति विभागः यथा क्षेत्ररत्नविक्रयिणं शतमित्यत्र क्षेत्रार्थं शतार्धं रत्नार्थं शतार्द्धमिति विभागः ।

## अध्ययनमात्रवतः ॥३-४-१२॥

'वेदमधीत्ये'त्यध्ययनमात्रवत एककर्मविधानात् न विद्या कर्माङ्गम् । अध्ययन-विधिर्ह्यक्षरग्रहणमात्रे पर्यवस्यति, अर्थावबोधपर्यन्तत्वे चापि पर्यवस्यति; उपासीतेति विहिता या विद्या अर्थज्ञानादर्थान्तरभूता सा च ज्ञानाभ्यासरूपा, अतोऽस्या न क्वापि कर्माङ्गत्वम् ।

## नाविशेषात् ॥३-४-१३॥

कुर्वन्नेवेह कर्माणीत्यत्र स्वतन्त्रे कर्मणि विद्वदायुष एव विनियोगो नास्ति, कुतः अविशेषात्तद्वाक्ये विशेषाभावात्

'ईशावास्यमिदं सर्वम्' (ईशा. १)
इति विद्या प्रकरणाच्च विद्याङ्गभूतमेतत् कर्मेति विज्ञायते, अतो न विद्यायाः कर्माङ्गत्वम् ।

## स्तुतयेऽनुमतिर्वा ॥३-४-१४॥

वाशब्दोऽवधारणार्थपरः । 'ईशावास्यमिदं सर्वमि'ति विद्याप्रकरणाद्विद्यास्तुतये कर्मणोऽनुमतिरनुवृत्तिरेव; विद्यामाहात्म्यात्सर्वदा कर्माणि कुर्वन्नपि तैर्न लिप्यते इति हि विद्या प्रशंसिता ।

'त्वयि न कर्म लिप्यते नरे' (ईशा. २) इति वाक्यविशेषात्, अतश्च विद्याया एव प्राधान्यम् ।

## कामकारेण चैके ॥३-४-१५॥

'किं प्रजया करिष्यामः' (बृ. ४-४-२२)
इत्यादिना कामकारेण स्वेच्छया विदुषो गार्हस्थ्यत्यागमधीयत एके, अतोऽपि विद्या प्रधानभूता लक्ष्यते ।

## उपमर्दं च ॥३-४-१६॥

विद्यया सर्वकर्मोपमर्दं चाधीयत एके
'क्षीयते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मुण्ड.२-२-८) इति, अतो न कर्मप्राधान्यम् ।

## ऊर्ध्वरेतःसु च शब्दे हि ॥३-४-१७॥

ऊर्ध्वरेतःसु संन्यासाश्रमिषु ब्रह्मविद्यादर्शनात् तेष्वग्निहोत्राद्यसंभवाच्च न विद्या कर्माङ्गम्। तथाहि
'त्रयो धर्मस्कन्धाः' (छा. २-२३-१)
इत्यादि वैदिके शब्दे आश्रमत्रयस्यैव कर्मानुष्ठानं दृश्यते नतु चतुर्थाश्रमस्य, अतो विद्यैव प्रधानभूता पुरुषार्थहेतुः । तस्यास्त्वङ्गतया फलाभिसंधिरहितस्य विहितकर्मणोऽनुवृत्तिरिति सिद्धम् ।

परामर्शाधिकरणम् ॥३-४-२॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥३-४-१८ ॥

पूर्वत्र 'त्रयो धर्मस्कन्धाः' (छा. २-२३-१)
इति त्रयाणामेवाश्रमाणां धर्माधारत्वमुक्तम्; अत एवात्र चतुर्थाश्रमसद्भावे सन्देहे सति पूर्वपक्षः प्रवर्तते; 'त्रयो धर्मस्कन्धाः' इत्यादौ चतुर्थाश्रमा चोदनात्
'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. ६-४-२२)

इत्यादिचतुर्थाश्रमवचनं तु परामर्शम्-उपासनस्तुत्यर्थवादमेव जैमिनिर्मन्यते। किञ्च अपवदति हि

'वीरहा वा एष देवानां योऽग्निमुद्वासयत' (तै.यजु.स. काण्ड. १ प्रपा. ५-२)

इति श्रुतिः चतुर्थाश्रमं निषेधति, अतोऽग्निहोत्रपरित्यागे महान्दोष इति, अग्निहोत्रपरित्यागेनाश्रमान्तरं नास्तीति प्राप्ते सिद्धान्तं ब्रूमः-

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥३-४-१९॥

गृहस्थाश्रमादिवदाश्रमान्तरमप्यनुष्ठेयमिति भगवतो बादरायणस्य मतम्। 'त्रयो धर्मस्कन्धाः' इत्यादेः सर्वाश्रमसाम्यश्रुतेः अग्न्युद्वासनदोषो गृहस्थविषय एव, अतश्चतुर्थाश्रमधर्मसद्भावः।

## विधिर्वा धारणवत् ॥३-४-२०॥

वा शब्दोऽवधारणार्थपरः। धारणवत्-

'अधस्तात्समिधं धारयन्ननु द्रवेदुपरि हि देवेभ्यो धारयति'

इत्यत्र वर्तमानप्रयोगेऽप्युपरिधारणस्याप्राप्तत्वाद्यथा विधिः कल्पितः तद्वत्प्रव्रजन्तीत्यत्रापि विधिरेव; अथवा जाबालश्रुतौ प्रत्यक्षो विधिरप्यस्ति

'ब्रह्मचर्यं समाप्य गृही भवेत् वा वनी भूत्वा प्रव्रजेत्' (याज्ञ.उ. १ / जाबालोपनिषत्)

इति नात्र क्रमनियमः।

'उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (याज्ञ.उ. १ / जाबालोपनिषत)

इति श्रुतेः जन्मान्तरसुकृतपरिपाकविशुद्धांतःकरणस्य ब्रह्मचर्यादेव पारिव्राज्यं भवति।

'ऋणानि त्रीण्यप्राकृत्य मनो मोक्षे निवेशयेत्,
अनपाकृत्य मोक्षं तु भजमानो व्रजत्यधः' (मनु. ६-३५)

इत्यादिनिषेधस्त्वविरक्तविषयः।

'वीरहा वा एष देवानां योऽग्निमुद्वासयेत्' (तै.यजु.स. काण्ड. १ प्रपा. ५-२)

इत्यग्न्युद्वासननिषेधात् ब्रह्मचर्यादेव पारिव्राज्यं न गार्हस्थात्परमिति केचित्। तथा सति

'वनी भूत्वा प्रव्रजेत्',

'उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदि'त्यादिविधिवैयर्थ्यं स्यात्, अतो ब्रह्मचर्यादेव प्रव्रजेदिति वा वनी भूत्वा प्रव्रजेदिति वा निर्बन्धः कार्यः। ब्रह्मचर्यादेव प्रव्रजेदिति वदतामयमभिप्रायः साग्निरनग्निकश्चेति द्वावेवाश्रमौ।

तत्र ब्रह्मचारी परिव्राट् चानग्निः, गृहस्थो वानप्रस्थश्च साग्निः। आदावग्निमाधाय पश्चात्तमुद्वास्य यत्पारिव्राज्यं ततोऽपि ब्रह्मचर्यात्पारिव्राज्यमेवातीव मुख्यमिति। अन्यथा श्रुतिविरोधापत्तेः। अतः सर्वाश्रमधर्मसिद्धिः।

स्तुतिमात्राधिकरणम् ॥३-४-३॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥३-४-२१॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१) इत्युपक्रम्य

'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ' (छा. १-१-३) इति श्रूयते।

एवंजातीयके उदाहरणे उद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते, किन्तु

'इयमेव जुहूरादित्यः कूर्मः स्वर्गो लोक आहवनीयः'

इति जुह्वादीनां पृथिव्यादित्वप्रतिपादकवचनवत् कर्माङ्गभूतोद्गीथाद्युपादाय तस्य रसतमत्वादिवचनं स्तुतिमात्रं न वेति संशयः। किं तावत्प्राप्तं नोद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते, किन्तु स्तुतिमात्रमितिपूर्वपक्षश्चेत्तत्र सिद्धान्त उच्यते। नाऽपूर्वत्वादिति तद्वचनं न स्तुतिमात्रं किन्तु तेनोद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते एव अपूर्वत्वात् -

पूर्वमुद्गीथादौ रसतमत्वादेरप्राप्तत्वात्। एवं च सति नात्र इयमेव जुहूरित्यादिन्यायोऽवतार्यः, जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात्, अतो रसतमत्वादिदृष्टिर्विधिरेव।

## भावशब्दाच्च ॥३-४-२२॥

'उद्गीथमुपासीते'ति विधिप्रत्ययप्रयुक्तोऽत्र भावशब्दश्च क्रियाशब्द एव श्रूयते, अतोऽपि रसतमत्वादिदृष्टिर्विधिरिति।

पारिप्लवाधिकरणम् ॥३-४-४॥

## पारिप्लवार्था इति चेन्न विशेषित्वात् ॥३-४-२३॥

वेदान्तेषु विद्यारम्भे

'प्रतर्दनो ह वै देवोदासिः' (कौषी. ३-१)

इत्याद्याख्यायिका आम्नातास्ताः किं पारिप्लवप्रयोगार्था उत विद्यास्तुत्यर्था इति संशयः। किं तावत्प्राप्तं पारिप्लवार्था इति; अश्वमेधयागे राजानं सकुटुम्बमुपवेश्य तत्पुरतो वैदिकान्याख्यानानि अध्वर्युणा वक्तव्यानि, तदिदं पारिप्लवाख्यं कर्म

'पारिप्लवमाचक्षीते'ति वाक्येन विहितम्। तत्र

'सर्वाण्याख्यानानि पारिप्लवे संशती'ति विनियोगात् उपनिषदारम्भगता अप्याख्यायिकास्तदर्था इति पूर्वः पक्ष इति चेत्तत्र सिद्धान्त उच्यते- न विशेषितत्वादिति;

'प्रथमेऽहनि मनुर्वैवस्वतो राजा द्वितीयेऽहनि यमो वैवस्वतो राजे'त्यादिना पारिप्लवार्थाना- माख्यायिकानां विशेषितत्वात् पृथक्तयाभिधानात् ता न पारिप्लवार्थाः, किन्तु विद्यास्तुत्यर्थाः। औपनिषदाख्यायिकानां संनिहितविद्याविधिभिरेकवाक्यत्वादपि ता विद्या स्तुत्यर्था इत्याह-

## तथा चैकवाक्यतोपबन्धात् ॥३-४-२४॥

यथा सोरोदीदित्याद्याख्यानानां कर्मविधिभिरेकवाक्यता तथा विद्याविधिभिः सह औपनिषदाख्यायिकानामेकवाक्यतयोपसंबन्धाच्च ता विद्यास्तुत्यर्था एवेति ।

अग्नीन्धनाधिकरणम् ॥३-४-५॥

## अत एव चाग्नीन्धनाद्यपेक्षा ॥३-४-२५॥

पूर्वत्रोपपादितोऽन्त्याश्रमसद्भावः । तस्य विद्यार्थमाधानाद्यपेक्षास्ति नवेति संशयः । किं तावत्प्राप्तं यतो विद्याङ्गत्वेन कर्मणो विधानमत एव विद्यावतामूर्ध्वरेतसां विद्याङ्गत्वेनाधानादिसंस्काररूपं कर्मानुष्ठेयमिति प्राप्ते ब्रूमः- अग्नीन्धनाद्यनपेक्षा न तेषामाधानाद्यपेक्षा विद्या

'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. ६-४-२२)

इत्यादिश्रुतेः तेषां कर्मत्यागेनैव विद्यावत्त्वावगमा । किञ्च तेषामपि स्वाश्रमधर्मापेक्षा विद्या तु विद्यत एव, आधानादिकर्मानुपपत्तेरिति सिद्धम् ।

सर्वापेक्षाधिकरणम् ॥३-४-६॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥३-४-२६॥

अन्त्याश्रमिणामनुपपत्तेराधानादिकर्मानपेक्षा विद्येति पूर्वाधिकरणे निरूपितम् । गृहिणां विद्या तदपेक्षा नवेति संशयः । एवं सति गृहस्थानामपि विद्या अग्नीन्धनादिकर्मानपेक्षणीति ब्रूमः । तस्य कर्मणो व्यभिचारेण विद्याङ्गत्वानुपपत्तेः । यत्तु विमता विद्या स्वाङ्गभूतकर्मापेक्षा, अङ्गित्वात्प्रयाजाद्यपेक्षा, दर्शपूर्णमासवदित्यनुमानम्; तत्राधानादेः कीदृशमङ्गत्वं साध्यं प्रयाजादिवत्फलोपकारित्वं वा अवघातादिवत्स्वरूपोपकारित्वं वा ? नाद्यः तज्जन्यत्वे मुक्तेरनित्यत्वं स्यात्; द्वितीये साध्यविकलो दृष्टान्तः, अतो न विद्याङ्गत्वं कर्मणः । तस्मात् गृहिणामपि विद्या अग्नीन्धनादिकर्मानपेक्षेति पूर्वः पक्षः । सिद्धान्तस्तु कर्मवत्सु गृहस्थेषु विद्या अग्निहोत्रादिसर्वकर्मापेक्षा

'यज्ञेन दानेन' (बृह. ६-४-२२)

इति श्रुतेः, यज्ञादीनां नारायणनियोगसिद्धत्वाच्च । यथाश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धापेक्षो गमने तथा कर्मणः फलाभिसन्धिरहितत्वेन विद्यास्वरूपोपकार्याङ्गत्वात् न तज्जन्यत्वं मोक्षफलस्य किन्तु ज्ञानफलमेव मोक्षः । अतो गृहस्थानां यज्ञादिसापेक्षा विद्या सर्वेषामाश्रमिणां स्वाश्रमविहितकर्मापेक्षेति विद्यायाः कर्मापेक्षत्वमुक्तम् ।

शमदमाद्यधिकरणम् ॥३-४-७॥

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥३-४-२७॥

'शान्तोदान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्,
श्रद्धाभक्तिध्यानयोगादवेहि' (बृह. ६-४-२३)

इत्यादिना विद्यायाः शमदमादिसंपत्त्यपेक्षा श्रूयते। सा शमादिसंपत्तिर्गृहिणां संभवति नवेति संशयः। यज्ञादिमत्तया बहुव्यापारव्याकुलानां तेषां तदुपरतिरूपा शमदमादिसंपत्तिर्न संभवतीति पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते-यद्यपि गृहस्थो विहितकर्मप्रवृत्तस्तथापि निषिद्धकाम्यादिकर्मसु व्यापाररहित एव शमाद्युपेतः स्यात्।

'शान्तो दान्तः' इत्यादिना 'श्रद्धाभक्तिध्यानयोगादवेहि'

इत्यादिना च गृहस्थानां शमादिविधेर्विहितत्वाद्विद्यानिष्पत्तये तदङ्गत्वेन तेषां शमादीनामवश्यानुष्ठेयत्वाच्च। आन्तराणां रागद्वेषादीनामनाविर्भूतिः शमः, सर्वेषामिन्द्रियाणां अविहितव्यापारेभ्यो निवर्तनं दमः, निषिद्धकाम्यकर्मव्यापरोपरम-उपरतिः, द्वन्द्वसहिष्णुत्वं तितिक्षा, विनष्टतन्द्रिव्याक्षेपस्य चित्तस्य परमात्माभिमुख्यं समाधानम्, अपुरुषार्थसकलेतरशास्त्रपराङ्मुखी परविद्यामयपरमाप्ततन्त्रोपनिषद्गोष्ठीसमुत्कण्ठारूपा सत्वकला श्रद्धा, निर्मुक्तसकलेतरदेवताराधना त्रिविधकरणसंपाद्या अष्टाङ्गयोगविशिष्टा परमात्मापरिचर्यामयी वेदरहस्या नवविद्या भक्तिः, परमानन्दावेशमयपरमात्मसेवारूपमुक्तिप्राप्तित्वरा मुमुक्षा च सकलप्राकृतभोगपराङ्मुखत्वरूपेण वैराग्येण नित्यानित्यवस्तुनिर्द्धारणाकारेण विवेकेन च विशिष्टस्य नरस्य शमादिसंपत्तिक्रमेण संभवति मुमुक्षा। एते विवेकादयो मुमुक्षापर्यन्ताः परमधर्माः सर्वेषामाश्रमिणां पराभक्तिरूपविद्यार्थमविशेषेणानुष्ठेया इति।

सर्वान्नानुमत्यधिकरणम् ॥३-४-८॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥३-४-२८॥

वाजिनां छन्दोगानां च प्राणविद्यायां पठ्यते
'न ह वास्यानन्नं जग्धं भवति' (बृ. ८-१-१४) इति
'न ह वा एवंविदि किञ्चनानन्नं भवति' (छा. ५-२-१) इति।

इह प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः प्रतीयते। एषा युक्ता नवेति संशयः। किं तावत् प्राप्तम्? मानान्तरप्राप्तस्यभोजनस्याऽविधेयत्वादिह सर्वान्नानुमतिरप्राप्ता विधीयते, इति प्राप्ते समाधीयते प्राणविद्यानिष्ठस्यापि सर्वान्नानुमतिः सर्वान्नभक्षणाज्ञा न सर्वदा, किन्तु प्राणात्यय एव,

अधिकशक्तेरुषस्तेर्ब्रह्मविदोऽपि हि प्राणात्यय एवोच्छिष्टभक्षणादौ श्रुतिर्दृश्यते,

'मटचीह तेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे कुद्राणक उवास, स हेभ्यं कुल्माषानं खादन्तं बिभिक्षे स होवाच नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ' (छा. १-१०-१,२),

'हन्तानुपानमित्युच्छिष्टं मे पीतं स्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम्' (छा. १-१०-३,४)

इत्यादिरूपा । अतः प्राणात्यय एव सर्वान्नानुमतिः परविद्यावतोऽपि ।

## अबाधाच्च ॥३-४-२९॥

'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिप्रतिलंभे सर्वग्रन्थीनां विप्रमोक्ष' (छा. ७-२६-२)

इत्यत्रोक्ताया आहारशुद्धेः सर्वान्नानुमत्या बाधे प्राप्तेऽपि अबाधात्, प्राणात्यये बाधाभावोक्तः, प्राणसंशय एव सर्वान्नानुमतिर्निर्बाधा । विदुषामविदुषामपि सर्वान्नानुमतौ प्रमाणमाह-

## अपि स्मर्यते ॥३-४-३०॥

प्राणसंशय एव सर्वान्नानुमतिः स्मर्यतेऽपि-

'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ (३८०-१०) इति,

## शब्दश्चातोऽकामकारे ॥३-४-३१॥

'यतः तस्माद् ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृज' (आपस्तम्ब श्रौतसूत्र. ३-५-८)

इति पाप्मना संसृष्टो न भवामीति मत्वा सुरां न पिबतीत्यर्थ इति काठानां संहितायाम् अकामकारे कामकारनिवृत्तौ शब्दश्चायं भवति; अतश्च प्राणसंशय एव सर्वेषामपि सर्वान्नभक्षणानुमतिः । अन्यथा निषिद्धाचरणे सति नारायणाज्ञाद्रोही स्यादिति भावः ।

विहितत्वाधिकरणम् ॥३-४-९॥

## विहितत्वाच्चाश्रमकर्मापि ॥३-४-३२॥

विद्याहीनस्य गृहस्थस्य आश्रमकर्म यज्ञादिकम्

'यावज्जीवमग्निहोत्रं जुहोति' (आपस्तम्ब श्रौतसूत्र. ३-१४-८)

इति विहिततया

'यज्ञेन दानेने'ति श्रुतेर्विद्यासाधनतया चानुष्ठेयमवगम्यते ।

## सहकारित्वेन च ॥३-४-३३॥

विद्यावतोऽपि

'विद्यां चाविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' (ईशा. ११) इति श्रुतेर्विद्याङ्गतया हिततया चानुष्ठेयं यज्ञादिकर्मावगम्यते । इह विद्याहीनेन विद्यावता च यज्ञादिकं विद्यासाधनत्वेनाङ्गत्वेन च द्विरनुष्ठेयं सकृदनुष्ठेयं वेति संशये सत्युभयविधि-बलाद्द्विरनुष्ठेयमिति प्राप्ते सिद्धान्त उच्यते -

## सर्वथापि त एवोभयलिङ्गात् ॥३-४-३४॥

सर्वथापि अविदुषो विद्यासाधनत्वेन विदुषश्च विद्याङ्गत्वेनोभयोरपि विहितत्वेन चैवं सर्वप्रकाररैपि करणीयतयोक्ताः त एव एते यज्ञादय एव प्रसिद्धाः सन्ति । सकृत्कृतानामपि तेषामुभयलिङ्ग-उभयाकारत्वेन संभूतस्वरूपसंभवोऽस्ति, अतः कर्मस्वरूपैक्ये सत्यपि तेषामुभयाकारत्वे विरोधाभावः ।

सकृत्प्रयोगेऽपि वचनद्वयबलेन कर्मण एकस्याप्याकारद्वयोपपत्तेः यथा

'खादिरो यूपो भवति खादिरं वीर्यकामस्वरूपं कुर्वीत' (शतपथ ब्रा.३-६-२-१२) इत्यत्र वचनद्वयबलेन नित्यत्वं काम्यत्वं चैकस्य खादिरत्वस्यास्ति तद्वद्विदुषोऽप्यविदुषोऽपि विद्याङ्गतया विद्याहेतुतया विहिततया च सकृदेवानुष्ठेयं यज्ञादिकमिति ।

## अनभिभवं च दर्शयति ॥३-४-३५॥

चकारोऽवधारणार्थः,

'धर्मेण पापमपनुदति' (तै.महा.उ. खण्ड.२२ (अनु.६३ -१४४) तैति. आर. प्रपा.१० अनु.६३) इति श्रुतिः विद्योत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन विद्याया अनभिभवं पराभवनिवर्तकं कर्मानुष्ठानं दर्शयत्येव, अतो न पूर्वोक्तविरोधः ।

### विधुराधिकरणम् ॥३-४-१०॥

## अन्तरा चापि तु तद्दृष्टेः ॥३-४-३६॥

आश्रमिणां विद्या संपद्यत इत्युक्तम् । इहानाश्रमिणां विद्या संपद्यते नवेति सन्देहः । अनाश्रमिणः स्नातकविधुराश्च, तेषां ब्रह्मविद्या न संभवति, विद्यासाधनभूतानाश्रम-धर्माणामभावादिति प्राप्ते वदामः -

अन्तरा चापि तु तद्दृष्टेः - रैक्वविदुरादिषु विद्यासाधनभूताश्रमहीनेष्वपि विद्यादर्शनात् अनाश्रमिणामपि विद्या संभवत्येव । यदुक्तं विद्यासाधनाश्रमधर्माभाव इति तत्राह-

## अपि स्मर्यते ॥३-४-३७॥

अनाश्रमिणामपि जपादिना विद्यानुग्रहः स्मर्यते-

'जप्येनैव तु संसिद्ध्येत् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' ॥ (मनु.२-८७) इति

## विशेषानुग्रहश्च ॥३-४-३८॥

आश्रमानियतधर्मविशेषणापि विद्यानुग्रहः श्रूयते-
'तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्य' (प्रश्न. १-१०) इति ।

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३-४-३९॥

अतोऽनाश्रमित्वादितिरदाश्रमित्वं ज्यायः धर्मभूयस्त्वेन श्रेष्ठतरम्; कुतः लिङ्गाच्च 'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज' (दक्ष स्मृ. १-१०) इति स्मृतेश्च ।

एवमनाश्रमित्वादाश्रमित्वं वरमेव तथाप्यापद्विषये अनाश्रमिणापि जप्यादिसाधनेन विद्या संपाद्यत एवेति ।

तद्भूताधिकरणम् ॥३-४-११॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥३-४-४० ॥

इहोर्ध्वरेतसां नैष्ठिकादीनां स्वस्वाश्रमावरोहोऽपि संभवति नवेति संशये संभवतीति पूर्वपक्षे प्राप्ते सिद्धान्तयामः -नैष्ठिकादिभूतस्य जनस्य अतद्भावः-ततः प्रच्युतिर्न संभवति, कुतः तद्रूपाभावेभ्यो नियमात्-तद्रूपाभावा नैष्ठिकादिधर्माभावास्तेभ्यो नियमः

'ह्यत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' (२-२३-१) इति,
'अरण्यमियात् ततो न पुनरेयात्'ति, 'समाप्याग्नीन्न पुनरावर्तयेदि'ति
च शास्त्राणि नियच्छन्ति, न चारोहरूपशास्त्रवदवरोहरूपशास्त्राणि सन्ति;
अतः तेषामप्रच्युतिनियमश्रुतेः -प्रच्युतौ श्रुत्याद्यभावाच्च न तेषां प्रच्युतानां विद्याधिकारः । जैमिनेरप्येवमेव मतमस्ति । तेषां प्रायश्चित्तादीनापि विद्याधिकारो नास्तीत्याह-

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥३-४-४१॥

आधिकारिकमधिकारलक्षणोक्तं यदवकीर्णिन उपकुर्वाणस्य ब्रह्मचारिणः प्रायश्चित्तं गर्दभपश्वालम्भनं तद्वन्नैष्ठिकस्य तत्प्रायश्चित्तं न संभवति, कुतः पतनानुमात्तदयोगात् ।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा'॥ (आग्नेय. १६-५-२३) इति तस्य पतने प्रायश्चित्तानधिकारस्मृतेः प्रायश्चित्तासम्भवात् अनुमानं स्मृतिः।

## उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥३-४-४२॥

उपपूर्वं पातकमुपपातकं नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनं संजातं चेत्तत्र भावं प्रायश्चित्तविद्यमानतां एके आचार्या मन्यन्ते अशनवत्, यथोपकुर्वाणस्य मध्वशनादिनिषेधस्तत्प्रायश्चित्तं च तथा नैष्ठिकादीनामपि समानं तदुक्तम्, उत्तरेषां चैतदविरोधीति उपकुर्वाणस्य यदुक्तं तत् चाश्रमाविरोध्यन्येषामप्याश्रमिणां भवतीत्यर्थः ।

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥३-४-४३॥

उभयथापि उपपातकत्वे महापातकत्वेऽपि कर्माधिकारादिबहिष्कृता एते 'प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' (आग्नेय. १६-५-२३) इति स्मृत्तेः, आचाराच्च-शिष्टाचारबहिराचरणाच्च तेषां सर्वथैवारूढपतितानां न विद्याधिकारः ।

स्वाम्यधिकरणम् ॥३-४-१२॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥३-४-४४॥

उक्तमुद्गीथाद्युपासनम् । तदनुष्ठानं यजमानस्य उत ऋत्विजामिति संशयः । किं प्राप्तं उद्गीथाद्युपासनं स्वामिनो यजमानस्यैवानुष्ठातुमर्हं तस्यैव वीर्यवत्तरत्वफलश्रवणात् नर्त्विजामित्यात्रेयो मेने, इति तन्मतरूपे पूर्वपक्षे सिद्धान्त उच्यते -

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥३-४-४५॥

'एवंविदुद्गाता ब्रूयात्' (छा. १-७-८)
इति वाक्यशेषे उद्गातुरुपासकत्वं स्फुटं श्रूयते;

ऋत्विग्भिः कृतमार्त्विज्यमेव तदनुष्ठानमित्यौडुलोमिस्तन्मते कथमन्यकर्तृकं कर्मान्यगामिफलं स्यादिति चेत् ऋत्विजामशेषाङ्गयुतकर्मानुष्ठानाय यजमानेन क्रीतत्वात्तत्संभवेदेवेत्याह-तस्मै साङ्गक्रमानुष्ठानाय हि ऋत्विककलापो यजमानेन परिक्रीयते परिव्रियते, अतः ऋत्विककृतमुपासनं यजमानकृतमेव, तस्मात्तत्फलं च तस्य स्वामिन एवेति न विरोधः ।

सहकार्येतरविध्यधिकरणम् ॥३-४-१३॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥३-४-४६॥

कहोलब्राह्मणे श्रूयते,

'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' (बृ. ५-५-१)

इति बहूपनिषत्तात्पर्यनिर्णयरूपं पाण्डित्यं विशेषेण संपाद्य बाल्येन रागद्वेषादिरहितत्वात् बाल्यसदृशेनावस्थान्तरेणावतिष्ठेत् ततः पाण्डित्यबाल्ये निःशेषं संपाद्याथ मुनिरिति। अत्र पाण्डित्यबाल्यवन्मौनमपि विधीयते नवेति संशये मुनिरित्यत्र भवेदित्यादिविधिप्रयोगाभावान्न मौनं विधीयते इति प्राप्ते विधीयते सिद्धान्तः-तद्वतो विद्यावतः विध्यादिवत् विधीयत इति विधिः यज्ञदानप्रभृत्याश्रमधर्मः, आदिशब्देन श्रवणमनने ग्राह्ये आश्रमधर्मवत् श्रवणमननवच्च पाण्डित्यबाल्ययोस्तृतीयं सह कार्यन्तरं मौनमेकं विधीयते; कुतः मनुशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रसिद्धैर्निष्ठानिष्पत्यर्थं उपास्यविषयाभ्यासरूपमिदं प्रकृष्टमननं तिष्ठासेदितिपदानुवृत्त्या विधीयते, ततो मौनविधिः सम्भवति विद्यावत इति।

कृत्सनभावाधिकरणम् ॥३-४-१४॥

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥३-४-४७॥

इह सर्वेषामाश्रमाणां विद्या साधारणा उत अत्र विशेषोऽस्तीति संशयः। ब्रह्मचारिणो वेदाभ्यास आचार्यपरवशत्वात् गृहस्थस्य कुटुम्बभरणायोद्यमे व्याकुलत्वात् वनस्थस्य वैखानसधर्मव्यापृतत्वात् न तेषां ज्ञानध्याने संभवतः।

'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः' (मुण्ड. ३-२-६)

इति वेदान्तार्थज्ञानवतां संन्यासयोगश्रवणात् अन्त्याश्रमस्थेषु ध्यानविधिदर्शनाच्च अन्त्याश्रमिणामेव ज्ञानध्याने संभवतः, नेतरेषामिति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः- सर्वेष्वाश्रमेषु ज्ञानध्यानरूपा विद्यासंभवत्येव, कुतः कृत्स्नभावात्-कृत्स्नाश्रमेषु विद्यासद्भावप्रदर्शनात्। तथाहि छान्दोग्ये,

'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' (छा. ८-१५-१) इत्यारभ्य

'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' (छा. ८-१५-१)

इति। अत्र हि गृहिणा गृहस्थेन उपसंहारः सर्वविद्यासमाप्तिस्तु सर्वेषां प्रदर्शनार्थः, एवमत्याश्रमवचनमपि सर्वेषामाश्रमिणां प्रदर्शनार्थम्, अतः सर्वेषामाश्रमिणां विद्यास्त्येव। फलत्यागः संन्यासः, यतित्वं जितेन्द्रियत्वं सर्वमिदं सर्वेषां संभवत्येव।

## मौनवदितरेषामप्युपदेशात् ॥३-४-४८॥

'अथ मुनिः' (बृ.५-५-१) ति वचने 'अथ भिक्षाचर्यं चरन्ति' (बृ.५-५-१) इत्यादिनोक्तो यः शमदमादिरूपपारिव्राज्येकधर्मोपसंहारः स सर्वाश्रमिणां शमाद्यनुष्ठानार्थं प्रदर्शितः, तं सूत्रार्थेन दर्शयति-मौनवत्-सर्वेषणाविनिर्मुक्तानां मौनोपदेशवत् इतरेषां शमदमादिसाधनमपि सर्वाश्रमिजनानुष्ठानोपदेशात् सर्वाश्रमिणां ब्रह्मविद्या विहितैव ।

अनाविष्काराधिकरणम् ॥३-४-१५॥

## अनाविष्कुर्वन्नन्वयात् ॥३-४-४९॥

कलिवर्ज्यप्रकरणे वानप्रस्थसंन्यासाश्रमयोर्निषेधत्वाद्गार्हस्थाद्याश्रमान्तरेण देहमनाविष्कुर्वन्नव्यक्तीकुर्वन्नपि द्विजो वासुदेवीमहादीक्षारूपाश्रमं परविद्यासाधनमुपादत्ते; कुतः तस्य वैराग्यातिशयेन ब्रह्मचर्यादियतिधर्मसमन्वयात् । अत्याश्रमसंज्ञकोऽयमाश्रमभेदः नारायणसेवापरस्तत्प्रसन्नताहेतुश्च । तथाहि वासुदेवोपनिषदि,

'ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ भगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमंत्रस्थानादियुतं मे ब्रूहि' (वासुदेवोपनिषत् - १)

इत्यादिभिरूर्ध्वपुण्ड्रधारणविधिना वासुदेवी महादीक्षा श्रूयते । स्कान्दे च स्मर्यते

'वानप्रस्थश्च संन्यास इत्युभावाश्रमौ मुने,
दुष्करत्वात्कलियुगे न ग्राह्याविति निश्चयः । (वा. मा. २३-३१)
श्रीवासुदेवभक्ता ये तीव्रवैराग्यशालिनः,
तेषां धर्मस्तु तत्सेवा प्रोक्तोऽहस्सु च रात्रिषु । (वा. मा. २३-३२)
एकोऽपि च क्षणस्तेषां ज्ञानविज्ञानभूयसाम्,
भक्तिं नवविधां विष्णोर्विना व्यर्थो न वै भवेत्' । (वा. मा. २३-३३) इति ।

एवं च सति गृहिणां वैराग्यवतां मुमुक्षुजनानां वासुदेवीदीक्षाग्रहणं युक्तमिति निर्णयः । एवं भुक्तिमुक्तिहेतुतयेदं व्रतं नारायणप्रसादकरं श्रुतय एव वर्णयन्ति तथाहि

'पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः अतप्ततनुर्न तदामोऽश्नुते शृता स इद्वहंतस्तत्समाशततपोष्पवित्रं विततं दिवस्पदे शोचन्तोऽस्य तन्तवो व्यस्थिरन् अवन्त्यस्य पवितारमाशवो दिवस्पृष्टमधितिष्ठन्ति चेतसा'

(ऋग्वेद सं. अष्ट.७ अध्या.३ वर्ग.८ / सामवेद उत्तरभाग. प्रपाठ.२ अर्ध.२ खण्ड.४)

इति ऋग्वेदसंहितायां सप्तमाष्टके तृतीयेऽध्यायेऽष्टमे वर्गे इयमेव श्रुतिः किञ्चित्पाठान्तरेण सामवेदे उत्तरग्रन्थे द्वितीये प्रपाठकेऽस्ति । तत्र ऋग्वेदश्रुतिभाष्यम्-पवित्रमिति; हे ब्रह्मणस्पते !

ब्रह्मणोऽक्षरब्रह्मणः पतिः स्वामी तत्संबुद्धौ हे वासुदेवेत्यर्थः, ते तव पवित्रमतिशुद्धं विततं सर्वत्र व्याप्त्या विस्तृतं अक्षराख्यं स्थानमस्तीति शेषः, एतादृशः प्रभुः समर्थस्त्वं सर्वत्र व्याप्त्या विस्तृतं अक्षराख्यं स्थानमस्तीति शेषः, एतादृशः प्रभुः समर्थस्त्वं तप्तत्वदायुधधारकस्य गात्राण्यङ्गानि पर्येषि परिगच्छसि तत्समीपे नित्यं तिष्ठसीत्यर्थः। यः विश्वतो विश्वस्मिन् जगति अतप्ततनुश्चक्रादित्वदायुधैरसंतप्तगात्रः तत् स आमो भगवदुपासमार्गे पक्वताहीनः, अतस्तत् त्वद्धाम नाश्नुते न प्राप्नोति शृता स इत् तप्तमुद्राधारणपक्वदेहा एवं वहन्तो दिव्यां भागवतीं तनुं प्राप्नुवन्तः सन्तः तत्तवस्थानं समाशत व्याप्नुवन्ति तत्प्रविशन्तीत्यर्थः।

तपोष्पवित्रमिति, तपोः स्वभक्तशत्रूणां तापकस्य तव पवित्रमतिशुद्धं स्वरूपं दिवः पदे द्युलोकात् श्रेष्ठे अक्षराख्ये स्थाने विततं निजैश्वर्यविस्तारेण स्थितम्; यस्य त्वद्दिव्यस्वरूपस्य तंतवः किरणाः शोचन्तो देदीप्यमानाः व्यस्थिरन्-बद्धमुक्तान्तर्यामितया विविधं तिष्ठन्ति; अस्य त्वत्स्वरूपस्य आशवः स्वभक्तसुखप्रदाने सत्वरास्ते तंतवः पवितारं संतप्तचक्राद्यायुधधारणेनात्मानं पवित्रीकुर्वाणं निजभक्तम् अवन्ति पालयन्ति; एवंभूतं त्वां चेतसान्तः करणेन ध्यातारो ये ते दिव्यस्पृष्टं दिव्यन्ति भगवन्तं स्तुवन्ति इति देवाः स्तोतारो महामुक्तास्तैः स्पृष्टं अधिष्ठितं त्वद्धाम अधितिष्ठन्ति आश्रयन्ते इति श्रुतितात्पर्यार्थः।

'स होवाच याज्ञवल्क्यस्तत्पुमानात्महिताय हरिं भजेत्,
सश्लोकमौलेर्वर्माण्यग्निना संदधते' इति,

'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा।
स्वरेण मन्त्रेण सदा हृदि स्थितिं परात्परं याति महान्महान्तम्'॥ (श्रीपाञ्चरात्रम्) इति
'धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं सांख्ययोगादिगम्यम्।
स्मृत्वा विमुच्येत नरः समस्तैः संसारपाशैरभियाति विष्णुम्'॥ (श्रीपाञ्चरात्राम्) इति

इदं च व्रतं पञ्चरात्रतन्त्रे पुराणेषु च बहुधा प्रसिद्धम्।

ऐहिकाधिकरणम् ॥३-४-१६॥

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥३-४-५०॥

उक्तक्रमोपासननिष्ठानामैहिकं मुक्तिफलम् उत जन्मान्तरे वा भवतीति विचार्यते। इहैव जन्मनि मुक्तिर्जायतामित्याभिसन्धाय पुरुष उपासने प्रवर्तते न तु जन्मान्तर इति को वा पुरुषः प्रयोजनस्य विलम्बं करोति न कोऽपि; तस्मादैहिकमेव मुक्तिफलं न जन्मान्तरीयमिति प्राप्ते सिद्धान्तं वदामः,

अप्रस्तुतप्रतिबन्धे प्रकृतप्रबलकर्मान्तरप्रतिबन्धाभावे परमात्मोपासनफलमिह जन्मनि भवति; तदभावे तु जन्मान्तरे यथाभ्युदयरूपं फलं स्वसाधनभूतपुण्यकर्मानन्तरमेव संपद्यते,

तत्प्रतिबन्धकसद्भावे तु जन्मान्तरे भवति तद्वत् वामदेवादिषु जन्मान्तरश्रवणादिबलेन तत्फलदर्शनात् ततो नैहिकत्वे मुक्तिफलस्य नियम इति ।

मुक्तिफलाधिकरणम् ॥३-४-१७॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते: ॥३-४-५१॥

केवलकर्मफलाभ्युदयवत् मुक्तिफलमपि कर्मान्तरप्रतिबन्धाभावे भवती'ति निरूपितम् । तन्न्यायेन कर्मफलवत् ज्ञानोपासनफलभूतस्यापि मोक्षस्य न्यूनाधिकत्वे नियमोऽस्ति नवेति संशयः। किंतावदत्र प्राप्तं कर्मफलवन्मुक्तिफलमपि न्यूनाधिकमस्तीति पूर्वः पक्षः ।

'ज्योतिष्टोमेन स्वर्गकामो यजेत' (आप.श्रौ.प्र.१० कं. २-१),

'वाजपेयेन स्वाराज्यकामो यजेते'त्यादिभिः कर्मफलस्य न्यूनाधिकत्वमवगम्यते तद्वज्ज्ञानोपासनफलस्यापीति प्राप्तेऽभिधीयते,

कर्मफलस्येव ज्ञानोपासनफलस्य न न्यूनाधिकत्वनियमः, कुतः तदवस्थावधृतेः ब्रह्मभावावस्थाया एव पार्षदत्वरूपमुक्तिफलावधृतेः । सर्वेषामपि परविद्यावतां ब्रह्मात्मकपार्षदत्वस्यैकत्वात् न वैषम्यकथात्र सम्भवति । द्विरुक्तिरध्यायसमाप्तिं द्योतयति ।

इति
श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्य-श्रीमुक्तानन्दमुनिविरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
तृतीयाध्यायस्य चतुर्थपादः समाप्तः ॥ ४ ॥
समाप्तश्चायं तृतीयाध्यायः ॥ ३॥



श्रीहरिकृष्णाय नमः

## अथ चतर्थाध्याये प्रथमः पादः ॥

आवृत्त्यधिकरणम् ॥४-१-१॥

## आवृत्तिरसकृदुपदेशात् ॥४-१-१ ॥

तृतीयाध्याये खलूपासकोपास्योपासनभेदा आश्रमधर्मादयश्च निर्णीताः । इह पुनश्चतुर्थाध्यायस्याद्यपादे उपासनप्रकारः, द्वितीये पादे जीवकलापस्योपासकस्योत्क्रान्तिदशा च तृतीये पादे अर्चिरादिगतिश्च चतुर्थे पादे परब्रह्मप्राप्तस्य भक्तस्यावस्था च वर्ण्यते । अत्र प्रथमाधिकरणे

'ब्रह्मविदाप्नोति परं' (तै.उ.आन.१-१),

'तमेव विदित्वातिमृत्यमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता.३-८ / ६-१५)

'यदा पश्यः पश्यते रुक्मवर्णम्' (मुण्ड. ३-१-३) इत्यारभ्य

'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. ३-१-३) इति

'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः,

त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' (गीता. ४-९) इति,

'बहवो ज्ञानतपसा पूता मद्भावमागताः' (गीता. ४-१०)

इत्यादिषु मोक्षसाधनत्वेन विहितं वेदनं सकृदनष्ठेयं उतावर्तनीयमिति संशयः । किन्तावत्प्राप्तं सकृदनुष्ठेयम्, सकृत्कृतेऽपि शास्त्रार्थे कुतः शास्त्रार्थ इतिन्यायात्प्रयाजादिवत् सकृदनुष्ठानेऽपि परस्परपर्यायभूतवेदनज्ञानशब्दार्थसिद्धेरिति प्राप्ते ब्रूमः- मोक्षसाधनतया विहितं वेदनमसकृदावर्तनीयं कुतः उपदेशात्-

'ब्रह्मविदाप्नोति परमि'त्यादिवाक्यसमानार्थेषु

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. ४-४-५ / ६-५-६),

'ततस्तु स पश्यते निष्कलं ध्यायमानं' (मुण्ड. ३-१-८)

इत्यादिवाक्येषु ज्ञानस्य ध्यानरूपत्वोपदेशात् ।

'मनो ब्रह्मेत्युपासीत' (छा. ३-१८-१),

'भाति च तपति च कीर्त्यां यशसा ब्रह्मवर्चसेन य एवं वेद' (छा. ३-१८-३),

'यस्तद्वेद यत्स वेद स मयैतदुक्तः' (छा. ३-४-४),

'अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से' (छा. ४-२-२)

इत्यादिश्रुतिषु उपक्रमोपसंहारयोर्विद्युपास्योर्व्यतिकरोपदेशेन मोक्षसाधनरूपस्य वेदनस्योपासनरूपत्वावगमाच्च; ध्यानोपासनशब्दयोश्च स्मृतिसंतानवाचित्वात्; यदुक्तं

प्रयाजादिवदिति तदत्र नोचितं तस्य प्रयाजादेरदृष्टफलत्वात्, यदुक्तं सकृदनुष्ठानं वेदनफलस्य हरिसाक्षात्कारस्य तु दृष्टत्वात् तस्याऽऽफलोदयमावृत्तिर्व्रीह्यादेरवघातादिवदिति युक्तम्।

## लिङ्गाच्च ॥४-१-२॥

अस्मिन्विषये लिङ्गं स्मृतिश्चास्ति-

'तद्रूपप्रत्यये चैका संततिश्चान्यानिस्पृहा।

तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तदा' (वि.पु. ६-७-९१) इति

'अनन्येनैव योगेन मां ध्यायन्त उपासते। (गीता. १२-६)

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्' (गीता. १२-७)

इत्यादिस्मृतिकलापः। अतश्च परब्रह्मवेदनस्यावृत्तिरिति।

आत्मत्वोपासनाधिकरणम् ॥४-१-२॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥४-१-३॥

पूर्वत्रावृत्तिमत्परब्रह्मण उपासनमभिहितम्। उपासितुर्जीवात्मनः तत्परब्रह्मोपासनं प्राप्ताक्षरब्रह्मैक्येन उतार्थान्तरत्वेनेति संशयः। सुषुप्त्युत्क्रान्त्योर्भेदेन

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते'॥ (गीता. १५-१६)

इत्यादिषु परब्रह्मोपासितुर्जीवकलापस्याक्षरब्रह्मणः सकाशादर्थान्तरत्वेनोपपादनात् तदन्यत्वेनोपासनं कर्तव्यमिति पूर्वः पक्षः प्रवर्तते। सिद्धान्तस्तु

'देवो भूत्वा देवं यजेत', 'अहं ब्रह्मास्मीति' (बृ. ३-४-१०)

'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।

समःसर्वेषु भूतेषु मद्भक्तिं लभते पराम्' (गीता. १८-५४) ॥ इति

'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरूक्रमे।

कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः (भा. १-७-१०) ॥

परिनिष्ठितोऽपि नैर्गुण्ये ह्युत्तमश्लोकलीलया।

गृहीतचेता राजर्षे आख्यानं यदधीतवान् (भा. २-१-९) ॥

नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः।' (भा. २-१-७)

इत्यादीनि शास्त्राणि परब्रह्मोपासितुर्जीवात्मनोऽक्षरब्रह्मैक्येनोपासनं ग्राह्यन्ति। तुशब्दोऽवधारणे। अत आत्माऽक्षरब्रह्म मम स्वरूपमेवास्तीति परब्रह्मोपासितारोऽक्षरात्मभावेन परब्रह्मोपासनमुपगच्छन्ति; अतो मुक्तावस्थामपि ते ब्रह्मपुरे सदावस्थितस्य परब्रह्मशब्दाभिधेयस्य पुरुषोत्तमनामकस्य नारायणस्य परिचर्यायां तत्समानधर्मया ब्रह्मरूपया भागवतीतन्वा सततं

तिष्ठन्ति । तथाहि श्रूयते

'अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः' (श्वेता. ४-८) इति

'स्वभक्तेभ्यो रमते स मे सर्वस्वम्'ति,

'गुणापाये ब्रह्मशरीरमेति'

'ब्राह्मी संविशते तनुमि'ति

'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. ३-१-३) इति,

'नामरूपाद्विमुक्तः परात्परं पुरुषमूपैति' (मुण्ड. ३-२-८) इति

स्मर्यते च-

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' (गीता. १४-२) इति ।

'प्रवर्तते यत्र रजस्तमस्तयोः सत्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरा सुरार्चिताः'॥ (भा. २-९-१०)

'श्यामावदाताः शतपत्रलोचना' (भा. २-९-१०) इति

'ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् ।
सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिषेवितं प्रभुम्' (भा. २-९-१४) इति

'प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्' (भा. १-६-२६)

इति पार्षदत्वरूपया भागवतीतन्वा भगवत्परिचर्यारूपा मुक्तिरिति सर्वश्रुतिस्मृति-तात्पर्यादक्षरात्मभावेन परब्रह्मोपासनमुपासितुर्मुक्तिकरम्, अन्यथा संसारानिवृत्तिरिति निर्णयः। विशेषमाह-

प्रतीकाधिकरणम् ॥४-१-३॥

## न प्रतीके न हि सः ॥४-१-४॥

'मनो ब्रह्मेत्युपासीत' (छा. ३-१८-१)

इत्यादिश्रुतिषु मनः प्रभृतीनां ब्रह्मत्वेनोपासनमवगम्यते, तेष्वप्यात्मैकत्वेनोपासनमुत भिन्नत्वेनेति संशये पूर्वपक्षः -

'मनो ब्रह्मेत्युपासीत' (छा. ३-१८-१)

इत्यादिश्रुतिसिद्धेषु प्रतीकोपासनेषु ब्रह्मदृष्ट्या संस्कृतं मनः प्रभृतिकमुपास्यमवगम्यते, अतः प्रतीकमुपासकेन ब्रह्मतया भावितमित्यात्मैकतया तदुपासने को विरोध इति एवं प्राप्ते उच्यते नात्मैकत्वग्रहणं प्रतीकेषु, तेषु हि न परं ब्रह्मोपास्यं, किन्तु ब्रह्मदृष्ट्या मनः प्रभृतिकमुपास्यम् । तत्र मन आदिविशिष्टस्य ब्रह्मण एवोपास्यत्वेऽपि मन आदेर्ब्रह्मगुणत्वाभावात् विकारत्वयुतमनआदिविशिष्टे ब्रह्मणि नात्मैकत्वग्रहणं किन्तु सत्यत्वादिविशिष्टेऽक्षरब्रह्मण्ये

वात्मैकत्वग्रहणम्, अन्यथा ह्यात्मनोऽपि विकारास्पदत्वं स्यात्, अतः प्रतीके मनः प्रभृत्यङ्गोपासने ह्यात्मैकत्वग्रहणं नोपासकानाम्; नहि तत्र नारायणः साक्षादुपास्य इति ।

## ब्रह्मदृष्टिरुत्कर्षात् ॥४-१-५॥

प्रतीकोपासनेषु मनआदित्यादिप्रतीके ब्रह्मदृष्टिरुपासकेन कर्तव्या उत ब्रह्मणि तद्दृष्टिरिति सन्देहे पूर्वः पक्षः मन आदीनां दृष्टिं ब्रह्मणि कृत्वा ब्रह्मोपासनीयं, मनआदित्यादेरेव फलदातृत्वादित्येवं प्राप्ते उच्यते-

'अधिकं तु भेदनिर्देशात्' (ब्र.सू. २-१-२२),

'अक्षरात्परतः परः' (मुण्ड. २- १ -२),

'परात्परतरो ब्रह्म तत्परात्परतो हरिरि'ति

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' (गी.१५-१८)

इत्यादिषु उत्कर्षात् -परब्रह्मण उत्कृष्टत्वागमात्, ब्रह्मदृष्टिः परब्रह्मदृष्टिरेव निकृष्टेषु मन आदिषु कर्तव्या । लोके हि निकृष्टे भृत्यादौ राजदृष्टिं कृत्वा राजवत्तमुपासते नतु भृत्यदृष्टिं कृत्वा राजानमुपासते केचिदपि; इदमेव च परमौचित्यं यदुत्कृष्टं वस्तु तदेव सर्वे संमानयन्ति; अतः परं ब्रह्म सर्वोत्कृष्टस्य नारायणस्य सर्वत्र व्याप्तिदृष्ट्या सर्वेषां मनःप्रभृतीनां प्रतीकानामुपास्यत्वं सिद्धम्।

आदित्यादिमत्यधिकरणम् ॥४-१-४॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥४-१-६॥

पूर्वत्र ब्रह्मण उत्कृष्टत्वादादित्यादिषु तद्दृष्टिरूपासनेऽभिहिता । इह

'य एवासौ तपति तमुद्गीथमुपासीत' (छा. १-३-१)

इत्यादिषु कर्माङ्गोपासनेषु उद्गीथादिषु आदित्यादिदृष्टिः कार्या उत विपर्यासेनैवेति संशयः । किं तावत्प्राप्तम्-उद्गीथादीनामादित्यादीनां च कर्माङ्गत्वब्रह्मरूपत्वाविशेषात् अनियम इति पूर्वपक्षे प्राप्ते सिद्धान्तं वदामः-उपपत्तेः -आदित्यादीनां कर्माराध्यत्वेनोत्कृष्टत्वोपपत्तेः कर्माङ्ग उद्गीथादौ आदित्यादिमतयस्तद्दृष्टयः कार्याः तद्दृष्टिसंस्कृतोद्गीथाद्यङ्गायुक्तस्य कर्मणः फलातिशयसंभवात् यत्खलु स्वतो वीर्यवत्क्रियमाणं च तस्यैव विद्यया संस्कृतस्य वीर्यवत्तरत्वरूपफलातिशयः

'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' (छा. १-१-१०)

इति वाक्यादवगम्यते । एवं च ब्रह्मात्मत्वादिसाम्येऽप्युद्गीथादिक्रियाचोदनादुद्गीथादेः क्रियमाणत्वेन फलसाधनत्वादुद्गीथादिविपरीत सिद्धस्वभावस्यादित्यादेस्तथाफल-साधनत्वाभावादा-दित्यादिदृष्टिरुद्गीथादिष्वङ्गेष्विति निर्णयः ।

आसीनाधिकरणम् ॥४-१-५॥

## आसीनः सम्भवात् ॥४-१-७॥

उपपादितमुपासनाव्यवस्थापनम् । इहोपासनस्य आसननियमोऽस्ति नवेति संशयः । क्वचिदप्यासीन उपासीतेति नियमाश्रवणात् मानसव्यापाररूपस्योपासनस्य सर्वावस्थामपिसंभवादुपासने नास्त्यासननियम उपासकस्येति पूर्वः पक्षः । सिद्धान्तस्तु आसीन एव ब्रह्मोपासीत तस्यैवैकाग्र्यसम्भवात् तथाहि श्रूयते-

'यदा तु ध्यायते मन्त्रं गात्रकम्पोऽभिजायते ।
आसनं पद्मकं बध्वा यच्चान्यद्वापि रोचते ॥ (योगशिखो. १-७०)
कुर्यान्नासाग्रदृष्टिं च हस्तौ पादौ च संयुतौ' ॥ (योगशिखो. १-७१) इति
'विविक्तदेशे तु सुखासनस्थः शुचिः समग्रीवशिरः शरीरः' (कैव. उ. ५)

इत्यादिनोपासने नियमोऽस्तीत्यवगम्यते; अत आसीन एव ब्रह्मोपासीतेति निर्णयः ।

## ध्यानाच्च ॥४-१-८॥

'स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्' ॥ (श्वेता. १-१४)

इत्यादिश्रुतौ नारायणदर्शनजनकोपासनस्य ध्यानरूपत्वावगमात् ध्यायतेश्च

'ध्यायति बको, ध्यायति प्रोषितबन्धुः' (लोकवचने इमे)

इत्यादिवचने प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टेषु एक विषयाक्षिप्तचित्तेषु जन्तुष्वर्थव्यवहारात् विजातीयज्ञानान्तराव्यवहिते तैलधारावदविच्छिन्नस्मृतिसंतानरूपध्याने चित्तैकाग्र्यावश्यंभावाच्च ध्यानसिद्धयेऽवश्यमासननियम आदर्त्तव्यः ।

## अचलत्वं चापेक्ष्य ॥४-१-९॥

पृथिव्यादीनामचलत्वमपेक्ष्य
'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षम्' (छां. ७-६-१)

इत्यादिप्रयोगाच्चासीन एवोपासीत; ध्यानसंततिर्हि पृथिव्यादिवदचलत्वेनासीनस्यैव संभवति ।

## स्मरन्ति च ॥४-१-१०॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ (गीता. ६-११)

तत्रैकाग्र्यं मनःकृत्वा यतचित्तेन्द्रियक्रियः ॥
उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये'॥ (गीता. ६-१२)

इत्युपासकानामासननियमस्मरणाच्च आसीन एव ब्रह्मोपासीत ।

एकाग्रताधिकरणम् ॥४-१-६॥

## यत्रैकाग्रता तत्राविशेषात् ॥४-१-११॥

उक्त उपासकस्यासननियमः । तद्वद्दिग्देशकालनियमोऽस्ति नवेति संदेहे सत्यस्तीति युज्यते। यथा चोदिते कर्मणि ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशीति दिग्नियमः, प्राचीनवर्णे वैश्वदेवेन यजेतेतिदेशनियमः, अपराह्णे पिण्डपितृयज्ञेन चरन्तीति कालनियमः तथात्रापि चोदितत्वाविशेषादुपासने दिगादिनियमो युक्त इति पूर्वः पक्षः ।

सिद्धान्तस्तु उपासने नास्ति दिगादिनियमः । एकाग्र्यं हि ध्यानस्य प्रधानसाधनं नहि तस्य दिगाद्यपेक्षा । यत्र रागद्वेषादिकालुष्यहेतुर्नास्ति तत्र हि मनस एकाग्र्यं भवति, एकाग्र्यं यस्मान्मुख्यतमं साधनं भवति तस्मादैकाग्र्यमात्रसाधनकस्य ध्यानरूपोपासनस्य न दिग्देशकालनियमः ।

आप्रायणाधिकरणम् ॥४-१-७॥

## आप्रायणात्तत्रापि हि दृष्टम् ॥४-१-१२॥

पूर्वत्र ब्रह्मोपासने दिगादिनियमाभाव उक्तः । इह पुनस्तस्योपसंहारोऽस्ति नवेति विचारे यावदिच्छा तावदुपासना कर्तव्या । अन्यथा तदुपसंहार इति पूर्वपक्षे प्राप्ते सिद्धान्तः - आप्रायणादामरणादहरहरुपासना कार्या, न कदाचिदपि तदुपसंहारः । तत्रापि यावदायुः कालेऽप्युपासनं दृष्टं हि

'अहरहर्वा एवंवित्स्वर्गं लोकमेति' (छां. ८-३-५),
'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते' (छां. ८-१५-१)

इत्यादावाप्रायणात् उपासनश्रवणात् परब्रह्म-स्वरूपसाक्षात्कारसंपादिन्यास्तद्ध्रुवानुस्मृतेर्मध्ये विच्छेदो न कार्यः । स्वहृदि नैरन्तर्येण तु ब्रह्मणि भाविते हि तद्रूपमुपासकेषु प्रकाशते; अतः सर्वज्ञं नित्यतृप्तं स्वयंप्रकाशं स्वतन्त्रमलुप्तशक्तिकं परंब्रह्म नैरन्तर्येण भावनीयं तत्स्वरूपप्रकाशाय । तथा श्रूयते ब्रह्मरूपमुपासकेषु प्रकाशत इति

'यमेवैष वृणुते तेन लभ्यः विवृणुते तनुं स्वाम्' (कठ. १-२-२३) इति;

एवमुपासकानामक्षरात्मभावमुपगतेषु स्वात्मसु परब्रह्मस्वरूपस्य प्रकाशनात्तत्कारण-भूताध्रुवानुस्मृतिर्यावदायुषं कर्तव्या न कदाचिदपि विच्छेद्येति निर्णयः ।

## तदधिगमाधिकरणम् ॥४-१-८॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥४-१-१३॥

पूर्वत्र प्रकर्षेणोपासकानां ब्रह्मस्वरूपं प्रकाशत इति सोपपत्तिकमुपपादितम्। इह तेषां पापक्षयोऽस्ति नवेति संशयः। किंतावत्प्राप्तम् उपासकानामपि भोगमन्तरेण पापक्षयो न भवति 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' (ब्रह्म वै.पु. प्रकृति खण्ड. अ.२६-७०) इति वचनात्।

भोगाय शरीरापत्तौ पुनरपि कर्मापत्तिरिति न मोक्षावसर इत्येवं प्राप्ते क्षीयते पापं कर्मोपासकानामिति ब्रूमः। कथमिति चेत्तत्राह-तदधिगमे परब्रह्मोपासनप्राप्तौ तत्सामर्थ्यादेवपरब्रह्माज्ञानुवर्तिनो भागवतधर्मपालनशीलस्योपासकस्य पूर्वाघनाशः, उत्तराघाश्लेषश्च भवति। कुतः तद्व्यपदेशात्-श्रुतिस्मृतिषु पूर्वोत्तराघविनाशाश्लेष-योर्व्यपदेशोऽवगम्यते। तथाहि

'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते (छां. ५-२४-३)

तद्यथापुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत' (छां. ४-१४-३)

इति,

'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मुण्ड.२-२-८) इति,

'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा'॥ (गीता. ४-३७)

'ज्ञानाग्निदग्धकर्माणम्'। (गीता. ४-१९) इति

विद्यावतः पूर्वोत्तराघविनाशाश्लेषयोः स्वरूपं त्वेवं वेदितव्यं -
तत्र विद्योत्पत्त्युत्तरकालभाविनोऽघस्याश्लेषकरणं हि वैदिककर्मानुष्ठानायोग्यतासंपादिकया दुर्वासनया तदननुष्ठानजन्यप्रत्यवायहेतुतच्छक्त्युत्पत्तिप्रतिबन्धकरणं यत्तदेव कृतान्यघानि च जनस्य वैदिककर्मानुष्ठानायोग्यतां सजातीयकर्मान्तरारम्भरुचिं तदननुष्ठानजन्यप्रत्यवायं च कुर्वन्ति; विद्योत्पत्तेः प्राचीनस्याघस्य विनाशकरणं तु तदुत्पन्नायाः शक्तेर्विनाशकरणं यत्तदेव, तच्छक्तिरपि श्रीहर्यप्रसन्नातारूपैव; एतदुक्तं भवति-विद्या ज्ञातुर्जनस्य विद्यातिप्रियत्वात्स्वयं विद्याशक्तिरपि वेद्यभूतश्रीहर्युपासनस्वरूपा, तस्य निरतिशयप्रिया सती तेन पूर्वकृताघसमूहोत्पन्नां श्रीहर्यप्रीतिं विनाशयति; सैव विद्याशक्तिः स्वोत्पत्त्युत्तरकालभाव्यघहेतुकां श्रीहर्यप्रीत्युत्पत्तिं प्रतिबध्नाति। एवं च सति यदघाश्लेषवचनमाम्नायते तत्प्रामादिकविषयं मन्तव्यम्।

'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' ॥ (कठ. १-२-२४)

इत्यादिश्रुतिभिर्यावज्जीवं प्रत्यहमुत्पद्यमानाया उत्तरोत्तरातिशयवर्धमानाया विद्याया दुश्चरितपरिहाणेनैव निष्पाद्यत्वावगमात्। एवं सत्युपासकानां पूर्वोत्तराघस्थानीययोः

संचितक्रियमाणयोरश्लेषविनाशौ विद्यया भवत एव । यदुक्तं नाभुक्तं क्षीयत इति । तस्य हरिस्वरूपज्ञानहीनपुरुषविषयत्वादविरोधः ।

इतराधिकरणम् ॥४-१-९॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥४-१-१४॥

पूर्वत्र विदुषः पापलेपो न भवतीति निरूपितम् । इह तद्विरोधिपुण्यलेपोऽस्ति नवेति विचारः। किं प्राप्तं विद्याविरोधिनः पापस्य क्षयो युक्तः न तु पुण्यस्य; कुतः
तस्य विद्याङ्गत्वेनानुवृत्त्योचित्यादित्येवं प्राप्ते निरूप्यते-विदुषि इतरस्य पुण्यस्यापि एवं पापवन्मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादश्लेषविनाशौ विद्यया स्याताम् ।

विद्यानुगुणस्यारोग्यादिफलस्य पुण्यस्य शरीरपाते लयः, विद्याङ्गकर्मणस्तु काम्यफलादि-संबन्धाभावान्न श्लेषः, अतो विदुषः पुण्यलेपोऽपि नास्तीति निर्णयः ।

अनारब्धकार्याधिकरणम् ॥४-१-१०॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥४-१-१५॥

पूर्वत्र विदुषः पुण्यपापयोरूत्तरपूर्वयोर्विद्याहेतुकावश्लेषविनाशौ निरूपित्तौ । इह प्रारब्धकार्ययोस्तयोःस्थितिरस्ति नवेति संशयः ।

'सर्वे पाप्मानः पद्रूयन्ते' (छां. ५-२४-३)

इत्यविशेषश्रवणान्नास्तीति पूर्वः पक्षः । सिद्धान्तस्तु विद्याधिकृतेर्नरस्य पूर्वे पूर्वकृते अनारब्धकार्ये फलप्रदानायाप्रवृत्ते पुण्यपापे एव विद्यया विनश्यतः नतु प्रारब्धे पुण्यपापे । कुतः तदवधेः

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' (छां. ६-१४-२)

इति तयोः शरीरपातावधिः श्रूयते; अतः प्रारब्धयोः पुण्यपापयोर्यावदायुर्न विलयः

'मुक्तोपि तावद्बिभृयात्स्वदेहं प्रारब्धमश्नन्नभिमानशून्य' (भा. ५-१-१६) इति,

'तत्तेऽनुकंपां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्' (भा. १०-१४-८)

इत्यादिस्मरणाच्च ।

अग्निहोत्राद्यधिकरणम् ॥४-१-११॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥४-१-१६॥

पूर्वत्र विदुषः पुण्यपापश्लेषविनाशौ विद्यानिमित्तौ निरूपितौ । यावदायुषमुपासनावृत्तिरप्युपपादिता । इह पुनरग्निहोत्राद्यनुष्ठानमपि यावच्छरीरपातमनुवर्तते उत मध्ये विच्छिद्यत इति विचारः । किं प्राप्तम्- अग्निहोत्रादिकमाप्रायणं नानुष्ठेयम् । अनुष्ठितस्यापि

तस्य फलानुसंधानहीनत्वेन नाशाभ्युगमात्, अप्रयोजने तत्करणे कस्य मनः प्रवर्तते इति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः- गृहिणाऽग्निहोत्रादिकं प्रवृत्तं त्यागिना च तपोजपज्ञानध्यानाधिकं निवृतं च कर्माप्यामरणमनुष्ठेयं तत्कार्यायैव विद्यारूपप्रयोजनसंपादनायैव; कुतः तद्दर्शनात् -
तथाहि दृश्यते

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृह. ६-४-२२)
इत्यादि । अत्र वेदानुवचनं वेदाभ्यासः नारायणप्राप्तिसाधनपरमज्ञानहेतूनां अध्यात्मवादिनां वेदमन्त्राणां जपावृत्तिः, एतेषां नारायणपराणां वेदमन्त्राणां पापक्षयद्वारा परमज्ञानहेतुत्वेन मोक्षसाधनत्वावगमात् तदभ्यासः कर्तव्यो विद्यावतापि यावज्जीवम्; एवमग्निहोत्रादीनामपि यज्ञानां नारायणसमर्पितफलानां तदाज्ञासिद्धत्वात् तदाराधनरूपत्वाच्चाभ्यासः कार्यः । एवं दानादीनामपि, तस्माद्विदुषापि विद्यानिष्पत्तिकार्यायाग्निहोत्रादिकमनुष्ठेयमिति; कर्म तपोजपध्यानज्ञानरूपं नारायणोपासनम्; तत्र कर्माग्निहोत्रादिकं तपो नियमः कायशोषणं वा जपो नारायणनामप्रणवतन्मन्त्राद्यावृत्तिः । एतेषां पापशोषणद्वारा मोक्षहेतुत्वं, ध्यानज्ञानयोस्तु साक्षाद्ब्रह्मस्वरूपप्राप्तिहेतुत्वम्; अतः सर्वेषामेषामनुष्ठानं कार्यम् । ननु यद्यग्निहोत्रादि साधुकृत्या विद्योत्पत्यर्था तदन्या च, पूर्वकृता साधुकृत्या विद्याप्रारम्भे सति विद्यया विनष्टा तर्हि

'सुहृदः साधुकृत्याम्' (शाट्यायनशाखिनां वचनम्) इत्यस्य को विषय इत्याशङ्क्याह-

## अतोऽन्यापि ह्येकेषामुभयोः ॥४-१-१७॥

अतो विद्यानिष्पत्त्यर्थाग्निहोत्रादिसाधुकृत्याया अन्या प्रबलकर्मान्तरप्रतिबद्धफला साधुकृत्या भवति । सा च विद्यानुगुणान्नारोग्यचित्तशुद्ध्यादिजननयोग्यतया विद्यानुगुणफलत्वात् विद्ययाप्यविनष्टा अपि समुच्चये तेन समुच्चिता उभयोर्विद्याधिगमात्पूर्वोत्तरकालयोः कृता श्रीहरितदीयजनातिद्रोहरूपा विद्ययाप्यविनष्टा तयाऽनारब्धफला अत्यधिकरपापापरपर्यायभूता या चासाधुकृत्या वर्तते तद्विषयमेकेषां शाट्यायनशाखिनां वचनं

'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां दुर्हृदः पापकृत्याम्'

(शाट्यायनशाखिनां वचनम्) इति ।

## यदेव विद्ययेति हि ॥४-१-१८॥

'यदेव विद्यया करोति' (छां. ६-१४-२)

इत्यत्रोद्गीथविद्यया सह कृतस्याग्निहोत्रादिशुभकर्मण इतरकर्मफलेनाप्रतिबंधकतया वीर्यवत्तरत्वोक्तेः प्रबलकर्मान्तरेण तदितरकर्मणा फलप्रतिबन्धसद्भावोऽवगम्यते । अतो विद्यानुगुणकर्मणां फलप्रतिबन्धोच्छेदायाप्यग्निहोत्रादि-कमनुष्ठेयमिति भावः ।

इतरक्षपणाधिकरणम् ॥४-१-१२॥

## भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥४-१-१९॥

इह विद्यावतामधिकारपदे स्थितानां वसिष्ठानामधिकारे समाप्ते सति मुक्तिफलमस्तीतरथा वेति संशये यावदधिकारं प्रारब्धकर्मभोगाय प्रयोजनवशाद्बहुजन्म स्वीकारे पूर्वार्जितविद्यालोपः स्यात्, पूर्वार्जितविद्यायां च लुप्तायां सत्यां यत्कर्म क्रियते तदपि फलभोगहेतुर्भवति, अतो जन्मपरंपरायाः संभवान्न तेषां मुक्तिरिति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः -

तु शब्दः पूर्वपक्षं व्यावर्तयति। इतरे आरब्धफले पुण्यपापे कर्मणी तत्फलभोगेन क्षपयित्वा अथ तत्फलभोगसमाप्त्यनन्तरं ब्रह्मविद्यावान्पुरुषः ब्रह्म संपद्यते प्राप्नोति। ते चारब्धे पुण्यपापे एकशरीरे भोग्यफले स्यातां चेत्तर्हि तु तच्छरीरावसानेनाधिकारसमाप्तौ ब्रह्मविद्ब्रह्म संपद्यते ते चानेकशरीरभोग्यफले चेत्तर्हि त्वनेकशरीरावसानेनाधिकारसमाप्तौ सोऽधिकारी वसिष्ठादिर्ब्रह्म संपद्यते, तयोरारब्धफलयोः कर्मणोर्भोगेनैव क्षपयितत्वात्;

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' (छां. ६-१४-२)

इति भोगेन तयोः कर्मणोर्मोक्ष उक्तः।

अनेन प्रकारेणाधिकारिकवसिष्ठादीनां तयोर्देहावधिनियमाश्रवणात् यावदधिकारमवधिनियमः, तत उपलब्धब्रह्मविद्यायाः पूर्वानुष्ठितमभुक्तफलमनारब्धफलं च पुण्यपापरूपमनादिकालार्जितमसंख्यं कर्म ब्रह्मविद्यामाहात्म्याद्विनश्यति, विदुषां विद्यारम्भोत्तरकालेऽनुष्ठितं कर्म च न श्लिष्यति; तच्च न विद्यालोपहेतुः, अतस्तेषां मुक्तिरेव तत्र पुण्यरूपं सर्वं विदुषां सुहृदो गृह्णन्ति पापं च द्विषन्त इति निर्णयः।

आधिकारिकाणां वसिष्ठानां तु सुषुप्तिव्यवधानवन्मरणव्यवधानं न विद्यालोपहेतुरिति सिद्धम्। प्रत्यक्षपुरुषोत्तमानन्योपासकानामाधिकारिकाणां तु पुरुषोत्तमेच्छैव नियामिका नतु प्रारब्धकर्मफलभोगनियामकः पुरषोत्तमेच्छाया नियामकाभावादित्यपि पक्षान्तरनिर्णयः।

इति
श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते
व्यासाऽभिप्रायबोधके द्वैपानीयशारीरकसूत्रभाष्यरत्ने
चतुर्थाध्यायस्य प्रथमपादः समाप्तः ॥१॥

श्रीसहजानन्दस्वामिने नमो नमः

## चतुर्थाध्याये द्वितीयपादः

वागधिकरणम् ॥४-२-१॥

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥४-२-१॥

### अत एव च सर्वाण्यनु ॥४-२-२॥

पूर्वमुपासकस्योपासनव्यवस्थानादिकमुक्तम्। इह पादेऽस्य शरीरादुत्क्रान्तिर्निरूप्यते।

'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा. ६-८-६)

इति श्रुतौ गच्छतो जीवस्य वागादीनां मनसि लयोऽवगम्यते। लयोऽयमुपपन्नो नवेति संशयः। किं प्राप्तं कार्यस्य ह्युपादाने लयः, एतन्न्यायस्य मृद्घटादौ व्याप्तिदर्शनात् वागादीनां प्रधानमुपादानं न मनः। अतः अस्मिन्नेव तेषां लयो युक्त इति पूर्वपक्षे प्राप्तेऽभिधीयते-

'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यत' इतीन्द्रियैर्मनसि संपद्यमानैरिति शब्दाद्वचनादुत्क्रान्तौ मनसः प्रागेव वागादीनामुपरमदर्शनाच्च वाङ्मनसि प्रथमं संपद्यते; अतएव तदनु सर्वाणिन्द्रियाणी च मनसि संपद्यन्ते।

यदुक्तमुपादान एव लय इति तत्र स्वरूपलयस्यैवोपादानापेक्षा, वागादीनां मनसि न स्वरूपलय उच्यते, किन्तु वृत्तिलयः। यथा जलमध्ये क्षिप्तस्याङ्गारस्य प्रकाशादिवृत्तिलयः तथानुपादानेऽपि मनसि वागादीनां वृत्तिलयो युक्त एव। वृत्तिमतो वागादेर्लयश्रवणेन वृत्तिलयो लक्ष्यते, वृत्तिवृत्तिमतोरभेदोपचारात्।

मनोऽधिकरणम् ॥४-२-२॥

### तन्मनः प्राण उत्तरात् ॥४-२-३॥

मनः प्राण इति वागादिसर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः श्रूयमाणः कीदृश इति संशयः। वागादीनामनुपादाने मनसि वृत्तिलयोऽस्तु, मनसस्तु प्राणे स्वरूपलय एव, तस्य प्राणोपादानकत्वात्

'अन्नमयं हि सोम्य मन आपोमयः प्राणः' (छा. ६-५-४)

इति श्रुतेरन्नमयत्वेन पार्थिवस्य मनसो जलमयत्वेनोपादाने प्राणे स्वरूपलयस्याविरोधात्तस्यप्राणे स्वरूपलय एवेति पूर्वः पक्षः। सिद्धान्तस्तु पूर्ववन्मनसोऽपि प्राणे वृत्तिलय एव। तथा सूत्रार्थेनोच्यते-तत्सर्वेन्द्रिययुक्तं मनः स्ववृत्त्यैव प्राणे संपद्यते, कुतः उत्तरात्-मनः प्राणे प्राणस्तेजसीत्युत्तरवाक्ये मनः प्रभृतीनामुत्तरोत्तरेषु संपत्तिश्रवणात्।

तथा सति न स्वरूपलयः प्राणस्य मुख्योपादानत्वाभावात् मनसस्तत्र स्वरूपलयानुत्पत्तेः, प्राणे मनसो वृत्तिलय एव न्याय्यः ।

अध्यक्षाधिकरणम् ॥४-२-३॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥४-२-४॥

पूर्वत्र सर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः प्रतिपादितः । इह तस्य प्राणस्य कुत्र लय इति संशयः । किं प्राप्तं प्राणस्तेजसीति श्रुतेः प्राणस्य तेजसि लय इति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः- स प्राणः अध्यक्षे जीवे संपद्यते न तस्य तेजसि लयः, कुतः तदुपगमादिभ्यः-

'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति' (छा. ६-३-३८)

इत्यादिश्रुतिषु तस्य जीवोपगमनादि श्रवणात् । एवं च सति प्राप्तं प्राणस्तेजसीति श्रुतिविरोधं परिहरति-

## भूतेषु तच्छ्रुतेः ॥४-२-५॥

प्राणस्तेजसीत्यत्र भूतान्तरसंसृष्टतेजोऽभिधानश्रवणात् प्राणो जीवेन सह भूतेषु संयुज्यत इति न विरोधः ।

## नैकस्मिन्दर्शयतो हि ॥४-२-६॥

न तेजोमात्रे प्राणलयः त्रिवृत्करणश्रुतिः तदन्तरप्रतिपत्तौ रंहतीति सूत्रं च हि यतस्तेजः प्रभृतीनां भूतान्तरसंसृष्टिं दर्शयतः । अतो भूतेषु जीवेन सह प्राणः संपद्यत इति न श्रुतिविरोधः ।

आसृत्यपक्रमाधिकरणम् ॥४-२-४॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥४-२-७॥

इह निरूप्यमाणोत्क्रान्तिरर्चिरादिगत्युपक्रमात् प्राग्विद्वदविदुषोस्समाना उत भिन्नेति संशयः। किं तावत्प्राप्तं संसारफलस्य मोक्षफलस्य चातिवैषम्यादज्ञानिज्ञानिनोरहसश्येतेवोत्क्रान्तिरित्येवं प्राप्ते ब्रूमः-

आसृत्युपक्रमात्-अर्चिरादिमार्गोपक्रमात् प्राग्विद्वदविदुषोस्समानैवोत्क्रान्तिः, ज्ञानिनस्तु अनुपोष्य च-उपासनारम्भपरिकररूपं सूक्ष्मशरीरेन्द्रियादिसंबन्धमदग्ध्वैव मूर्द्धन्यनाड्या निष्क्रान्तिरमृतत्वं च नेतरस्येति वैषम्यम् ।

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका,
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवन्ति' (कठ. २-३-१६)

इति श्रुतेरतः प्रागुत्क्रान्तिः समानैव ।

संसारव्यपदेशाधिकरणम् ॥४-२-५॥

## तदाऽपीतेः संसारव्यपदेशात् ॥४-२-८॥

पूर्वमुपपादिता मूर्धन्यनाड्या विदुष उत्क्रान्तिस्ततोऽर्चिरादिगतिरिरिति, इह देहादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरूपपद्यते नवेति सन्देहः।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः,

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' (बृह.६-४-७ / कठ.२-३-१४)

इति देहपातानन्तरमेवामृतत्वं श्रुयते,

तेऽर्चिषमभिसंभवन्ति (छा. ५-१०-१)

इत्यर्चिरादिगतिश्च श्रूयते। एवमुभयश्रवणात् अयं सन्देहः। तत्र ब्रह्मणि लीनानां वागादीनां पुनरुत्पादनासंभवान्मुक्तस्यगत्यनुपपत्तेरर्चिरादिगतिर्न मुक्तात्मनामिति प्राप्ते सिद्धान्तः :- तस्योत्क्रान्तस्य विद्यावतः आपीतेरर्चिरादिना ब्रह्मप्राप्तेः प्राक् संसारव्यपदेशात्- शरीरसंबन्धव्यपदेशान्न संसारापगमः। अमृतत्ववचनमासन्नामृतत्वाभिप्रायम्; अत उत्क्रान्तस्यार्चिरादिगतिरूपपन्ना। यदुक्तं वागादिविलयात्तस्य गत्यनुपपत्तिरिति तत्राह-

## सूक्ष्मं प्रमाणश्च तथोपलब्धेः ॥४-२-९॥

शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते; अन्यथा चन्द्रसंवादाद्यनुपपत्तिः। कथमिदमवगम्यते ? प्रमाणेन तथोपलब्धेः, श्रूयते हि पर्यङ्कविद्यायां देवयाने पथि विदुषः चन्द्रमसा संवादः

'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौषी. १-९)

इत्युपक्रम्य

'एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमाः (कौषी. १-११),

तं यः प्रत्याहतमतिसृजते अथ य एतं न प्रत्याहतमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान्वा पुरुषो वा अन्यो वै तेषु स्थानेषु प्रत्याजायते (कौषी. १-१२)

यथाकर्म यथाविद्यं तमागतं पृच्छति कोऽसीति प्रतिब्रूयात्' (कौषी. १-१३)

इत्यादि। अतः शरीरादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरूपपन्ना।

## नोपमर्देनातः ॥४-२-१०॥

अत उक्तन्यायादथ मर्त्योऽमृतो भवति' इत्यमृतत्ववचनं स्थूलदेहसंबन्धोपमर्देन तदानीमेवामृतत्वं न वदति किन्तु सूक्ष्मदेहेनार्चिरादिगत्यनन्तरं तत्संबन्धत्यागेन वै।

## अस्यैव चोपपत्तेरूष्मा ॥४-२-११॥

अस्य सूक्ष्मशरीरस्य स्थूलदेहे विद्यमानत्वोपपत्तेश्च जीवे ह्युत्क्रान्ते सति सूक्ष्मशरीरगुणस्योष्मणः स्थूलदेहेऽनुपलब्धिः, अत उत्क्रामतो विदुषोऽपि स्थूलदेहे ऊष्मा नोपलभ्यते एव । जीवेन सह सूक्ष्मशरीरगमनाभावे तु स्थूलदेहेऽप्युष्मोपलब्धिर्भवेत् तत्रोष्मलब्ध्यभावात् विद्वान् सूक्ष्मशरीरेणोत्क्रामति ।

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥४-२-१२॥

बृहदारण्यके

'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैव आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृह. ६-४-२)

इत्यादिवाक्यैरविदुषोऽपि उत्क्रान्त्यादिप्रकारमभिधायेति तु कामयमान इत्यविद्वद्विषयं वचनं परिसमाप्य

'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृह. ६-४-६)

इति विदुषः प्राणोत्क्रान्तिप्रतिषेधादत्रैव ब्रह्मप्राप्तिरिति चेन्न,

विदुषः शरीरादुत्क्रममाणस्यार्चिरादिगमनाय प्रस्थितस्य प्राणास्तस्माच्छरीराज्जीवान्न विश्लिष्यन्ते इति ह्युच्यते ।

'न तस्य प्राणा उत्क्रामन्ती 'त्यस्यार्थ एकेषां माध्यन्दिनानां शाखायां स्पष्टोऽभिधीयते-

'योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति' (बृह. ६-४-६) इति ।

## स्मर्यते च ॥४-२-१३॥

विदुषो मूर्द्धन्यनाड्या गमनं स्मर्यते

'ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम्,
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्' । (याज्ञ.स्मृ.(यतिधर्म)४-१६७) इति

अतोऽर्चिरादिगतिरुपपद्यते विदुष उत्क्रान्तस्य ।

केचिदिहैवाक्षरब्रह्माख्यस्थानस्थितपुरुषोत्तममूर्तिं सततं पश्यतामुपासीनानां शरीरपात एव मोक्ष इत्यर्चिरादिगत्यनियमतामाहुः । एतत्प्रतिपादिकापीयं श्रुतिः

'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती' ति; तथाऽन्यत्रापि श्रूयते

'तस्य प्राणा नोत्क्रामन्ति तत्रैव संविलीयन्ते विमुक्तश्च विमुच्यते' इति ।

वागादिलयाधिकरणम् ॥४-२-६॥

## तानि परे तथा ह्याह ॥४-२-१४॥

## अविभागो वचनात् ॥४-२-१५॥

पूर्वत्र प्राणेन्द्रियसहितस्य जीवस्य तेज उपलक्षितेषु भूतेषु लय उपपादितः । इह

'तेजः परस्यां देवतायाम्' (छा. ६-८-६)

इति श्रूयमाणो यो भूतान्तरसृष्टस्य प्राणेन्द्रियसहितजीवयुक्तस्य तेजसः परस्यां देवतायां लयः स किं स्वरूपलयः उताविभागापत्तिमात्रमिति संशयः । उपादानकारणत्वात्परदेवतायां तस्य स्वरूपलय इत्येव युक्तमिति पूर्वपक्षे प्राप्ते सिद्धान्तयति-अविभागोऽपृथग्भावापत्तिमात्रमिति; तथाहि तदेवोपपादयति विदुष उत्क्रान्तिवेलायां विद्यासामर्थ्यादाविर्भूते परे परदेवतापरपर्यायभुते परब्रह्मणि तानि जीवपरिष्वक्तानि वागादीन्द्रियाणि भूतानि च पृथग्व्यवहारानर्हतया संपद्यन्ते नतु स्वरूपेण लीयन्ते इत्याह श्रुतिः 'तेजः परस्यां देवतायामि'ति ।

नन्वस्या संपत्तिशब्दानुपलम्भात्कथमेवं निर्णीयते इति चेत्तत्र हेतुमाह-वचनादिति;

'तेजः परस्यां देवतायामि'त्युत्तरवाक्येऽपि

'वाङ्मनसि संपद्यत' (छा. ६-८-६)

इति पूर्ववाक्यात्संपत्तिशब्दानुषङ्गात् संसर्गमात्र वाचकस्यैकस्य संपत्तिशब्दस्यार्थान्तरत्वे प्रमाणाभावाच्चैवं निर्णयः । एवं च सति सुषुप्तिप्रलययोर्यथान्तर्यामिणा सह संपत्त्या सुखदुःखोपभोगापगमविश्रामस्तथोत्क्रान्तिवेलायामपि मनःप्रभृतिवत्तस्य वृत्तिलयरूपविश्राम एवेति तात्पर्यम् ।

तदोकोऽधिकरणम् ॥४-२-७॥

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥४-२-१६॥

पूर्वत्र विद्वदविदुषोरर्चिरादिगत्युपक्रमपर्यन्तमुत्क्रान्तिः समानेत्युक्तम्;

पूर्वत्र विद्वदविदुषोरर्चिरादिगत्युपक्रमपर्यन्तमुत्क्रान्तिः समानेत्युक्तम्; 'तेजः परस्यां देवतायामि'ति भूतैः सह निष्क्रमणवेलायामुभयोर्विशेषोऽस्ति नवेति विचार्यते । 'तेजः परस्यां देवतायामि'ति भूतैः सह निष्क्रमणवेलायामुभयोर्विशेषोऽस्ति नवेति विचार्यते । परदेवे परे ब्रह्मणि महाकाशरूपे विद्वानविद्वांश्च विलीयाविभागेन क्षणं विश्रम्य तिष्ठतीति समभिहतम्; अत समानैवोत्क्रन्तिस्तयोर्हृत्प्रद्योतनादेः समस्तश्रवणात्

'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य' (बृह. ६-४-२) इति श्रूयते,

अतः समानत्वादुत्क्रान्तेस्तयोर्निष्क्रमणसमये ह्यविशेष इति पूर्वपक्षे प्राप्ते विशेषोऽस्तीति सिद्धान्त उच्यते-तथाहि हार्द्दाख्यस्य नारायणस्याराधनरूपविद्यासामर्थ्यात्तच्छेष-गत्यनुस्मृतियोगाच्च विद्याङ्गगत्यनुसंधानयोगाच्च हार्द्दानुगृहीतः प्रीतेन तेन हार्देन हृदयगतेन सर्वानुग्राहकेण स्वस्वरूपावरणमलध्वंसनविदग्धयानुग्रहदृष्ट्या निरीक्षितः, अतस्तदोकोऽग्रज्वलनं तस्योपासकस्य ओको हृदयम् अग्रे ज्वलनं प्रकाशनं यस्य तथाभूतं भवति।

एवं तेन हृग्गोचरेण नारायणेन प्रकाशितद्वारः प्रद्योतितनाडीमार्गो विद्वान् शताधिकया सुषुम्णाख्ययामूर्द्धन्यया नाड्या निष्क्रामति; न तथा नारायणानुग्रहशून्यो ह्यविद्वान् किं त्वल्पप्रकाशयुताभिरितरनाडीभिरेव। तथा च श्रुतिः

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका, तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्अन्या उत्क्रमणे भवन्ति' (कठ. २-३-१६)

इति स एष विदुष उत्क्रमणे विशेषः। एतदुक्तं भवति

'अन्तः प्रविष्टः शास्ता जनानाम्' (तै.आर. ३-११-१,२),

'एष मे आत्मान्तर्हृदयः' (छा. ३-१४-३) इत्यादिश्रुतिषु

'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिः' (गीता. १५-१५) इति

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (गीता. १८-६१)

इत्यादि स्मृतिषु च सकलजनहृदयगतो हि नारायणोऽवगम्यते। स्वेन्द्रियवृत्तिभिस्सह हृदये सुषुप्तो जीवो यत्सुखलेशमनुभवति स खलु हृदयगतो हार्दः परब्रह्मपरममङ्गलस्वरूपः राधालक्ष्मीपतिर्नारायणः परमात्मा स्वाज्ञारूपश्रुतिचोदितेषु कर्मस्वग्निहोत्रादिषु स्वाराधानरूपेषु नियतं निर्मुक्तसकलाविहितकर्मलेपं स्वार्पितसकलकर्मफलं स्वायत्तचित्तं स्वज्ञानामृतपरिपूर्णं निरस्तकाम्यफलं विवेकादिसाधनसंपन्नं स्वभक्तिमात्रैकनिरतं स्वप्रसादाकाङ्क्षिणं विद्यावन्तं साधकमवलोक्य शरीरपरित्यागसमये तद्विषयसंपन्नप्रसादस्तस्मिन्संसारमलकलंकाप-कर्षिणीमनुग्रहदृष्टिं निदधाति। तदनुग्रहविशेषेणासौ विनष्टसकलसांसारिकमलस्तत्प्रद्योतित-मूर्द्धन्यनाड्यनिर्गत्यार्चिरादिना तदीयं सर्वोत्कृष्टमप्राकृतं निरतिशयानन्दं ब्रह्मपुराख्यं पदं प्राप्य तत्समानधर्मा पार्षदो भूत्वा तत्परिचर्यायां नित्यं तिष्ठति। तस्मादविदुषो विदुषश्च गतिवैषम्यमस्तीति युक्तमेव।

रश्म्यधिकरणम् ॥४-२-८॥

## रश्म्यनुसारी ॥४-२-१७॥

पूर्वत्र साधकस्य हृदयगतनारायणानुगृहीतस्य मूर्द्धन्यनाड्या निर्गम उक्तः। निर्गतस्य तदूर्ध्वगमनं निशि दिवा चेत्युभयत्र संभवति नवेति संशयः। किं तावत्प्राप्तं

'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेवरश्मिभिरूर्ध्वमाक्रमते' (छा. ८-६-५)

इति समुत्क्रान्तस्य भानुरश्मिसंबन्धेनोर्ध्वदेशाक्रमणावगम्यते। रश्मिसंबन्धस्तु दिवैव संभवति न तु रात्राविति प्राप्ते ब्रूमः-

उत्क्रान्तो विद्वान् रश्मिसंबन्धादेवोर्ध्वं गच्छतीति सत्यं तत्तु दिवा च रात्रौ च संभवति। निदाघेषूष्मदर्शनेन हेतुना दूरगतस्य ब्रह्माण्डस्थस्य सूर्यस्य निश्यपि रश्मिसत्वात् हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः, तस्माद्दिवा च रात्रौ च रश्म्यनुसारी गच्छत्यूर्ध्वमिति निर्णयः।

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥४-२-१८ ॥

निशि मृतस्यापि विदुषो रश्मिसंबन्धेन ब्रह्मप्राप्तिरभिहिता, सा न सम्भवति।

'दिवा च शुक्लपक्षश्च उत्तरायणमेव च, मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्'

इति निशामरणनिन्दनादिति चेन्न, संसारबन्धस्य यावद्विद्या न स्यात्तावद्भावित्वाद्विद्यया प्रारब्धेतरेषु बन्धहेतुषु कर्मसु नाशितेष्वनुवर्तमानस्य प्रारब्धसंबन्धस्यापि यादद्देहभावित्वात् यावच्चरमदेहावसानं तावद्भावित्वात् चरमदेहावसाने प्रारब्धेऽपि नष्टे सति ब्रह्मप्राप्तौ पुनर्विघ्नहेत्वभावात्। तथा दर्शयति श्रुतिः

'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छां.६-१४-२)

इति निशादिनिंदा त्वितराज्ञपुरुषविषया, अतो निश्यपि मृतस्य विदुषो ब्रह्मप्राप्तौ न विरोधः।

## अतश्चायनेऽपि दक्षिणे ॥४-२-१९॥

अत एवोक्तात्बन्धवहेत्वभावादेव दक्षिणायने मृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव।

## योगिनः प्रतिस्मर्यते स्मार्ते चैते ॥४-२-२०॥

ननु विदुष एव मुमुर्षून् प्रति पुनरावृत्यपुनरावृत्तिहेतुत्वेन कालविशेषः स्मर्यते

'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ (गीता. ८-२३)
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयात्रा गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ (गीता. ८-२४)
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ (गीता-८-२५)
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।

एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ (गीता. ८-२६) इति

तस्मादविद्वद्विषया निशा दक्षिणायनादिनिन्देति यदुक्तं तदयुक्तमिति शङ्क्यते चेत्तत्रोत्तरयति- विदुषामर्चिरादिगतिः तद्विपरीतान्येषामिति योगिनो योगयुक्तान् प्रति योगाङ्गतया प्रतिदिनं स्मार्ते स्मृतिविषयभूते स्मर्तव्ये देवयानपितृयानाख्ये एते गती इति स्मर्यते यत्र काले त्वनावृत्तिमित्यादिना, नतु विदुषः प्रतिमरणकालविशेषः स्मर्यते;

'नैते सृती पार्थ जानन्योगी मुह्यति कश्चन
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुने' (गीता. ८-२७) ति उपसंहारात्

'अग्निर्ज्योतिर्धूमो रात्री'ति

श्लोकयोर्देवयानपितृयानगतिप्रत्यभिज्ञानाच्च ।

यत्र काले त्विति कालशब्दस्त्वातिवाहिकगणस्य कालाभिमानिदेवतानां च स्थान-भूमार्गोपलक्षकः । अतः सर्वथा विदुषां ब्रह्मप्राप्तौ निशादक्षिणायनकृष्णपक्षनिषेधो नास्त्येव । यदा देहापगमस्तदानीमेव तत्प्राप्तिरिति सिद्धम् ।

इति
श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
चतुर्थाध्यायस्य द्वितीयः पादः ॥२॥



श्रीसहजानन्दस्वामिने नमो नमः

## चतुर्थाध्याये तृतीयपादः

### अर्चिराद्यधिकरणम् ॥४-३-१॥

## अर्चिरादिना तत्प्रथितेः ॥४-३-१॥

पूर्वत्रोपासकस्योपासनसामर्थ्याद्धृदयाविर्भूतेन नारायणेन प्रकाशितनाडीमार्गस्य सुषुम्णाख्यया मूर्द्धन्यया नाड्या देहादुत्क्रमणमभिहितम्। एवंभूतस्य विदुषः परब्रह्मप्राप्तिरर्चिरादिना मार्गेणैव उतान्यथापि संभवतीति, प्रथममिह विचिन्त्यते तथाह्येकत्र

'यत्रासौ केशान्तो विवर्तते व्यपोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठति भुव इति वायौ, स्वरित्यादित्ये, मह इति ब्रह्मणि, आप्नोति स्वाराज्यम्' (तै. शिक्षा.अनु. ६)

इति ब्रह्मप्राप्तेरर्चिरादिगतिमन्तरेणाप्युपपत्तिरवगम्यते, तस्मात् ब्रह्मप्राप्तौ नार्चिरादिनियम इति प्राप्तेऽभिधीयते–विद्वानर्चिरादिनैव ब्रह्म प्राप्नोति। कुतः, तत्प्रथितेः, पञ्चाग्निविद्यादिषु

'तेऽर्चिषमभिसंभवन्ति' (छा. ५-१०-१)

इत्यादिनोक्ताया अर्चिरादिगतेर्ब्रह्मप्रापकत्वेन प्रसिद्धत्वात्; भूरित्यग्नावित्यादिषु न ब्रह्मप्राप्तिमार्ग उच्यते, किन्तु तत्तद्विभूतिप्राप्तिरेव; अतस्तदितरोपासकानां पुण्यकर्मणां च नार्चिरादिगतिः न परब्रह्मप्राप्तिश्चेति निर्णयः। तथाहि स्मर्यते–

'देवान्देवयजो यान्ति पितॄन्यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्' ॥ (गीता. ९-२५) इति.
'त्रैलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम्। (भा. ११-२४-१३)
योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ॥
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः'। (भा. ११-२४-१४) इति,

### वाय्वधिकरणम् ॥४-३-२॥

## वायुशब्दादविशेषाभ्याम् ॥४-३-२॥

अत्र श्रुतस्यार्चिरादिक्रमस्य मध्ये श्रुत्यन्तरसिद्धक्रमोऽत्र निवेशनीयः, अथवा अयमेव क्रम इति सन्दिह्यते। ते

'अर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाण पक्षाद्यान् षडुदङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' (छा. ४-१५-५)

इत्यर्चिरादिक्रमः छान्दोग्यसिद्धः। बृहदारण्यके

'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन ऊर्ध्व आक्रमते स आदित्यमागच्छति' (बृ. ८-१०-१)

इति ब्रह्मपथे वायुः श्रूयते स तत्र पठितयोः संवत्सरादित्ययोर्मध्ये निवेश्यो नवेति संशये न निवेश्योऽश्रवणात् इति प्राप्ते ब्रूमः - गुणोपसंहारन्यायेन तत्र संवत्सरादूर्ध्वमादित्यात्पूर्वं वायुर्निवेशः, बृहदारण्यक एवान्यत्र मासेभ्यो देवलोकं देवलोकादादित्यमि'ति पठितेऽर्चिरादिक्रमे छान्दोग्यश्रुतित उपसंहार्यान्मासाधिककालरूपत्वेन मासेभ्य उपरि निवेशनीयात् संवत्सरादुपरि देवलोकः श्रुतः सोऽपि वायुरेव; देवलोकशब्दो देवानां लोक इति व्युत्पत्तेरविशेषेण वायुवाचकोऽस्ति । वायुशब्दश्च तस्यैव वाचक इत्यविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एवाभिहित इत्यब्दादूर्ध्वमादित्यात्पूर्वं वायुं निवेशयेत् । वायुर्देवानामासनभूत इति श्रूयते

'योऽयं पवन एष देवानां गृहा' (जैमिनीयोपनिषत् ३-१-१,२) इति ।

तडिदधिकरणम् ॥४-३-३॥

## तडितोऽधि वरुणः संबन्धात् ॥४-३-३॥

कौषीतकिनामुपनिषदि श्रूयते

'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' (कौषी.१-२१) इति।

तत्राग्निलोकशब्दोक्तस्यार्चिषः प्राथम्यमविरुद्धं श्रुत्यन्तरसिद्धश्रौतक्रमेणात्रत्यपाठक्रमबाधात् संवत्सरादूर्ध्वं वायुस्तत ऊर्ध्वमादित्यश्च निवेश्यः । अत्र वरुणादयोऽपि श्रुताः तेऽर्चिरादिमार्गे निवेशयितुं शक्या उत न शक्या इति संशये नियामकाभावादशक्यसन्निवेशा इति प्राप्ते ब्रूमः - नियामकवाक्याभावेऽपि गुणोपसंहारन्यायेन यत्रार्चिराद्यध्वन्यश्रुतानामपि वरुणादिनां निवेशः कार्यः तत्र विद्युल्लोकस्योपरि वरुणलोकस्य संबन्धवशात् व्यवस्था । विद्युत्पूर्वकवृष्टिगतनीरस्य वरुणोऽधिपतिः प्रसिद्धः इति विद्युद्वरुणयोः संबन्धः, तदनन्तरमिन्द्रप्रजापतिलोको परिशेषावित्यविरोधः ।

आतिवाहिकाधिकरणम् ॥४-३-४॥

## आतिवाहिकास्तल्लिङ्गात् ॥४-३-४॥

किमर्चिरादयो मार्गचिह्नभूताः स्थानभेदा उत विदुषां गमयितारो देवताविशेषा इति सन्देहः। किं प्राप्तं स्थानभेदा अर्चिरादयः, तच्चिह्नदर्शनात् । लोके हि गेहान्निर्गत्य चतुष्पथं गत्वा ततो नदीं गन्तव्येति व्यवहारो दृश्यते तद्वदर्चिरादयोऽपि स्थानभेदा इति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते-आतिवाहिकाः ज्ञानिहरिभक्तानामतिवाहे स्वधामप्रापणे नारायणेन नियुक्ताः

अर्चिरादिमार्गाभिमानिनो ज्ञानिभक्तानां गमयितारो देवताविशेषाः,
कुतः इदमवगम्यते तल्लिङ्गात्-तेषामातिवाहिकानां लिङ्गात्-श्रुतिस्मृतिषु ज्ञापनात्। तथाहि
'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' (छा. ४-१५-५) इति,
'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा' (मुण्ड. १-२-११) इति,

'मेरोः शृङ्गेऽथ विजने शुचिः कृतदृढासनः।
दध्यौ स्वहृदयाम्भोजे स्वेष्टदेवं रमापतिम्॥ (वा. मा. ७ - ३२)
त्यक्त्वा देववपुः सोऽथ योगधारणया मुनिः।
ततः सूक्ष्मशरीरेण प्राप भास्करमण्डलम्।
यदाहुर्नैष्ठिकानां च मुक्तिद्वारं हि योगिनाम्॥ (वा. मा. ७ - ३३)
तत्तेजोदग्धसूक्ष्माङ्गः सच्चिद्रूपोऽतिनिर्मलः।
स बभूव महाभागः संक्षीणाशेषवासनः॥ (वा. मा. ७ - ३४)
ततस्तन्मण्डलगतैरातिवाहिकदैवतैः।
स निन्ये वैष्णवं धाम श्वेतद्विपाख्यमद्भुतम्। (वा. मा. ७ - ३५)
स ह द्वीपो भुविस्थोऽपि भवत्यप्राकृतो मुने।
हरिभक्तजनावासः प्राप्य एकान्तभक्तिभिः॥ (वा. मा. ७ - ३६)
स गोलोकब्रह्मपुरवैकुण्ठानां च सुव्रत॥
द्वारभूतोऽस्ति भक्तानां तल्लिप्सूनां महात्मनाम्। (वा. मा. ७ - ३७)
यस्य यद्धाम्न इच्छा स्याद्व्रजतस्तं तदेव हि।
प्रापयन्ति श्वेतमुक्ता मुने प्रागुक्तलक्षणाः॥' (वा. मा. ७ -३८)

इत्यादिश्रुतिस्मृतिष्वेकेन विद्युत्पुरुषगमयितृत्वलिङ्गेनान्यान्येषामर्चिरादिमार्गाभिमानिनामातिवाहिकसंज्ञदेवताविशेषाणामपि गमयितृत्वमेव संबंध्यते इति निश्चय उपपन्नः।
ननु विद्युत्पुरुषस्यैव ब्रह्मगमयितृत्वश्रवणात्ततः परेषां वरुणादीनां तन्न युक्तमिति शङ्क्यते च तत्रोत्तरमाह-

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥४-३-५॥

वैद्युतेन-विद्युल्लोकमागतेनामानवेनातिवाहिकगणस्थेन देवताविशेषेणैव ततो विद्युतल्लोकादूर्ध्वं नीयमानाः कृष्णोपासकाः परब्रह्म प्राप्नुवन्ति, कुतः तच्छ्रुतेः तस्मिन्नर्थे

'तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति' (छा. ४-१५-५)

इति श्रुतेः वरुणादीनां तु तदनुग्राहकत्वेन गमयितृत्वमिति न विरोधः। स एतान् ब्रह्म गमयतीत्यत्र शङ्कयन्नाह-

कार्याधिकरणम् ॥४-३-५॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥४-३-६॥

किममानवः पुरुषोऽर्चिरादिमार्गेण कार्यभूतहिरण्यगर्भाख्यब्रह्मोपासीनान् तद्गमयति उत परब्रह्मोपासीनान् तन्नयति अथवा शुद्धजीवात्मस्वरूपं निरवयवं ब्रह्मरूपत्वेन तदुपासकान् गमयतीति सन्देह पूर्वः पक्षः -कार्यभूतं हिरण्यगर्भाख्यं ब्रह्म तदुपासकान् गमयति; कुतः अस्य गत्युपपत्तेः-अस्य हिरण्यर्भाख्यब्रह्मोपासकस्यैवार्चिरादिमार्गे गतिरुपपद्यते नतु सर्वगतस्य परब्रह्मणः प्राप्तये तदुपासकानां तत्र गतिरुपपद्यते, नित्यं सर्वत्र तत्प्राप्तेः, अतोऽविद्यानिवृत्तिरेव परब्रह्मोपासकैः कार्या । उत परब्रह्मोपासीनान् तन्नयतीत्यपरपक्षे स एनान् ब्रह्म गमयतीति परब्रह्मप्राप्तिरेवोचितार्चिरादिमार्गेण ब्रह्मशब्दस्य परब्रह्मण्येव प्रधानत्वात् । तथाहि अविद्यानिवृत्तेः फलानुसंधानहीनाग्निहोत्रादियज्ञकर्मापेक्षावच्छ्रवणमननाद्यपेक्षावच्चोपासकानां परब्रह्मणः सर्वोत्कृष्टत्वदर्शनाय गतिश्रुत्यभिहितस्य देशविशेषस्य दर्शनापेक्षा विद्यते इति निश्चयः । तृतीयपक्षो यथार्थनिर्णयश्च सिद्धान्तेनोच्यते । परब्रह्मोपासकानन्यानपि अर्चिरादिमार्गे नयति

'तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' (छा. ५-१०-१)

इति पञ्चाग्निविदां परब्रह्मोपासीनानां चाभेदेनार्चिरादिगतिश्रुतेः पञ्चाग्निविद एव हि प्रकृतियुक्तशुद्धजीवात्मस्वरूपभूतब्रह्मविदः । ते च तदेव प्राप्य न पुनरावर्तते परब्रह्मोपासीनाश्च यथावस्थितं परं ब्रह्म प्राप्य न पुनर्निवर्तन्ते इत्थमुक्तानुभयविधानभेदेनोपादाय

'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्ति'

इत्यर्चिरादिगतिश्रुतेः

'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा.४-१५-५)

इत्यपुनरावृत्तिश्रुतेश्चापुनरावृत्तिगतानामुभयविधानां तेषामुक्तप्रकारेण प्राप्यभेदो निश्चीयते । यथार्थतया सूत्रार्थो वर्ण्यते - कार्यं हिरण्यगर्भाख्यं ब्रह्म तदुपासीनानातिवाहिकदेवगणो गमयतीति बादरिराचार्यो मन्यते । अस्य तत्रैव गत्युपपत्तेः परब्रह्मोपासकानां तु न तत्प्राप्तये अर्चिरादिगतिरुपपद्यते परब्रह्मणः सर्वगतत्वात् ।

## विशेषितत्वाच्च ॥४-३-७॥

'पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति' (छा. ४-१५-५)

इतिश्रुत्यन्तरे लोकानिति बहुवचनेन निजलोकसहितहिरण्यगर्भाख्यवैराजब्रह्मणो ग्रहणात् प्रजापतेः सभां वेश्म प्रपद्य इत्यत्राप्यर्चिरादिना तत्समीपगमनेन प्राप्यलोकस्य विशेषितत्वाच्च हिरण्यगर्भाख्यं वैराजपदमेव सगणो गमयति । हिरण्यगर्भशब्दस्य वैराजवाचकत्वे श्रुतिः -

'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' (कृ.यजु.तै. का.४ प्र.१-८) इति।

## सामीप्यात्तु तद्व्यपदेशः ॥४-३-८॥

'यो ब्रह्माणं विदधाति' (श्वेता. ६-१८)

इति हिरण्यगर्भब्रह्मणि पुंल्लिङ्गनिर्देशात् तत्राघटमानः

'स एनान् ब्रह्म गमयति' (छा. ४-१५-६)

इति नपुंसकव्यपदेशस्तु परब्रह्मावतारत्वेन तत्सामीप्याद्भवति ।

'जगृहे पौरुषं रूपं भगवान् महदादिभिः' (भा. १-३-१)

इति प्रथमावतारत्वस्मरणादस्य तत् सामीप्यमवगम्यते ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥४-३-९॥

उपासकानां प्रथमं हिरण्यगर्भपदप्राप्तावपि तेषामपुनरावृत्तिश्रुतिर्न विरुध्यते;

तदेव सूत्रार्थेनाह-कार्यात्यये-हिरण्यगर्भलोकरुपकार्यात्यये तदध्यक्षेण सह-तस्य लोकस्याध्यक्षेण हिरण्यगर्भाख्यवैराजब्रह्मणा सह अतः कार्यभूततल्लोकात्परं ब्रह्मपुराख्यं परमं पदं ते गच्छन्ति, कुत इदमवगम्यते तथाभिधानात्-'ते ब्रह्मलोके तु परांतकाले परामृतात्परिमुच्यन्ति सर्वे, इति श्रुतौ तथाभिधीयते, अतो न विरोधः ।

## स्मृतेश्च ॥४-३-१०॥

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' ॥ (कुर्म पु. पूर्वभाग.१२-२६९)

इति स्मृतेरप्येवमगम्यते, अतो हिरण्यगर्भपदमर्चिरादिगणो नयति प्रथमं ततः प्रलये परंब्रह्म प्राप्यते तेन सहेति ।

## परं जैमिनीर्मुख्यत्वात् ॥४-३-११॥

परं ब्रह्म तदुपासितृनातिवाहिकदेवगणो गमयतीति जैमिनिर्मन्यते; कुतः मुख्यत्वात् -

'स एनान् ब्रह्म गमयति' (कठ. १-३-९)

इति ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् । ब्रह्मलोकानिति ब्रह्मलोकशब्दश्च निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात्तत्रैवोपपद्यते । एवं निर्णीते बहुवचनमदितिः पाशानितिवदुपयुक्तं तत्रोपत्तिमाह-

## दर्शनाच्च ॥४-३-१२॥

'सोऽध्वनः पारमाप्नोति, तद्विष्णोः परमं पदम्' (कठ. १-३-९)

इति तत्पदस्य प्राप्यत्वं दृश्यते;

'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते'

(छा. ८-१२-३ / छा. ८-३-४)

इति तत्स्वरूपप्राप्त्यनन्तरमुपासकस्य स्वस्वरूपाविर्भावश्च दृश्यते, अतश्चातिवाहिकदेवगणोऽर्चिरादिना मार्गेण परब्रह्मैव गमयतीति निर्णयः ।

## न च कार्ये प्रत्यभिसंधिः ॥४-३-१३॥

प्रजापतेः सभां वेश्म प्रपद्य इति यदुक्तं तत्रोत्तरं-कार्ये-कार्यभूते हिरण्यगर्भाख्ये वैराजब्रह्मणि नायं प्रत्यभिसंधिरनुसंधानं किन्तु परब्रह्मण्येव; कुतः

'यशोऽहं भवामि ब्राह्मणानाम्'(छा. ८-१४-१)

इति तद्वाक्यशेषे श्रीहरितदेकान्तिकव्यतिरिक्तसर्ववस्तुषु सर्वथा रागप्रहाणपूर्वकतद्विषयसर्वात्मकभावानुसंधानात्

'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकम्' (छा. ८-१३-१)

इति तत्रैवाकृतं ब्रह्मलोकमिति विशेषितत्वेन तल्लोकस्यानादिसिद्धत्वश्रवणाच्च; अत उपासकान् परब्रह्मैव गमयत्यर्चिरादिमार्गेणातिवाहिको देवगण इति जैमिनिमतम् । सांप्रतं भगवान् बादरायणः स्वमतं स्वसिद्धान्तेन ब्रवीति-

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥४-३-१४॥

स गणः केवलं कार्यभूतं हिरण्यगर्भाख्यं वैराजब्रह्मोपासितॄन्नयतीति पक्षो न संभवति, केवलं परब्रह्मोपासकान् नयत्यपि नियमो न भवति; कुतः उभयथा च दोषात् । तथाहि केवलं कार्यभूतं हिरण्यगर्भाख्यवैराजब्रह्मोपासितॄन्नयतीति पक्षे,

'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते'

(छा. ८-१२-३ / छा. ८-३-४) इति

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (कठ. १-३-९)

इत्यादि श्रुतयः,

'ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' (छा. ५-१०-१)

इति प्रदूष्येयुः । केवलं परब्रह्मोपासकान्नयतीत्यपि नियमे

'तद्य इत्थं विदुरि'ति पञ्चाग्निविद्योदितशुद्धात्मस्वरूप-प्राप्तिबोधनपरागतिश्रुतिः प्रदूष्येत् तस्मादप्रतीकालम्बनान्-अप्रतीकम् अङ्गभूतहिरण्यगर्भादिदेवतेतरन् मूर्तिमदङ्गि परब्रह्म आलम्बन्ते उपासते इति तथाभूतान् परब्रह्मोपासीनान्; पक्षान्तरे अप्रतीकं निरवयवं

प्रकृतिविनिर्मुक्तं शुद्धात्मस्वरूपमालम्बन्ते उपासते इति तथा भूतान् केवलात्मनिष्ठान्; एवमुभयविधांस्तानातिवाहिको देवगणस्तत्तदुपासकान् तत्तन्नयतीति भगवान् बादरायणो मन्यते। प्रतीकालम्बनास्तु अचेतनमिश्रं केवलं हिरण्यगर्भादिदेवतान्तरं सिंहो देवदत्त इतिवद्ब्रह्मदृष्टयोपासते; उपासनसिद्धौ तत्तद्देवतान्तरं प्राप्नुवन्ति; ते च पुनरावर्तन्ते, परब्रह्मोपगताः शुद्धात्मस्वरूपोपगताश्च न पुनरावर्तन्ते इति बादरायणमतम्।

'तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' (छा. ५-१०-१) ति श्रुतेः परब्रह्मोपासकानां निरवयवशुद्धात्मस्वरूपनिष्ठानां चार्चिरादिमार्गगमनबोधन-परत्वनिर्णयात्। इमं चार्थमाह श्रुतिन्यायेन तत्क्रतुश्चेति-तस्योपासकस्य यद्देवताविषयकः क्रतुः स्यात् स तादृक् प्रेत्य भवति। तथा च श्रुतिः

'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा. ३-१४-१)

इति अचिन्मिश्रदैवतं केवलमचिद्वस्तु चोपासीनानां तत्क्रतुन्यायेनैव पुनरावृत्तिरवर्जनीयेति सिद्धम्।

## विशेषं च दर्शयति ॥४-३-१५॥

किञ्च

'यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति' (छा. ७-१-५)

इत्यादिका श्रुतिः नामादि प्राणपर्यन्तोपासकानामर्चिरादिगत्यनपेक्षं परिमितफलविशेषं दर्शयति। तस्मादचेतनमिश्रं देवादिकं केवलमचेतनं वस्तु वा ब्रह्मदृष्ट्या ब्रह्मदृष्टिवियोगेन च य उपासते न तानातिवाहिको देवगणो गमयति, किन्तु परब्रह्मोपासितॄन् प्रकृतिवियुक्तं शुद्धात्म-रूपमक्षरात्मतयोपासीनांश्च स गणोऽर्चिरादिमार्गेण नयति।

हिरण्यगर्भलोकप्राप्तिवचनं तत्र निवासवचनं च प्रबलपुण्यकर्मिपरं तदुपासकपरं च वासनायुक्तपरब्रह्मोपासकपरं चापि बोध्यमिति निश्चीयते।

इति
श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दनिविरचिते
व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने
चतुर्थाध्यायस्य तृतीयः पादः समाप्तः ॥

॥ श्रीनारायणमुनये नमः ॥

## चतुर्थाध्याये चतुर्थपादः

### सम्पद्याविर्भावाधिकरणम् ॥४-४-१॥

### सम्पाद्याविर्भावः स्वेन शब्दात् ॥४-४-१॥

पूर्वत्रार्चिरादिना मार्गेण परविद्यावतां हिरण्यगर्भत्रिलोचनादिदेवतास्थानातीतं पुरुषोत्तमाभिधस्य परब्रह्मणो नारायणस्य परमसुखरूपं ब्रह्मशब्दवाच्यं पदं प्राप्यं निरूपितं प्रकृतिवियुक्तमात्मानमक्षरब्रह्मात्मकतयोपासीनानामपुनरावृत्तिलक्षणागतिश्च निरूपिता; इह परब्रह्मप्राप्तानां स्वरूपाविर्भावादिप्रकारो निरूप्यते ।

'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते'

(छा. ८-१२-३ / छा. ८-३-४)

इति परंज्योतिः सर्वोत्कृष्टं प्रकाशबहुलावृतं नारायणस्वरूपं प्राप्तस्य जीवस्योपासितुः स्वरूपाविर्भाव उच्यते । तच्च स्वरूपं तस्य तत्कालसंभूतं पूर्वसिद्धं वेति संशयः । न पूर्वसिद्धं किन्तु अभिनिष्पत्तिश्रवणात् देवादिस्वरूपवदागन्तुकमेव । पूर्वसिद्धत्वे च कुतोऽस्य संसारबन्धः, अतस्तदुपासनजन्यमुक्तिफलवदाविर्भूतं स्वरूपं त्वागन्तुकमेवेति पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः- परब्रह्मस्वरुपं प्राप्तस्य जीवस्यानाद्यविद्यारूपमलतिरोहितं चैतन्यस्वरूपं पूर्वं वर्त्तमानमेव मलरूपावरणापगमात्प्रकाशबहुलावृतमाविर्भवति स्वेन शब्दात्-

'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. ८-१२-३ / छा. ८-३-४)

इति स्वेन रूपेणेति विशेषणशब्दात् तथावगम्यते । अन्यथा हि देवादि स्वरूपवदागन्तुकस्यापि स्वरूपस्यात्मरूपत्वाभावात् स्वेनेति विशेषणमनर्थकं स्यात् ।

अत्रायमाशयः भक्तानुग्राहकस्य परब्रह्मणो नारायणस्य प्रसादेन स्वाविद्यारूपे मले विगलिते सति शुद्धे जीवात्मन्येव परमात्मध्यानबलेन तत्समानगुणा तत्परिचर्यार्हा पार्षदरूपा भागवती तनुः कीटपेशस्कृत्स्वरूपापत्तिन्यायेन प्रादुर्भवति, न देवादितनुवदात्मनः सकाशाद्भिन्नेयमुपपद्यते अविद्यारूपमलस्यानादित्वाज्जी वस्थानादिसंसारबन्धोपपत्तिः ।

अतःस्वाभाविकमेवाविद्यामुक्तस्य स्वरूपं परमात्मध्यानबलेन चिदानन्दघनं सर्वज्ञत्वादिगुणविशिष्टं भागवतीतनुसंज्ञमाविर्भवति, केवलात्मनिष्ठस्य त्वक्षरतेजसि निरवयवत्वेन लीनत्वमेव भवतीति परब्रह्मोपासनादक्षरब्रह्मोपासने कनीयस्त्वं श्रुयते स्मर्यते च

'ततो भूय इव ते तमो ये उ विद्यायां रताः' (ईशा. ९) इति;

अस्या अर्थः ततोऽन्यस्यां विद्यायां केवलाक्षरात्मोपासनायां ये रतास्ते भूयो बहुतरं तम इवाज्ञानसदृशं निरवयवं घनतेजोमयं ब्रह्म सुषुप्तिभूतमक्षरात्मस्वरूपं प्रविशन्तीति;

'कृष्णस्यानुग्रहो यस्मिन्स तेजसि तमीक्षते ।
केवलं तेज एवान्ये पश्यन्ति न तु तं मुने' ॥ (वा.मा. १७-७) इति,
'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्' (भा.१-५-१२) इति ।
सूत्रार्थवर्णनम्; नारायणध्यानबलेन तं संपद्य स्वेन रूपेण शुद्धजीवात्ममय्या भागवती तन्वा भक्तस्याविर्भावोऽगम्यते; कुतः स्वेन रूपेणाभिनिष्पद्यते इतिशब्दात् । किञ्च-

## मुक्तः प्रतिज्ञानात् ॥४-४-२॥

आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि मलविनिर्मुक्तस्य विद्याबलेनापरिच्छिन्नानन्दाद्याविर्भाव उच्यते
'एतं त्वेवं ते भूयोऽनुव्याख्यास्यामि' (छा. ८-९-३)
इति प्रजापतिवाक्ये पूर्वं जागरिताद्यवस्थारूपमलप्रयुक्तस्य पश्चात्तद्विनिर्मुक्तस्य शुद्धस्य जीवात्मन एव मुक्त इति वक्तव्यतया प्रतिज्ञानात् । किञ्च-

## आत्मा प्रकरणात् ॥४-४-३॥

'ते भूयोऽनुव्याख्यास्यामि' (छा. ८-९-३)
इति वाक्ये पूर्वप्रकृतापहतपाप्मत्वादिगुणक आत्मापरविद्याबलेन प्राप्तायां मुक्तावस्थायामेव व्यक्तव्यः, न तु बद्धावस्थायामिति 'उत्तराच्चेदाविर्भूतस्वरुपस्त्वित्यत्राभिहितात्प्रकरणादवगम्यते। य आत्मा अपहतपाप्मेत्यादि प्रकृत्यैव 'भूयोऽनुव्याख्यास्यामी'त्युक्तत्वात्परमात्मप्राप्तिबलेन प्रादुर्भूतापहतपाप्मत्वादिगुणको मुक्त आत्मा परब्रह्मसमानधर्मः पार्षद इति सिद्धम् ।

अविभागेनदृष्टत्वाधिकरणम् ॥४-४-२॥

## अविभागेन दृष्टत्वात् ॥४-४-४॥

पूर्वसूत्रे ब्रह्मगुणस्वरूपसदृशे मुक्तस्य गुणस्वरूपे इति प्रतिज्ञातं तत्सादृश्यं मुक्तस्योपपद्यते नवेति विचारः । किं प्राप्तं
'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वेता. ६-८)
'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' (महो. १-१)
'एकमेवाद्वितीयं' (छा.६-२-१)
'न तिष्ठति संदृशे रूपमस्य' (श्वेता.४-२०) इति,
'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' (गी.१५-१८)
निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः' (भा. २-४-१४)
इत्यादिश्रुतिस्मृतिषु परब्रह्मेतरस्य तत्सादृश्यनिषेधात् कस्यचिदपि बद्धस्य मुक्तस्य वा

तत्साद्दश्यमनुपपन्नमित्येवं प्राप्ते सिद्धान्त उच्यते-मुक्तस्य ब्रह्मणा साद्दश्यमस्ति; कुतः

'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. ३-१-३)

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । (गीता. १४-२)

बहवो ज्ञानतपसा पूता मद्भावमागताः' (गीता. ४-१०)

इत्यादिषु मुक्तस्य ब्रह्मगुणस्वरूपाविभागेन ब्रह्मसमानत्व द्दष्टत्वात्; अतो

'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिना परब्रह्मसाधर्म्यमेवोच्यते । तत्समानगुणरूपो मुक्त आत्मा पार्षदतया निरतिशयानन्दं परब्रह्मस्वरुपं सेवमानस्तत्सुखमनुभवति क्वचिदतिप्रेम्णा तस्मिन् विलीयते चेत्तर्हि तु परब्रह्मस्वरूपमविभागेनानुभवतीति निर्णयः ।

'न तत्समश्चाभ्यधिकश्च द्दश्यते' (श्वेता. ६-८)

इत्यादिना मुक्तानां परब्रह्मसाद्दश्यनिषेध इति यदुक्तं तत्तु यथा तारकाणामल्पप्रकाशमयरूपाणां भास्करसाद्दश्यं तद्वज्ज्ञेयम् । मुक्तानां परब्रह्मणा साद्दश्योक्तिस्तु तारकाणां प्रकाशरूपधर्मलेशतया सूर्यसाद्दश्यमिव परब्रह्मधर्मलेशप्राप्त्या ज्ञेया तथा तेषां स्वतन्त्रतया जगद्व्यापाराद्यभावादपि भोगमात्रसाम्यलिङ्गाच्चेति वक्ष्यमाणेन सूत्रेण परब्रह्म इव तेषां सकलकामावाप्तिरभिहिता, अतोऽपि तत्साम्यमवगम्यते; तथा श्रूयते

'सोऽश्नुते सर्वान्कामन् सह ब्रह्मणा विपश्चित' (तै.उ.आनं. अनु. १) इति ।

एवं मुक्तानां ब्रह्मणा साद्दश्यं चाविरुद्धम् ।

ब्राह्माधिकरणम् ॥४-४-३॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥४-४-५॥

पूर्वत्र स्वयंप्रकाशमपहतपाप्मत्वादिगुणविशिष्टं च ब्रह्मसद्दशं मुक्तानां स्वरूपमाविर्भवतीत्युक्तम्, तदुभयविशिष्टस्वरूपत्वं संभवति नवेति संशयः ।

एवं सति मतान्तरेण पूर्वपक्षः प्रवर्तते-स्वेन रूपेणेति स्वरूपाविर्भावो ब्राह्मेण-ब्रह्मसंबन्धिनाऽपहतपाप्मत्वादिकेन श्रुयते। दहर विद्यायामाम्नातास्ते ब्रह्मगुणाः प्रत्यगात्मन्यपि सन्तीति प्रजापतिवाक्ये य आत्मा अपहतपाप्मेत्याद्युपन्यासात्

'जक्षत् क्रीडन् रममाणः' (छा. ८-१२-३)

इत्यादिश्रवणाच्चावगम्यते; अतो ब्रह्मणा गुणसाम्यमिति जैमिनिर्मन्यते ।

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥४-४-६॥

चितितन्मात्रेण चैतन्यमात्रेणात्मनः स्वरुपाविर्भावोऽगम्यते न तूक्तगुणैः । कुतः तदात्मकत्वात्

'स यथा सैंधवघनोऽन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मा अन्तरोऽबाह्यः

कृत्स्नः प्रज्ञानघन एव विज्ञानघन एव' (बृ. ६-५-१३)

इति तावन्मात्रकत्वावधारणात् । एवं विज्ञानस्वरूपमात्रेण साम्यमित्योडुलौमिराचार्यो मेने । एवं मुक्तात्मसु मतद्वयोक्तोभयपक्षदर्शनात् गुणसाहित्येन गुणराहित्येन च सविशेषत्वं निर्विशेषत्वं च सिद्धम् । एवं च सति युगपदुभयपक्षासंभवाद्देहत्यागानन्तरं सद्य एव परमात्मोपासनबलेन स्वस्वरूपमात्राविर्भावान्निर्विशेषत्वं, ततः परं चिरकालेन परमात्मगुणानामाविर्भावात्स-विशेषत्वमिति मतान्तरनिर्णयः । सांप्रतं भगवान् बादरायणः स्वमतसिद्धान्तमाह-

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥४-४-७॥

बादरायणस्त्वेकान्तोपासनेन परब्रह्मस्वरूपमापन्नस्य मुक्तस्य स्वरूपे ह्युभयश्रुत्यवग-तगुणप्रकाशद्वयं देहविनाशानन्तरक्षण एव युगपदाविर्भवतीति मन्यते । तथाहि

'विज्ञानघन एव'(बृ. ४-४-१२)

इति श्रुतिस्तदेकान्तोपासनेन देहापगमानन्तरकाल एवोपलब्धस्वविषयस्वस्वरूपप्रकाशक आत्मेति बोधयति; प्रजापतिवाक्ये

'य आत्मापहतपाप्मा' (छा. ८-१-५)

इत्याद्युपन्यासोऽपि, अतः पूर्वेषां दहरविद्याम्नातानामात्मशब्दवाच्य परमात्मविषयाणामपहत-पाप्मत्वादिगुणानां तत्र देहप्रहाणानन्तरक्षण एव सद्भावं परमात्मोपासनेनावगमयति; अतो युगपदाविर्भूतमुभयप्रमाणसिद्धमस्य स्वरूपे द्वयमविरोधं परस्परविरोधशून्यमित्युभय-विशिष्टस्वरूपं समुचितम्; अतो विज्ञानरूपत्वेन स्वयंप्रकाशमपहतपाप्मत्वादिपरमात्मगुणयोगात् कल्याणगुणविशिष्टं च ब्रह्मसदृशं मुक्तस्वरूपमिति युक्तमिति तन्मतम् ।

सङ्कल्पाधिकरणम् ॥४-४-४॥

## सङ्कल्पादेव तच्छ्रुतेः ॥४-४-८॥

पुर्वत्र मुक्तस्य परब्रह्मप्राप्त्या प्रादुर्भूतस्वरूपस्य सत्यसङ्कल्पत्वादिकमभिहितं तत्केवलस्वतंत्रतया उत परब्रह्मानुग्रहदृष्टिसंपादितस्वतन्त्रत्वेन वर्तते इति सन्देहः । किं तावत्प्राप्तं कर्दमादिमुक्तानां केवलस्वतन्त्रत्वेनैव स्वसंकल्पादिसिद्धिरितिपूर्वपक्षे प्राप्ते सिद्धान्तं वदामः - परब्रह्मोपासनेन मुक्तभावमुपगतानां कर्दमादीनां भगवदनुग्रहकृपाकटाक्षरसंपादित-स्वतन्त्रत्वसम्भूतात् सङ्कल्पादेव-सङ्कल्पमात्रेणैव सकलभोग्यवस्तुसिद्धिरवगम्यते । कुतः तच्छ्रुतेः-

'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' (छा. ८-१२-३),

'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा. ८-२-१)

इति तेषां स्वरुपाविर्भावसत्यसङ्कल्पत्वादिश्रवणात् विद्यासामर्थ्याद्धार्दानुगृहीत इत्यधिकरणांश वचनाच्च

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' (गीता. १४-२६)

इति स्मरणाच्च नारायणानुग्रहदृष्टिसंपादितस्वतन्त्रत्वानां मुक्तानां सङ्कल्पमात्रमेव समस्तभोग्य-वस्तुसंपादने हेतुः, नतु हेत्वन्तरापेक्षा; अतः केवलस्वतन्त्रतया सत्य सङ्कल्पत्वादिकं नारायणस्यैवास्ति, इतरेषां तु तदनुग्रहदृष्ट्या संभवति न त्वितरथेति निश्चीयते ।

## अत एव चानन्याधिपतिः ॥४-४-९॥

किञ्च यत एव नारायणानुग्रहेण ब्रह्मभावमपहतपाप्मत्वादिगुणगणं चोपगतः अत एवानन्याधिपतिः-न विद्यतेऽन्यः परब्रह्मेतरश्चेतनाचेतनकलापोऽधिपतिर्नियामको यस्य एवंभूतः स्वतन्त्रो नारायणपार्षदाभिधेयो मुक्तगणः कदाचिदपि मायाकालकर्माधीनो न भवति; अतोऽयमनन्याधिपतिः ।

### अभावाधिकरणम् ॥४-४-५॥

## अभावं बादरिराह ह्येवम् ॥४-४-१०॥

पूर्वत्र मुक्तस्य स्वयंप्रकाशत्वं सत्यसंकल्पत्वादिवैशिष्ट्यं चोपपादितम्; इह तस्य सशरीरत्वमशरीरत्वं चोभयं वेति विचारः प्रवर्तते । बादरिस्तावत् मुक्तस्य देहेन्द्रियाद्युपकरणाभावं मेने; कुतः आह ह्येवं

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव
सन्तं न प्रियाप्रिये स्पृशतः' (छा. ८-१२-१)

इति शरीरसंबन्धे दुःखस्यावर्जनीयत्वमभिधायास्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति मुक्तस्य शरीरराहित्यं श्रुतिरेव ब्रवीति । स्मृतिरप्याह

'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्' (भा. ७-१-३४) इति ।

## भावं जैमिनिर्विकल्पामननात् ॥४-४-११॥

जैमिनिस्तु मुक्तस्य देहन्द्रियादिभावं मेने; कुतः विकल्पामननात् ।

'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' (छा. ७-२६-२)

इत्यादौ विविधः कल्पो भेद आम्नायते, अत एक रूपस्याच्छेद्यस्यात्मनो वैविध्यासंभवाच्छरीरद्वारेण विविधत्वं श्रूयते इत्येवं प्राप्ते भगवान् सूत्रकारः स्वमतेन सिद्धान्तं

ब्रवीति-

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥४-४-१२॥

अत उभयश्रुतेरुभयविधमशरीरत्वं सशरीरत्वं च मुक्तस्य। तत्राशरीरत्वं प्राकृतशरीरनिषेधतयावगन्तव्यं सशरीरत्वं च दिव्याप्राकृताविनाशिशरीरसहिततया बोध्यमिति भगवान् बादरायणो मन्यते। द्वादशाहवत्-यथा

'द्वादशाहमृद्धिकामा उपेयुः' (आप.श्रौत.१-१७)

'द्वादशाहेन प्रजाकामं न याजयेदि'त्युभयश्रुतेर्विधीनिषेधौ भवतस्तद्वत् यथा पुरुषोत्तमो लीलार्थं धर्मदशरथवसुदेवकश्यपादिपितृप्रभृतिकं सृष्ट्वा तैः सह मनुष्य धर्मरूपलीलारसं भुङ्क्ते। यथा च विधिपरिहृतवत्सगोपादिसदृशरूपाणि कृत्वा रमते तथा मुक्तात्मनोऽपि स्वेच्छया सर्वं संभवति। नन्वात्माणुपरिमाण इत्यभिहितं कथमणुमात्रस्य तस्यैकस्यानेकदेहेष्वात्माभिमानसंभव इत्याशङ्कयामाह-

प्रदीपाधिकरणम् ॥४-४-६॥

## प्रदीपवदावेशस्तथाहि दर्शयति ॥४-४-१३॥

सूचितं हि पूर्वत्र मुक्तात्मनोऽपि स्वेच्छयानेकशरीरपरिग्रहणसामर्थ्येन व्यापकत्वं तदिह युज्यते नवेति विचार्यते।

'सर्वेषु लोकेषु कामचारो भवति' (छा. ७-२५-२),

'इमान् लोकान् कामान्नीकामरूप्यनुसंचरन्' (तै.उ.भृ. अनु. १०-५)

इत्यादिषु मुक्तस्य परिच्छिन्नतया संचारावगमात् न व्यापकत्वमुचितम्; अतो बहुशरीरपरिग्रहणं क्रमेणैव न युगपदिति पूर्वः पक्षः।

सिद्धान्तस्तु प्रदीपवत्-यथा घटाद्यावृतस्य प्रदीपस्य घटाद्यावरणापाये तस्यैकस्यैकदेश-वर्तिनोऽपि स्वप्रभयानेकप्रदेशेषु प्रवेशस्तथा परविद्याबलेनाविद्यारूपावरणापाये परमात्मसाधर्म्यं प्राप्तस्यैकदेशवर्तिन एकस्यापि मुक्तात्मनः स्वप्रभारूपेण ज्ञानेनानेकशरीरेष्वावेशः। यथा संकल्पमात्माभिमानानुगुणं व्यापकत्वं तथाहि दर्शयति श्रुतिः

'वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' (श्वेता. ५-९) इति; तथा स्मृतिश्च

'पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि' (भा. १-२-२) इति। अत्र मुक्तानां स्वेच्छयैव देहान्तरप्रवेशः, बद्धानां तु कर्माधीनतयैवेत्युभयेषां वैषम्यं विज्ञायते।

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥४-४-१४॥

ननु ब्रह्मप्राप्तस्यान्तरबाह्यज्ञानलोपमाह श्रूतिः

'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ. ६-३-२१)

इति कथं तस्य ज्ञानरूपया प्रभया व्याप्तिरुच्यते इति न शङ्क्यम्; कथमिति चेत्तत्राह नेदं वेदनाभावबोधकं श्रुतिवचनं मुक्तविषयम्, किन्तु बद्धजीवस्यास्वाप्ययसंपत्त्योः स्वाप्ययः सुषुप्तिः संपत्तिर्मरणं च तयोर्मध्येऽन्यतरात्र भारतपौराणिकी भणितिः ।

अनिन्द्रिया निराहारा अनिस्पन्दाः सुगन्धिनः ।
एकान्तिनस्ते पुरुषाः श्वेतद्विपनिवासिनः ॥
दृष्टा वः पुरुषाः श्वेताः सर्वेन्द्रियविवर्जिता'। इति
'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्' (भा. ७-१-३४) इति,
'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ।
श्यामावदाताः शतपत्रलोचनाः पिशंगवस्त्राः सुरुचः सुपेशस'॥(भा. २-९-१०,११)

इति

'अतीन्द्रिया निर्गतसर्वपापा निष्पन्दहीनाश्च सुगन्धिनश्च ।
द्विबाहवः केऽपि चतुर्भुजाश्च श्वेताश्च केचिन्नवनीरदाभाः ॥
पद्मच्छदाक्षाः सममानगात्राः सुरूपदिव्यावयवाः सुसाराः ।
विकीर्णकेशाश्च सदा किशोराः सद्भिश्च चिह्नैर्निखिलैरुपेताः ।
सरोजरेखाङ्कितपाणिपादाः षडूर्मिहीना मिहिरातितेजसः।
सितांशुका ध्यानपराश्च सौम्याः कालोऽपि येभ्यो भयमेति नित्यम् ॥

सावर्णिरुवाच-

'अतीन्द्रिया निरतंका अनिष्पन्दाः सुगन्धिनः ।
के ते नराः कथं जातास्तादृशाः का च तद्गतिः ॥
श्वेतद्वीपः पयोऽम्भोधौ वर्तते हि धरातले ।
तद्वासिनामपि कथं प्रोक्ताऽतीन्द्रियता त्वया ।
ये ब्रह्मण्यक्षरे धाम्नि सच्चिदानन्दरूपिणि ।
स्थिताः स्युश्चिन्मया मुक्तास्ते तथा स्युर्नहीतरे ॥
एतं मे संशयं छिन्धि परं कौतूहलं हि मे ।
त्वं हि सर्वकथाभिज्ञस्ततस्त्वामाश्रितोऽस्म्यहम् ॥

स्कन्द उवाच -

एकान्तोपासनेनैव प्राकल्पेषु रमापतेः ।

ये ब्रह्मभावं संप्राप्ता अजरामरतां गताः ॥
अक्षराख्याः पुमांसस्ते श्वेतद्वीपेऽत्र धामनि ।
सेवितुं वासुदेवं तं स्थिता देवर्षिणेक्षिताः ॥
प्राप्ते प्रलयकाले तु पुनश्चाक्षरधामनि ।
स्थास्यन्ति ते स्वतन्त्राश्च कालमायाभयोज्झिताः' ॥ (वा. मा. ४ / १४-२३)

इत्यादिषु ब्रह्मभावमुपगतानां मुक्तानामदेहत्वं सदेहत्वं च निर्णीतम्; एवं भगवद्धाम्नि मुक्तानां सशरीरत्वाशरीरत्वप्रकारं निरूप्य सांप्रतं तेषां ततोऽत्रागमनप्रकारो वर्ण्यते-

## तन्वभावे सन्ध्यवदुपपत्तेः ॥४-४-१५॥

भगवति परब्रह्मणि निष्कारणनिरवधिकातिशयदयालुत्वाज्जनकल्याण-निष्पादनादिकार्यचिकीर्षावशतया तेन स्वस्थानादिह प्रेषितस्य यस्य कस्यचिन्मुक्तस्य तन्वभावे स्वेच्छोत्थसंकल्पसंगृहीतस्थूलशरीराद्युपकरणाभावेऽपि तत्सृष्टैस्तैरूपकरणैस्तच्चिकीर्षितस्य जनकल्याणनिष्पादनादिकार्यस्योपपत्तेः। सत्यसंकल्पोऽपि स्वयं तानि न सृजति, एतद्दृढीकर्तुं संध्यवदिति दृष्टान्तं बद्धपुरुषस्य स्वप्ने स्वकर्मफलभोगार्थं स्वान्तर्यामिणा समर्पितोपकरण-मात्रपरतया योजयति । यथा संध्यो जाग्रत्सुषुप्त्योः संधिभवो यःस्वप्नस्तत्र जातं यद्राज्याद्यल्पसुखं तस्य तत्सृष्टै रथाद्युपकरणैरेव तस्य भोगोपपत्तिर्नतु स्वसृष्टैस्तैस्तद्वत् ।

## भावे जाग्रद्वत् ॥४-४-१६॥

मुक्तेष्वेकान्तोपासनेनापहतपाप्मत्वाद्यष्टभगवद्गुणाविर्भावोक्तेरितरतदीयगुणा-विर्भावोपलक्षणत्वादाविर्भूतापारकारूण्यवश्यतया भगवत्स्वरूपबोधनेनानेकजननिःश्रेयसं विधातुं यः कश्चिन्मुक्तस्तदादेशमन्तरापि यदि कदाचिद्ब्रह्मपुरादिह यियासति तदा स्वसङ्कल्पादेव स्वसृष्टदेवमनुष्यशरीराद्युपकरणभावेङ्गीकृते सति जाग्रद्वत्-जागरितावस्थायां बद्धपुरुषस्य स्वसंपादितोपकरणैर्भोगवन्मुक्तोऽपि स्वसृष्टस्थुलशरीराद्युपकरणैः स्वाश्रितजनार्पितान् नानाभोगान् यथोचितं भुञ्जानस्तेषां भगवत्स्वरूपबोधनाय स्वस्वधर्मपथे तदुपासनापथे च प्रवर्तयन् सन् तन्निःश्रेयसं विदधाति । किञ्चापेक्षमेकापेक्षम्; तथाहि-

'नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि' (छा. ८-११-१)

इति, सुषुप्तौ

'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' (बृ. ४-४-१२)

इति मरणे चानया श्रुत्या तथैव तदाविष्कृतं हि ततो बद्धजीवविलक्षणतयाभिहितस्य मुक्तस्य सुषुप्तिमरणयोर्नाज्ञत्वादिकं किन्त्वविद्यारूपमलतिरोधानेन नारायणोपासनेन च सर्वज्ञत्वादिगुण-वैशिष्ट्यमस्ति; अतो न मुक्तात्मनि ज्ञानादिनिषेधसंभव इति निश्चीयते ।

## जगद्व्यापारवर्जाधिकरणम् ॥४-४-७॥

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥४-४-१७॥

उक्तं नारायणेन सह साम्यं मुक्तानां स्वप्रकाशत्वव्यापकत्वसर्वज्ञत्वादिभिस्तथा सति जगत्सृष्ट्यादावपि साम्यं दुर्वारम्

'परमं साम्यमुपैति' (मुण्ड. ३-१-३)

इति निर्विशेषश्रवणात्; जगत्सृष्ट्यादिसाम्याभ्युपगमे च परब्रह्मानेकत्वावगमात्त-स्याद्वितीयत्वाभावप्रसंगः, अतः कीदृशं साम्यं नारायणेन सह मुक्तानां विवक्षितं जगत्सृष्ट्यादिव्यापारयुक्तं तद्वर्जं वेति संशयः किं प्राप्तं

'स यदि पितृलोककामो भवति' (छा. ८-२-१)

इत्यादिषु संकल्पमात्रम् पितृलोकादिसृष्टिसामर्थ्यश्रवणात्

'इमान् लोकान्कामान्नीकामरूप्यनुसंचरन्' (तै. उ. भृ. अनु. १०-५)

इत्यादिवाक्येषु सर्वत्र व्यापारश्रवणाच्च नारायणसाम्ये संकोचायोगेन मुक्तानां जगत्सृष्ट्यादिव्यापारोऽप्यस्तीति प्राप्ते ब्रूमः- मुक्तानां सर्वज्ञत्वादिगुणलेशतया नारायणसाम्येऽपि जगद्व्यापारवर्जं चेतनाचेतनात्मकजगत्सृष्टिस्थितिनियमनादिव्यापारं वर्जयित्वैव परब्रह्मभोगमात्रे तदनुग्रहेणैव स्वातन्त्र्यं भवति। ननु यतोऽक्षरपुरुषादयो मुक्ता अपि स्वतन्त्रतया जगत्सृष्टयादिव्यापारं कुर्वन्ति, अतो जगद्व्यापारवर्जमिति कुत उक्तमिति चेत्तत्राह-

'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' (तै. उ. भृ. अनु. १-१),

'सदेव सौम्येदमग्र असीत्' (छा.६-२-१),

'तदैक्षत बहुस्यां प्रजायेय' (छा.६-२-३),

'ब्रह्म ह वा इदमेकेमवाग्र आसीत्' (बृ. १ - ४ - ११ पाठभेदः),

'आत्मैवेदमग्र आसीत् पुरुषविधः' (बृ. ३-४-१),

'एको ह वै नारायण आसीत्' (महो. १-१),

'हन्ताहमिमास्तिस्त्रो देवता अनेन जीवेनात्मनानुप्रविश्य
नामरूपे व्याकरवाणि' (छा. ६-३-२) इति,

'पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्' (भा. ३-५-२६),

'योऽस्योत्प्रेक्षक आदिमध्यनिधनः' (भा. १०-८७-५०)

इत्यादिषु जगदुद्भवादिकर्तृबोधकश्रुतिस्मृतिवाक्येषु स्वतन्त्रतया नारायणस्यैव प्रकरणात् असन्निहितत्वाच्च तेषु वाक्येषु मुक्तस्वातन्त्र्यस्य सान्निध्यरहितत्वाच्च नारायणस्यैकस्यैव स्वतन्त्रतया जगदुद्भवादिव्यापारोऽवगम्यते तदितरेषां तु तादधीन्येन। किञ्च तेषां हरिकृपाकटाक्षेणैव भोगमात्र एव स्वतंत्रतया परब्रह्मसाम्यं श्रूयते

'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चित' (तै.उ.आनं. अनु. १)
इति आक्षिप्य परिहरति-

## प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमण्डलस्थोक्तेः ॥४-४-१८॥

'स स्वराट् भवति' (छा. ७-२५-२) इत्यारभ्य
'इमान्लोकान्कामान्नीकामरूप्यनुसञ्चरन्' तै. (उ.भृ. अनु. १०-५)
इत्यादिना प्रत्यक्षेण श्रुत्यामुक्ते व्यापारस्योपदेशात् अस्य जगद्व्यापारसंबन्धोऽस्तीति चेन्न, तत्र कामानिति कामभोगसंबन्धात् आधिकारिकाणां ब्रह्मरुद्रेन्द्रादीनां मण्डलेषु स्थितभोगानुषङ्ग एवोच्यते, अतोऽस्य न जगद्व्यायापारः। तथा सति तस्य भोगानुषङ्गाद्विकारित्वमित्यत आह-

## विकारावर्ति च तथाहि स्थितिमाह ॥४-४-१९॥

चकारोऽवधारणार्थः। जन्ममरणादिविकारेषु न वर्तते इति विकारावर्त्ति विकृतभावानुषङ्गरहितं विशुद्धं निरतिशयानन्दस्वरूपं परब्रह्मैव मुक्तस्य भोग्यमस्ति। तथाहि मुक्तस्य खलु स्थितिमाह श्रुतिः
'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' (तै.उ.आन. अनु. ७-१) इति,
परब्रह्मस्वरूपं हि
'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्मे'त्यादिष्वविकृतं सुखमयं चैव श्रूयते, अतो न विकारिप्रपञ्चसुखसदृशं मुक्तप्राप्यं परब्रह्मसुखम्; को वात्राशयः -आधिकारिकाणां ब्रह्मरुद्रेन्द्रादीनां मण्डलेष्ववस्थितानां जनानां परब्रह्मोपासनोपदेशाय स्वेच्छया सञ्चरमाणः स्वेच्छारूपी विगलितमनुष्यादिदेहाभिमानो मुक्तः सविभूतिकं ब्रह्मानुभवं स्वीकुर्वन्नवतिष्ठते न त्वाधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते अतो; मुक्तानां ब्रह्मानन्दानुभवमन्तरेण जगत्सृष्ट्यादिव्यापारः स्वेच्छया न संभवति।

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥४-४-२०॥

एवमुक्तमर्थं प्रत्यक्षानुमाने श्रुतिस्मृति दर्शयतः
'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै.उ. आन. अनु. १-१),
'भीषास्माद्वातः पवते भीषोदेति सूर्यः
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' (तै.उ.आन. ८-१),
'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृह. ५-८-८),
'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल
एष सेतुर्विधरण एषां लोकानामसंभेदाय' (बृह. ६-४-२२),

'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' (तै.उ.आन. अनु. ७-१),
'एष ह्येवानन्दयति' (तै.उ.आन. अनु. ७),
'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. ३-१-३) इत्यादि श्रुतिकलापः,
'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' (गीता. ९-१०),
'अप एव ससर्जादौ' (मनु. १-८),
'पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्' (भा. ३-५-२६),
'योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो ....यं संपद्य जहात्यजामनुशयी' (भा. १०-८७-५०),
'मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात्
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात्' (भा. ३-२५-४३),
'मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' (गीता. १४-२६),
'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च' (गीता. १४-२७),
'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (गीता. १४-२),
'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः' (गीता. ६-२२)
इत्यादि स्मृतिकलापश्चेत्युभौ कलापौ जगदुद्भवनियमनादिकं नारायणस्यैव कर्म दर्शयतः । मुक्तस्य तु तदनुभवरूपमेव भोगं च । मुक्तस्य परब्रह्मणा सह भोगतुल्यत्वं दर्शयितुमिदं सूत्रमारभते-

अनावृत्त्याधिकरणम् ॥४-४-८॥

## भोगमात्रसाम्यलिङ्गाच्च ॥४-४-२१॥

मुक्तस्य भोगमात्रेणैव परब्रह्मसाम्यमवगम्यते, नतु जगत्सृष्ट्यादिव्यापारेण, कुतः तस्य साम्यस्य लिङ्गात्

'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चित' (तै.उ.आनं. अनु. १)
इति अक्षरं ब्रह्म च प्रकृतिपुरुषौ च जीवेश्वरौ चेति विविधं वस्तु पश्यन्त्या चिच्छब्दवाच्यया ज्ञानशक्त्या युक्तं पुरुषोत्तमशब्दाभिधेयं परब्रह्म विपश्चिदित्युच्यते; यया स्वाभाविक्या स्वरूपस्थितया सर्वान्तर्यामिणो नारायणस्य परब्रह्मणः सर्वज्ञत्वं सर्वकारणत्वमनादिबोधत्वं सकलचेतनाचेतनात्मकत्वं सर्वशक्तित्वमलुप्तदृष्टित्वं सदा स्वतन्त्रत्वं नित्यतृप्तत्वं निरतिशयैश्वर्यवत्त्वं भक्तानुग्राहकत्वमेकान्तिकभक्तयोग्यरसरूपमूर्तित्वं च संभवति ।

स्मरणकीर्तनपरिचर्यादिजनन्यफलस्वरूपांश्च भागवतीतनुसंज्ञेनाप्राकृतेनदिव्यविग्रहेणापिसमश्नुतेमुक्तैः
तथाहिस्मर्यते॥ आत्मारामश्चमुनयोनिर्ग्रंथा अप्युरुक्रमे॥ कुर्वंत्यहैतुकींभक्तिमित्थंभूतगुणोहरिरिति
स्मृतिश्रुतितात्पर्यार्थः एवंश्रुतिप्रमाणात्तुजगद्व्यापारवर्जमित्यधिकरणांत्राद्वचनाच्चभोगमात्रसाम्यंमु
क्तस्यब्रह्मणासहेतिनिश्चीयते॥ अनावृत्तिःशब्दादनावृत्तिःशब्दात्॥ २२॥ उक्तंपरब्रह्मणानारायणेन
साधर्म्यंमुक्तानांभोगादिसाम्यादिहतेषांकदाचिदपिपुनरावृत्तिर्यथायज्ञादिशुभकर्मणादेवेंद्रादिलोका
रूढानांभवतितथाभवतिनवेतिसंदिह्यतेकिंतावत्प्राप्तमितिचेत्तत्राह॥ कामान्नीकामरूप्यनुसंचरन्निति
दिष्वनेकशरीरसंबंधोवगम्यतेमुक्तानांतत्संबंधेसतिपुनरपिशुभाशुभकर्मकर्तृत्वंप्रतीयतेपूर्वकृतस्य
परब्रह्मोपासनस्यबहुकालभोगेनतत्फलक्षयेसतितात्कालिककर्मसंबंधात्पुनरपितत्फलस्वसंसारा
पत्तिर्भवेत्॥ तथाहियथादेवेंद्रादिलोकारूढानांयज्ञादिशुभकर्मक्षयेपुनरावृत्तिर्विप्रादिदेहप्राप्तिश्च भ
वतितथावैकुंठादिपरब्रह्मपदारूढानांभोगपवस्कभोक्तृत्वादिसंबंधेनभोगस्यचोपासनारूपपूर्वपुण्य
कर्मक्षयहेतुत्वेनचतेषांपुनरावृत्तिरूपःसंसारःसंभवतीतिपूर्वपक्षेप्राप्तेसिद्धांतंवदामःसाक्षात्कृतपरब्र

ताद्दग्गुणयुक्तं नारायणशब्दाभिधेयं परं ब्रह्म विपश्चित; तेन सह स तत्समानधर्मा मुक्तोऽपि सर्वान् कामान् रमणसंलापनप्रवेशनादिसुखरूपान् तद्दर्शनस्पर्शनश्रवणस्मरण-कीर्तनपरिचर्यादिजन्यसुखरूपांश्च भागवतीतनुसंज्ञेनाप्राकृतेन दिव्यविग्रहेणापि समश्नुते भुङ्क्ते। तथाहि स्मर्यते

'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरूक्रमे ।

कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' (भा. १-७-१०) इति,

इतिश्रुतितात्पर्यार्थः ।

एवं श्रुतिप्रमाणात् जगद्व्यापारवर्जमित्यधिकरणांशवचनाच्च भोगमात्रसाम्यं मुक्तस्य ब्रह्मणा सहेति निश्चीयते ॥

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥४-४-२२॥

उक्तं परब्रह्मणा नारायणेन साधर्म्यम् मुक्तानां भोगादिसाम्यादिह तेषां कदाचिदपि पुनरावृत्तिर्यथा यज्ञादिशुभकर्मणा देवेन्द्रादिलोकारूढानां भवति तथा भवति नवेति सन्दिह्यते। किं तावत्प्राप्तमिति चेत्तत्राह-

'कामान्नीकामरूप्यनुसञ्चरन्' (तै. उ. भृ. अनु. १०-५)

इत्यादिष्वनेकशरीरसंबन्धोऽवगम्यते । मुक्तानां तत्संबन्धे सति पुनरपि शुभाशुभकर्मकर्तृत्वं प्रतीयते। पूर्वकृतस्य परब्रह्मोपासनस्य बहुकालभोगेन तत्फलक्षये सति तात्कालिककर्मसंबन्धात् पुनरपि तुच्छसुखसंसारापत्तिर्भवेत् । तथाहि यथा देवेन्द्रादिलोकारूढानां यज्ञादि शुभकर्मक्षये पुनरावृत्तिर्विप्रादिदेहप्राप्तिश्च भवति तथा वैकुण्ठादिपरब्रह्मपदारूढानां भोग्यवस्तुर्भोक्तृत्वादिसंबन्धेन भोगस्य चोपसानारूपप्रबलपुण्यकर्मक्षयहेतुत्वेन च तेषां पुनरावृत्तिरूपः संसारः संभवतीति पूर्वपक्षे प्राप्ते सिद्धान्तं वदामः- साक्षात्कृतपरब्रह्मस्वरूपाणां तत्पदारूढानां मुक्तानामनावृत्तिः संसारे पुनरावृत्तिर्न भवति, कुतः शब्दात्-

'एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्तन्ते' (छा. ४-१५-५) इति

'यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे' (भा. ३-२७-२९),

'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' (गीता. १५-६)

'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' (गीता. ८-१६)

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः

सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' (गीता. १४-२)

इत्यादिश्रुतिस्मृतिवचनवृन्दात् । अतो मुक्तानामेकान्तोपासकानां परब्रह्मपदारूढानां न पुनरावृत्तिरवगम्यते । अनावृत्तिः शब्दादिति । द्विरुक्तिस्तु ग्रन्थपरिसमाप्तिद्योतनार्था ।

स्त्रवद्रूपाणां तत्पदारूढानां मुक्तानामनावृत्तिः संसारे पुनरावृत्तिर्न भवति कुतः शब्दात् एतेन प्रतिपाद्यमान
इमं मानवमावर्त्तं नावर्त्तंते इति यद्गत्वा न निवर्त्तंते योगी लिंगाद्विनिर्गमिय यद्गत्वा न निवर्त्तते तद्धाम परमं मम
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतं। नाप्नुवंति महात्मानः संसिद्धिं परमां गताः। मामुपेत्य तु कौंतेय पु
नर्जन्म न विद्यते। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेपि नोपजायंते प्रलये न व्यथंति चेत्यादिश्रुति
स्मृतिवचनवृंदात्। अतो मुक्तानामेकांतोपासकानां परब्रह्मपदारूढानां न पुनरावृत्तिरवगम्यते। अना
वृत्तिः शब्दादिति द्विरुक्तिः सकग्रंथपरिसमाप्तिद्योतनार्था। उच्चैः पीठवरे महासदसि सद्भक्तव्रजानां स्थि
तं सर्वैर्मुक्तगणैः कृतांजलिपुटैः संस्तूयमानं मुदा। बिभ्राणं तुलसीस्रजं वरकरे दक्षे वलक्षांबरं। मुक्तानं
दमुनिर्नमामि तमहं श्रीस्वामिनारायणम्।१। ध्यात्वा भक्त्यंघ्रिपद्मं निजहृदि जनितं स्वामिनारायणस्य
मुक्तानंदेन दुर्गंपुरमधिवसता भाष्यरत्नं मयेदम्। सूत्राणामुत्तमानां रचितमवितथं यद्धि शारीरकाणां मे
धानानंदनामाऽलिखदपि निपुणो मत्कृतो मत्सहायी।२। तत्प्रसादसमवाप्तसद्बुद्धिः साधुसेवनदीक्ष
णाचितः। तर्हि साधुरपि माधवदासस्तावुभावुत मुदाऽधिसिषेवे।३। व्यासाभिप्रायबोधं शुभमिदमखिलं

दा

श्रीहरेःसंप्रसादात्संपूर्णंज्ञातमित्थंक्रमतिरुचिकरंभाष्यरत्नंसुबोधम्।युक्ताःसल्लक्ष्मभिर्येभगवद्गुरुसुरवाःले
शमात्रंमुरारेर्हरिस्यातुंनशक्ताःप्रकटहरिमुरोवीक्ष्यसंतुप्रसन्नाः।।४।।श्रीमन्मौक्तिकपुष्पहारहृदयंश्रीवत्स
लक्ष्मांकितंदेवच्छंदलसंतिकामुखवराकल्पैर्लसंतम्।तंकान्तिस्वरभास्वरांबरधरंयष्टिंकरेबिभ्रतंदिव्या
कारमहंनमामिसहजानंदंहरिंशर्मदम्।।५।।श्रीमत्कौस्तुभमहाराजिरुचिरंकर्णोल्लसत्कुंडलंचंचच्चारु
चलद्विचित्रवसनंप्रोत्फुल्लपद्मेक्षणाम्।तंस्मेरास्यवितर्जितोज्ज्वलतरप्रालेयरश्मिश्रियंवंदेभूषणभूषणां
गमनिशंश्रीनीलकंठंहरिम्।।६।।श्रीमच्चंद्रनिभाननंस्मितसुधासंपृक्तबिंबाधरंमालांश्रीहरिकृष्णमान्वि
तमनंदसेकरेबिभ्रतम्।मंदारस्थलपद्महारततिभिःसच्चंदनैरर्चितंभक्तैःकौस्तुभमत्रोरसंतमनिशंश्रुतांब
रंचिंतये।।७।।अंभोजायतपत्रनेत्रयुगलंस्मेरास्यमिंदीवरश्रेणिश्यामलकोमलांगमुरुधासहृदंहृदस्त
तम्।दिव्यंदीर्घविशालभालतिलकंश्रीभक्तिधर्मात्मजंसर्वाधारमहंनमामिसहजानंदंमुनीशंमुदा।।८।।
इतिश्रीशुद्धैकांतधर्मप्रवर्तकसंसारसिंधुनिमग्नजनवर्गनिष्कासकाधर्मतिमिरविनाशकभास्करप्रकटपुरु
षोत्तमश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचितेव्यासाभिप्रायबोधकेद्वैपायनीयशारीरक

उच्चैः पीठवरे महासदसि सद्भक्तव्रजानां स्थितम् ।
सर्वैर्मुक्तगणैः कृताञ्जलिपुटैः संस्तूयमानं मुदा ॥
बिभ्राणं तुलसीस्त्रजं वरकरे दक्षे वलक्षाम्बरम् ।
मुक्तानन्दमुनिर्नमामि तमहं श्री स्वामिनारायणम् ॥ १ ॥
ध्यात्वा भक्त्याङ्घ्रिपद्मं निजहृदि ललितं स्वामिनारायणस्य ।
मुक्तानन्देन दुर्गं पुरमधिवसता भाष्यरत्नं मयेदम् ॥
सूत्राणामुत्तमानां रचितमविततं यर्हि शारीरकाणाम् ।
गोपालानन्दनामालिखदतिनिपुणो मत्कृतौ मत्सहायी ॥ २॥
तत्प्रसादसमवाप्तसुबुद्धिः साधुसेवनहरीक्षणचित्तः ।
तर्हि साधुरपि माधवदासस्तावुभावुरुमुदाधिसिषेवे ॥ ३॥
व्यासाभिप्रायबोधं शुभमिदमखिलं श्रीहरेः संप्रसादात् ।
संपूर्णं जातमित्थं सुमतिरुचिकरं भाष्यरत्नं सुबोधम् ॥
युक्ताः सल्लक्ष्मभिर्ये भगवदुरुसुखाः लेशमात्रं मुरारे ।
दूरे स्थातुं न शक्ताः प्रकटहरिमुदो वीक्ष्य सन्तु प्रसन्नाः ॥ ४॥
श्रीमन्मौक्तिकपुष्पहारहृदयं श्रीवत्सलक्ष्माङ्कितम् ।
देवच्छंदललंतिकामुखवराकल्पं ललामं सताम् ॥
तं कार्त्तस्वरभास्वराम्बरधरं यष्टिं करे बिभ्रतम् ।
दिव्याकारमहं नमामि सहजानन्दं हरिं शर्मदम् ॥ ५॥
श्रीमत्कौसुमहारराजिरुचिरं कर्णोल्लसत्कुण्डलम् ।
चञ्चच्चारुचलद्विचित्रवसनं प्रोत्फुल्लपद्मेक्षणम् ॥
तं स्मेरास्यवितर्ज्जितोज्जवलतरप्रालेयरश्मिश्रियम् ।
वन्दे भूषणभूषणाङ्गमनिशं श्रीनीलकण्ठं हरिम् ॥ ६ ॥
श्रीमच्चन्द्रानिभाननस्मितसुधासंपृक्तबिम्बाधरम् ।
मालां श्रीहरिकृष्णमार्तिशमनं दक्षे करे बिभ्रतम् ॥
मंदारस्थलपद्महारततिभिः सच्चन्दनैरर्चितम् ।
भक्तैः कौसुमशेखरैस्तमनिशं श्वेताम्बरं चिन्तये ॥ ७ ॥
अम्भोजायतपत्रनेत्रयुगलं स्मेरास्यमिंदीवर-
श्रेणीश्यामलकोमलाङ्गमुरुधा सद्वेदवृन्दस्तुतम् ।
दिव्यं दीर्घविशालभालतिलकं श्रीभक्तिधर्मात्मजम्
सर्वाधारमहं नमामि सहजानन्दं मुनीशं मुदा ॥ ८॥

इति

श्रीशुद्धैकान्तधर्मप्रवर्तकसंसारसिन्धुनिमग्नजनवर्गनिष्कासकाधर्मतिमिरविनाशकभास्कर-
प्रकटपुरुषोत्तम श्रीसहजानन्दस्वाम्युपासकाग्रगण्यमुक्तानन्दमुनिविरचिते
व्यासाभिप्रायबोधके द्वैपायनीय शारीरकसूत्रभाष्यरत्ने
चुतर्थाध्यायस्य चतुर्थः पादः ॥४॥
समाप्तश्चायं चतुर्थाध्यायः ॥४॥
॥ समाप्तमिदं ब्रह्मसूत्रभाष्यरत्नम् ॥
॥ श्रीस्वामिनारायणाय नमो नमः ॥
॥ श्रीहरिकृष्णाय नमो नमः ॥
॥ श्रीसहजानन्दाय नमो नमः ॥



# भाष्यरत्नस्याधिकरणानुक्रमनिर्देशः

## प्रथमाध्यायप्रथमपादः ।



## प्रथमाध्यायद्वितीयपादः ।

## प्रथमाध्यायतृतीयपादः ।



## प्रथमाध्यायचतुर्थपादः ।



## द्वितीयाध्यायप्रथमपादः ।

## द्वितीयाध्यायद्वितीयपादः ।



## द्वितीयाध्यायतृतीयपादः ।

## द्वितीयाध्यायचतुर्थपादः ।



## तृतीयाध्यायप्रथमपादः ।



## तृतीयाध्यायद्वितीयपादः ।

## तृतीयाध्यायतृतीयपादः ।

## तृतीयाध्यायचतुर्थपादः ।

## चतुर्थाध्यायप्रथमपादः ।



## चतुर्थाध्यायद्वितीयपादः ।

## चतुर्थाध्यायतृतीयपादः ।



## चतुर्थाध्यायचतुर्थपादः ।

| ब्रह्मसूत्राकरादिसूचि | |
|---|---|
| अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ | २-३-४२॥ |
| अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ | २-४-१०॥ |
| अक्षरमम्बरान्तधृतेः ॥ | १-३-९॥ |
| अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ | ३-३-३३॥ |
| अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ | ४-१-१६॥ |
| अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ | ३-१-४॥ |
| अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ | ३-३-५३॥ |
| अङ्गित्वानुपपत्तेश्च ॥ | २-२-६॥ |
| अङ्गेषु यथाश्रयभावः ॥ | ३-३-५९॥ |
| अचलत्वं चापेक्ष्य ॥ | ४-१-९॥ |
| अणवश्च ॥ | २-४-६॥ |
| अणुश्च ॥ | २-४-१३॥ |
| अत एव प्राणः ॥ | १-१-२४॥ |
| अत एव च स ब्रह्म ॥ | १-२-१६॥ |
| अत एव च सर्वाण्यनु ॥ | ४-२-२॥ |
| अत एव चोपमा सूर्यकादिवत् ॥ | ३-२-१८॥ |
| अत एव चाग्नीन्धनाद्यपेक्षा ॥ | ३-४-२५॥ |
| अत एव चानन्याधिपतिः ॥ | ४-४-९॥ |
| अत एव न देवता भूतं च ॥ | १-२-२८॥ |
| अतएव च नित्यत्वम् ॥ | १-३-२८॥ |
| अतश्चायनेऽपि दक्षिणे ॥ | ४-२-१९॥ |
| अतः प्रबोधोऽस्मात् ॥ | ३-२-८॥ |
| अतस्त्वितरज्जयायो लिङ्गाच्च ॥ | ३-४-३९॥ |
| अत्ता चराचरग्रहणात् ॥ | १-२-९॥ |
| अति देशाच्च ॥ | ३-३-४५॥ |
| अतोऽन्यापि ह्येकेषामुभयोः ॥ | ४-१-१७॥ |
| अतोऽनन्तेन तथाहि लिङ्गम् ॥ | ३-२-२५॥ |
| अथातो ब्रह्मजिज्ञासा ॥ | १-१-१॥ |
| अदृश्यत्वादिगुणको धर्मोक्तेः ॥ | १-२-२२॥ |
| अदृष्टानियमात् ॥ | २-३-५०॥ |
| अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ | ३-४-८॥ |
| अधिकाररूपशब्दान्तरेभ्यः ॥ | २-३-१३॥ |
| अधिकं तु भेदनिर्देशात् ॥ | २-१-२२॥ |
| अधिष्ठानानुपपत्तेश्च ॥ | २-२-३६॥ |
| अध्ययनमात्रवतः ॥ | ३-४-१२॥ |
| अनभिभवं च दर्शयति ॥ | ३-४-३५॥ |

| | |
|---|---|
| अनवस्थितेरसंभवाच्च नेतरः ॥ | १-२-१८॥ |
| अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ | ४-१-१५॥ |
| अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ | ४-४-२२॥ |
| अनाविष्कुर्वन्नन्वयात् ॥ | ३-४-४९॥ |
| अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ | ३-३-३२॥ |
| अनिष्टादिकारिणामपि च श्रुतम् ॥ | ३-१-१२॥ |
| अनुकृतेस्तस्य च ॥ | १-३-२१॥ |
| अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ | २-३-४७॥ |
| अनुबन्धादिभ्यः प्रज्ञान्तरपृथकत्ववद्दृष्टश्च तदुक्तम् ॥ | ३-३-४८॥ |
| अनुपपत्तेस्तु न शारीरः ॥ | १-२-३॥ |
| अनुस्मृतेरिति बादरिः ॥ | १-२-३१॥ |
| अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ | ३-४-१९॥ |
| अनुस्मृतेश्च ॥ | २-२-२४॥ |
| अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ | ३-२-३६॥ |
| अन्तवत्त्वमसर्वज्ञता वा ॥ | २-२-३८॥ |
| अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ | १-२-१९॥ |
| अन्तस्तद्धर्मोपदेशात् ॥ | १-१-२१॥ |
| अन्तर उपपत्तेः ॥ | १-२-१३॥ |
| अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्॥ | २-३-१६॥ |
| अन्तरा चापि तु तद्दृष्टेः ॥ | ३-४-३६॥ |
| अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ | ३-३-३५॥ |
| अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ | २-२-३४॥ |
| अन्यभावव्यावृत्तेश्च ॥ | १-३-११॥ |
| अन्यत्राभावाच्च न तृणादिवत् ॥ | २-२-४॥ |
| अन्याधिष्ठते पूर्ववदभिलापात् ॥ | ३-१-२४॥ |
| अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ | १-४-१८॥ |
| अन्यथात्वं शब्दादिति चैन्नाविशेषात् ॥ | ३-३-६॥ |
| अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः ॥ | २-१-१२॥ |
| अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ | २-२-७॥ |
| अन्यार्थश्च परामर्शः ॥ | १-३-१९॥ |
| अन्वयादिति चेत्स्यादवधारणात् ॥ | ३-३-१७॥ |
| अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ | २-२-१६॥ |
| अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ | ३-२-२३॥ |
| अपि चैवमेके ॥ | ३-२-१३॥ |
| अपि सप्त ॥ | ३-१-१५॥ |
| अपि स्मर्यते ॥ | १-३-२२॥ |
| अपि स्मर्यते ॥ | २-३-४४॥ |
| अपि स्मर्यते ॥ | |

| प्रमाणानि | आकरः |
|---|---|
| ॐ काराश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा | बृ.भार.पु.पू.ख.५१-१० |
| ॐ नमो नारायणाय | भा. ६-५-२८ |
| ॐ नमो भगवते वासुदेवाय | भा. ४-८-५३, ईश्वरसंहिता अ.२३, पाद्मसंहितायाम् चर्यापादे, वि.पु. १-१९-७८ |
| ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ | वासुदेवोपनिषत् - १ |
| अक्षराख्याः पुमांसस्ते श्वेतद्वीपेऽत्रधामनि | वा. मा. ४ - २२ |
| अक्षरात्परतः परः | मुण्ड. २- १ -२ |
| अक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः | श्वेता. ४-८ |
| अखिलकारकशक्तिधरः | भा. १०-८७-२८ |
| अज्ञानप्रभवं दुःखं ज्ञानं तस्य विनाशकम् | |
| अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्निवृताश्च | मुण्ड. २-१-४ |
| अग्निर्वाक् भूत्वा मुखं प्राविशत् | ऐ. १-२-४ |
| अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव | कठ. २-२-९ |
| अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् | गीता. ८-२४ |
| अग्निना वै होतारश्चक्रं पञ्चजन्यं सुतसं द्विभुजाभ्यां | |
| अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो | कठ. २-१-१२ |
| अचक्षुःश्रोत्रं तदपाणिपादम् | मुण्ड-१-१-६ |
| अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ, नैष धर्मः | म.भा.शा. ३२४-४,५ |
| अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् | भा. ३-१-४४ |
| अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं | तै.ना.उ. अनु.१०-५ |
| अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां | श्वेता. ४-५ |
| अजायमानो बहुधा व्यजायते | तै.आ. ३, पु.सू. २१ |
| अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् | गीता. ४-६ |
| अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः | श्वेता. ४-५ |
| अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य | श्वेता. ३-२० |

| प्रमाणानि | आकरः |
|---|---|
| अणोरणीयान्महतो महीयान् | कठ. १-२-२०/ श्वेता. ३-२० |
| अतीन्द्रिया निर्गतसर्वपापा निष्पंदहीनाश्च सुगंधीनश्च | वा. मा. ४ - १४ |
| अतीन्द्रिया निरातंका अनिष्पंदाः सुगन्धिनः । | वा. मा. ४ - १७ |
| अतो वै खलु दुर्निष्प्रपतरमि | छा. ५-१०-६ |
| अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य | छा. ५-१२-२ |
| अथाकामयमानो योऽकामो निष्काम आसकाम | बृह. ६-४-६ |
| अथात आदेशो नेति नेति | बृ. ४-३-६ |
| अथात आत्मादेश | छा. ७-२५-२ |
| अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापय | कौषी. ३-३ |
| अथ तत उर्ध्वं उदेत्य नैवोदेता नास्तमेते | छा. ३-११-१ |
| अथ तद्यत्रैत्सुप्तः समस्तः संप्रतिपन्नः स्वप्नं न विजानाति | छा. ८-६-३ |
| अथ तस्माद्वा एतदशिष्यन्तः पुरस्तान्चोपरिष्टान्चाद्धिः | छा. ५-२-२ |
| अथ नामधेयं सत्यस्य सत्यम् | बृ. ४-३-६ |
| अथ परा यया तदक्षरमधिगम्यते | मुण्ड-१-१-५,६ |
| अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजा | नारा. उ. १ |
| अथ मुनिः | बृ. ५-५-१ |
| अथ भिक्षाचर्यं चरन्ति | बृ. ५-५-१ |
| अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय | छा. ८-४-१ |
| अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते | छा. ५-१०-३ |
| अथ यो वदेदं जिघ्राणीति स आत्मा मनसैतान् | छा. ८-१२-४,५ |
| अथ य एवं विद्वानग्निहोत्रं जुहोति | छा. ५-२४-२ |
| अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं | छा. ८-३-४ |
| अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं | छा. ५-१०-५,६ |
| अथैतयोः पथोर्न कतरेण च तानीमानि | छा. ५-१०-८ |
| अथ यदतः परो दिवो ज्यातिर्दीप्यते विश्वतः प्रष्ठेषु | छा. ३-१३-७ |
| अथ यदा सुषुप्तो भवति न कस्यचन वेद हि ता नाम | बृ. ४-१-१९ |

| प्रमाणानि | आकरः |
| --- | --- |
| अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म | छा. ८-१-१ |
| अथ वेशंतान्पुष्करिणीः स्रवंतीः सृजते स हि कर्ता | बृ. ६-३-१० |
| अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति | ऐ. आ. ३-२-४ |
| अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं | छा. ४-३-५ |
| अथ हास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् | गौतम स्मृ. अ. १२ |
| अथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसि | छा. ५-१-१३ |
| अथ हैनं श्रोत्रमुवाच यदहं संपदस्मि त्वं तत्संपदसीति | छा. ५-१-१४ |
| अधिकं तु भेदनिर्देशात् | ब्र.सू. २-१-२२ |
| अधिदैवमग्निसूर्यचंद्रांभांसि वायौ लीयन्ते अध्यात्मं | छा. ४-३- |
| अधस्तात्समिधं धारयन्ननु द्रवेदुपरि हि देवेभ्यो धारयति | |
| अनन्येनैव योगेन मां ध्यान्त उपासते | गीता. १२-६ |
| अनादिकालतो जीवो मायया परिवेष्टितः, | बृहद् ब्रह्मसंहिता ४-१०-४६,४७ |
| अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः, प्रत्यग्धामा | भा. ३-२६-३ |
| अनाद्यविद्यायुक्तस्य पुरुषस्य | भा. ११-२२-१० |
| अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुरा | भा. ८-२४-४६ |
| अनाश्रमी न तिष्ठेत्तु दिनकमेपि द्विज' | दक्ष स्मृ. १-१० |
| अनिन्द्रिया निराहारा अनिस्पंदाः सुगन्धिनः, | |
| अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुष | भा. २-१०-१६ |
| अनुम एतां भगवो देवतां शाधि यां देतामुपास्स | छा. ४-२-२ |
| अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि | छा. ६-३-२ |
| अन्तः प्रविष्टः शास्ता जनानाम् सर्वात्मा | तै.आर. ३-११-१,२ |
| अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' | तै.महा. ११-६ |
| अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिण | गीता.२-१८ |
| अन्नमयप्राणमयमनोमयविज्ञानमयाऽऽनन्दमया मे | कृ.यजु.तै.आर. प्रपा.१० अनु.५७ |
| अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् | छा. ६-५-४ |
| अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो | छा. ६-५-१ |

| प्रमाणानि | आकरः |
|---|---|
| अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृतात् अन्यत्र | कठ. १-२-१४ |
| अन्यदार्तमि' | बृ. ५-४-२ |
| अन्योऽन्तरआत्मानन्दमयः स वा एष पुरुषविध एवे | तै.उ.आन.अनु. ५ |
| अप एव ससर्जादौ तासु वीर्यमपासृजत् | मनु. १-८ |
| अपरिमिताध्रुवास्तनु भृत | भा. १०-८७-३० |
| अपरिमेयभग | भा. १०-८७-३८ |
| अपहतपाप्मा | छा. ८-१-५ |
| अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स | श्वेता. ३-१९ |
| अपि चेत्सुदुराचारो भजते मामन्यभावक् | गीता. ९-३० |
| अपोशानमकृत्वा तु यद्भुङ्क्ते द्विजसत्तमः | प्रायश्चित्तमयुखे संवर्तः |
| अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह | छा. ५-१०-६ |
| अमृतमभयं परं च | प्रश्न. ५ -७ |
| अमृतोपस्तरणमसि स्वाहा' तं मन्त्रमुच्चरेत् | |
| अमृतत्वस्य तु नाशास्ति वित्तेन | बृ. ६-५-३ |
| अमृतस्यैष सेतुः | मुण्ड. २-२-५ |
| अयमात्मा ब्रह्म | बृह. ६-४-५ |
| अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते | बृ. ७-९-१ |
| अयं साग्निरिति विश्वामित्रस्य सूक्तं भवति | तै.यजु. काण्ड.५ प्रपाठक.२ अनु.३ |
| अर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न | छा. ४-१५-५ |
| अरण्यमियात् ततो न पुनरेयात् | |
| अव्यक्तात्पुरुषः परः | कठ. १-३-११ |
| अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवञ्च यत् | कठ. १-३-१५ |
| अश्व इव रोमाणि विधूय पापं चन्द्र इव | छा. ८-१३-१ |
| अस्थूलमनन्वमह्रस्वमदीर्घमलोहितमस्नेहमच्छायम् | बृ. ५-८-७ |
| असद्वा इदमग्र आसीत् ततो वै सदजायतेति | तै.उ.आन. अनु. ७-१ |
| अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः, | श्वेता. ४-९ |

